# संस्कृत साहित्ये नलचरितम्



डॉ. इच्छाराम द्विवेदी

# NALA CHARITAM IN SANSKRIT LITERATURE

संस्कृते साहित्ये

# नलचरितम्

इच्छाराम द्विवेदी




नाग प्रकाशक
११ ए, यू. ए. जवाहर नगर, दिल्ली-११०००७

This publication has been brought out with the financial assistance from the Govt. of India, Ministry of Human Resource Development.

नाग प्रकाशक

१. ११ ए/यू. ए. जवाहरनगर, दिल्ली-११०००७
२. ८ ए/ यू. ए. ३ जवाहरनगर, दिल्ली-११०००७
३. जलालपुरमाफी (चुनार-मिर्जापुर), उ० प्र०

ISBN-८१-७०८१-२२९-१

प्रथम संस्करण : १९९०

मूल्य Rs. 73/-

नागशरणसिंह द्वारा नाग प्रकाशक, जवाहर नगर, दिल्ली के लिए प्रकाशित तथा अमर प्रिंटिंग प्रेस, विजय नगर, दिल्ली द्वारा मुद्रित

# समर्पणम्

भारतीय संस्कृति संस्कृत गौरव संवर्द्धन तत्पराणां, सततश्रौतस्मार्त कर्मानुष्ठान व्याप्टतानां, निष्काम कर्मयोगिनां, तपः पूतानां, राष्ट्रपति पुरस्कृतानां मम तातपादानां श्रद्धेयानाम् आचार्य श्री लालबिहारिद्विवेदि महाभागानां प्रातः स्मरणीयानां मातृचरणानां श्रीमती कृष्णा देवी महाभागानां चरणकमलयोः सादरं सप्रश्रयञ्च समर्प्यते ग्रन्थ पुष्पाञ्जलिरयम्—

**येषां मेधा सततनिरता शुद्धविद्याप्रदाने**
**येषां चेतः श्लथयति सदा प्राणिदुःखं प्रपश्य**
**येषां वाञ्छा प्रभवति सदा विश्वकल्याणकर्त्री**
**तेषामङ्घ्रिष्वनिश मयमस्त्वंजलि र्मामकीनः ॥**

# आमुखम्

प्रमोदावहो विषयोऽयं युवकवेः प्राध्यापकवर्यस्य सुरभारतीसमाराधकस्य डा० इच्छाराम द्विवेदमहाभागस्य "संस्कृतवाङ्मये नलचरितम्" इति शीर्षकः शोध प्रबन्धः प्राकाश्यमुपयाति । डा० द्विवेद महाभागेनायं शोधप्रबन्धः राष्ट्रिय संस्कृत संस्थानस्य विद्यावारिधिरित्युपाधये १९८३ ईसवीयेऽब्दे प्रस्तुत आसीत् । १९८४ तम ईसवीयेऽब्दे अयं महानुभावः शोधोपाधिनालंक्रियत ।

काव्यप्रणयनस्य शास्त्रचर्चायाश्चान्योन्यसम्बन्धः । कवयः काव्यानि रचयन्ति सहृदयाः समालोचकाश्च तानि काव्यानि शास्त्रदृशा समीक्ष्य तेषां मूल्याङ्कनं कुर्वन्ति । कदाचित् रचनाकारः शास्त्रकारान् सिद्धान्तविशेष निर्माणार्थं स्वप्रतिभाबलादनुरुणद्धि, कदाचिच्च शास्त्रकृदाचार्यः कवीन् रचनासौष्ठवार्थमनुशास्ति । इत्थं ये काव्यं कर्तुं विचारयितुञ्च जानन्ति तेषां पारस्परिकविमर्शेण साहित्यपरम्परा समृद्धिं भजति । हर्षावहमिदं यद् डा० द्विवेद महाभाग एकतः कविरपरतश्च काव्यसमीक्षकः शास्त्रज्ञोऽस्ति । अनेन महानुभावेन स्वशोधप्रबन्धस्य दशस्वध्यायेषु नलचरितपरकानि पुराणानि, काव्यानि तथा चान्यानि पुस्तकानि व्याप्य स्थितां नलकथामवलम्ब्य या समीक्षा प्रस्तुता तया संस्कृतशोधजगति कश्चिन्नूतन आयामः समुद्घाट्यते । इतः पूर्वं श्री हर्षकृतं नैषधीयचरितमवलम्ब्य, जैनकविमाणिक्यचन्द्रसूरिविरचितं "नलायनम्" अन्यांश्च कांश्चित् नलकथापरकान् ग्रन्थानमवलम्ब्य विद्वद्भिः स्वतन्त्रग्रन्थरूपेण स्व विचाराः प्रस्तुताः । डा० द्विवेदमहाभागस्य शोधप्रबन्धोऽयं विशेषो यदत्र एकस्मिन्नेव ग्रन्थे नैकेषां नलकथापरक ग्रन्थानां तुलनात्मकमध्ययनं लब्धुं शक्यते संस्कृतस्य पाठकैः जिज्ञासुभिश्च पुण्यश्लोकस्य नलस्य वर्णने महाभारतकाराणां पुराणकर्तृणाञ्च कवीनां कथाकर्तृणाच्च महती रुचिरवर्तत । जैनकविभिरपि स्वधर्मसिद्धान्तानां प्रचारार्थं नलस्य चरितमुत्कृष्ट निदर्शनरूपेणाङ्गीकृतम् । कैश्चित् रचनाकारैः नलस्य वैभवसमृद्ध्या साकं दुःखस्यापि वर्णनं कृतं किन्तु श्री हर्षेण नैषधीयचरितमहाकाव्ये तस्य शृंगाररसप्रधानं सुखान्तं वृत्तमुपनिबद्धम् । अद्यत्वे द्यूतबहुलेऽस्मिन्युगे नलचरितस्य काचित् सामाजिकप्रासंगिकता

वरीवर्त्येव । शोधकर्तुः डा० द्विवेदमहाभागस्य शेमुष्या ईदृशः विषयः शोधार्थं गृहीत इत्यसौ स्वशोधदृष्ट्यर्थं विदुषामभिनन्दनीय एव सिद्ध्यति । या कथाधिकाधिकजनेषु प्रचलिता तस्याः सूक्ष्मेक्षिकया परिशीलनं न केवलं वैदुष्यवर्द्धनमपितु सामाजिक संस्काराणामध्ययनमप्यस्ति । संस्कृतमाध्यमेन लिखितेऽस्मिन् शोध प्रबन्धे सुरभारत्याः सरलं सरसं च रूपं प्रायोऽवलोक्यते क्वचिच्च चमत्कारपूर्णं विद्वदुपज्ञेयं चापि रूपमालोकयितुं शक्यते । एतेनास्य विदुषः एकतः पारम्परीणतापरतश्च नवनूतनप्रयोगपरता सिद्ध्यतः ।

अहं परमेश्वरं प्रार्थये यत् सुरभारतीसमाराधनपूतान्तरात्मा विद्वद्वंशप्ररोहः कर्विविद्वान् डा० इच्छाराम द्विवेद महाभागः सदैव समुत्साहवान् सन् सारस्वतसपर्यायां दत्तचित्तो भवतादिति । "अर्वाचीनसंस्कृतम्" नाम्नि संस्कृत त्रैमासिके पत्रे दिल्लीस्थ देववाणी परिषदा प्रकाशिते खण्डकाव्यं-स्फुटकविता-कथा-प्रभृति प्रकाशिता रचना पाठं पाठं य आस्वाद अस्मादृशैः नैकैः संस्कृतानुरागिभिः सम्प्राप्तः, अस्य शोधप्रबन्धस्य प्रकाशनेन स नूनं वृद्धिं गमिष्यति । अहं शोधग्रन्थ लेखकस्य कृतेऽभिनन्दनानि व्याहरामि ।

सम्पादकः विदुषामाश्रवः

अर्वाचीन संस्कृतम् **डा० रमाकान्त शुक्ल**

देववाणी परिषद् दिल्ली

विजयादशमी सं. २०४७

# प्रस्ताविकम्

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**

**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।।**(म०भा० आ० प० १।१)

अहो ! चित्रमेतत् । नलकथा पुराणेषु इतिहास ग्रन्थेषु काव्यादिषु, किं बहुना वैदिक वाङ्मयेष्वपि सुविस्तीर्णा सती समन्तात् सुदूरकालादेव जनमनांसि समान्दोलयन्ती सुबहुशः प्रशस्यते, किन्तु सत्सु बहुषु कथानकेषु किं वैचित्र्यं का जीवनपद्धतिः, को हेतुरस्य नलकथानकस्य येनाप्रतिहतगतिना लोकरुचये नवनवं सत्तत्कथानकं विशेषतो हि कलिजनितदुरितोपशमनार्थे प्रकीर्तितं जातं तथा च चरितनायको नवः जनार्दन इव पुण्यश्लोकत्वेन संस्मृतौ जात इतिप्रश्नकण्डूतिः नैकशो मे मनसि समुत्थिता तत्समाधातुं प्रेरयामास । तत्पुनः सत्याञ्च परिचर्चितायां पुराणतत्त्वविदो मे पितृचरणाः तत्कृते शास्त्रमर्मज्ञानां सहजवत्सलानां पूज्य चरणानां गुरुदेवानां डा० श्री सी० आर० स्वामीनाथन् महाभागानां चरणच्छायायै मां समर्पितवन्तः ।

अथाधीतिकाले मे दृष्टिः वैदिकवाङ्मयात् वाह्यं यावत् न्यक्षिपत्, वैदिक वाङ्मये संकेत रूपेण पुराणेषु सुविस्तृतरूपेण काव्येष्वपि कुत्रचित् संकेतरूपेण कुत्रचिच्च सविस्तरं शक्तिशील सौन्दर्य समन्वितं नलचरितं यत्किंचित् कथावैलक्षण्येन सह संकीर्तितं प्राप्तभभूत् । नलचरितमवलम्ब्य गवेषकाणां सूक्ष्मदृष्टिः प्रकीर्णरूपेण सीमितरूपेण वा तस्यैकमेवपक्षं समुन्मीलयति— संयोगपक्षं वियोगपक्षं वा सांस्कृतिकपक्षं सामाजिकपक्षं वा ऐतिहासिकपक्षं भौगलिकपक्षं वा नैतिकपक्षं धार्मिकपक्षं वा पौराणिकपक्षं काव्यीयपक्षं वाऽन्यान्यपक्षं वा । किन्तु विभिन्नेषु कालेषु विभिन्नेषु देशेषु विभिन्नासु दशासु च वेदे पुराणे तथा काव्ये समुपवृंहितानां नलचरितनामुपरि नहि कस्यापि गवेषकस्य समीक्षात्मिका दृष्टिः पर्यपतत्-यया नलस्य विपुलौदात्त्यं शक्तिशील सौन्दर्यं निकषोपले निकषायितं संभवेत् । फलत इतिहासपुराण काव्यादिषु प्रतिपादितानां नलचरितानां समीक्षात्मकस्याध्ययनस्यावश्यकतामनुभूय तत्सम्बन्धितोऽयं शोध प्रबन्धः प्राणायि ।

वैदिक वाक्ये नडो नैषधः इत्येतेन केवलं नलस्य वैदिक कालीनतेव सिद्धा भवति, तस्य चरितं स्फुटतः प्रभावितं न सलक्ष्यते । पुराणेषु विशेषतो महाभारते च नलचरितं सम्यक्रूपेण परिवृंहितमथ च परिपक्वं समुपलभ्यते । वस्तुतो हि महाभारतं न केवलं नलजीवनदर्शनस्य प्रत्युत समग्र भारतीयजीवनदर्शनस्याकारग्रन्थोऽस्तीति केनेतिहासविदा न ज्ञायते ।

एतादृशः विशालकायो ग्रन्थः निखिले विश्व वाङ्मये नोपलब्धो भवति । स्वीयेषु समग्रेषु स्वरूपेषु विविधाख्यानोपाख्यानानि कथोपकथाः गाथाश्च कुक्षीकुर्वन्नयं ग्रन्थः दीर्घकालतो हि भारतीय जीवन दर्शनस्य पुरुषार्थ चतुष्टय विषयं समुत्सृष्टं संशयं परिहरन्नविहत गत्या प्रशस्यते । अतएव महर्षिणा व्यासेन सोद्घोषं व्याहृतम्—

**धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥**

(म० भा० आ० प० ६२।५३

वस्तुतः महाभारतस्य कृते भारतीय संस्कृतेः विश्वकोष इति नामदानं सर्वथा समीचीनं प्रतीयते । पूर्णरूपेण वेदतत्त्वं ज्ञातुं ज्ञापयितुं चास्य महाभारतस्य रचना महर्षिणा व्यासेन कृता—

**इतिहास पुराणाभ्यां वेदार्थमुपबृंहयेत् ।**
**बिभेत्यल्प श्रुताद्वेदो मामयं प्रहरिष्यति ॥** (आदि पर्व १।२६७)

अस्मादेवकारणान्महाभारतं पुराणानि च पञ्चमवेदत्वेन व्यपदिष्टानि भवन्ति । श्रुति सम्बलितानां समस्तानां धर्माणामुपबृंहणं महाभारते स्पष्टतया समुपलभ्यते । फलतः इदं उत्तरवर्तिनि कालेऽपि कवीनां कृते उपजीव्यत्वेन समादृतं जातम्—

**इतिहास कथोद्भूतं इतरद्वा सदाश्रयम् ।**
**चतुर्वर्ग फलोपेतं चतुरोदात्त नायकम् ॥**
**काव्यं कल्पान्तर स्थायि............॥** (काव्यादर्श दण्डी)

काव्यं लक्षयता महाकविना दण्डिनाऽपि महाभारतादीतिहासप्रोक्तानां नायकानां कथानकानां चोपजीव्यत्वं स्फुटतया समुदीरितं वर्तते । किन्तु 'निरंकुशाः कवयः' इति भणितिसरण्या परवर्तिनः कवयः स्वीयाभीष्ट सम्पादनार्थं पौराणिकानि आख्यानानि यत्र तत्र परिवर्त्य काव्येषु प्रयुक्तवन्तः । सम्प्रति

पाश्चात्य गवेषण संप्रदायानामनुरोधवलात् प्राचीनानां पाण्डुलिपीनां सांस्कृतिकं सम्पादनं प्रायशः प्रचलितमस्ति। विशेषतः विभिन्नेषु स्थानेषूपलब्धासु महा-भारतादि आकर ग्रन्थानां पाण्डुलिपिषु वैभिन्न्यं दृष्टिगोचरं भवति। पाठान्त-तराणि, प्रक्षिप्तश्लोकाः, त्यक्तश्लोकाः, व्यत्यय दयश्च प्रचुरतया संदृश्यन्ते, एतेषां तुलनात्मकं समीक्षणात्मकं च अध्ययनं तदनुसृत्य ग्रन्थानां पौर्वापर्यनिर्णयश्च सांस्कृतिक सम्पादनस्यान्तर्गते विविच्यते। प्रो० वी० एस० सूक्तंकर प्रभृतयो विद्वांसोऽपि अनयैव सरण्या महाभारतस्य सम्पादनं विहितवन्तः। गवेषणायाः इमां पद्धतिं सर्वे विद्वांसः एकेन स्वरेण स्वीकृतवन्तः। इमामेव सरणिमवलम्ब्य बड़ोदातः श्रीमद् वाल्मीकि रामायणस्यापि सम्पादनं जातम्। प्रो० बी० एस० सूक्तंकरः यस्या प्रणाल्याः प्रयोगं कृतवान् सा भविष्यति काले "Prologomena" इति नाम्ना पुस्तकाकारेण प्रकाशिताऽभवत्, सैव परिपाटी अद्यापि सम्पा-दन कर्मणि गवेषकाणां विदुषां मार्ग निर्देशिका वर्तते। अस्या एव प्रणाल्याः संक्षिप्त स्वरूपः डा० कर्बे महोदयस्य "Indian Textual Criticism" इति पुस्तके प्राप्यते, अनयैव प्रणाल्या प्रो० हन्डैक्की महोदयः नैषधीय चरितस्य सम्पादनं कृतवान्।

प्रत्येकेषां ग्रन्थानां सांस्कृतिकं सम्पादनं सम्प्रति परमावश्यकं वर्तते परन्तु इतस्तावत् यावन्सि कार्याणि दृष्टिपथे सभागतानि तेषु च, वै, तु हि इत्यादीन् पाठभेदान् समुल्लिख्य टिप्पणीं च पूरयन्तः सम्पादकजनाः कृतकार्याः भवन्ति, ग्रन्थस्य लोकोपयोगित्वं नोद्घाटयन्ति। प्रस्तुतस्य शोध प्रबन्धस्येदमेवोद्देश्यं विधीयते यत् या हि महाभारतस्य मूलकथा पुराणादिकेषूपलब्धाऽस्ति सा पर-वर्तिभिः कविभिः नाटककारैः चम्पूकारैश्च स्वस्वामीष्ट सिद्ध्यर्थं केन केन प्रकारेण परिवर्तिता जाता। तैः तैश्च कः कः मौलिकोंऽशः रक्षितः, कः कश्च त्यक्तः परिवर्तितश्च, किन्नाम तत्कारणमासीत् यस्मात्परिवर्तनमावश्यकमभूत्, कुत्र कुत्र च मौलिक श्लोकाः उद्धृताः सन्ति – इत्येतेषां समस्तानां विषयाणां आलोचनात्मक दृष्ट्या पर्यवेक्षणं भवेत्। अनेन प्रकारेणाध्ययनेन स्पष्टमिदं भविष्यति यत् ऐतिहासिक कथावस्तुनि तत्तत्काल विशेषे च किं किंस्वरूप परि-वर्तनं जातम्। न केवलमेतावदेव प्रत्युत इदमपि निर्णेतुं शक्यते यत् को हि कस्याधमर्णत्वन दृश्यते। कवीनां पौर्वापर्यस्य निर्णयोऽपिअनयैव दिशा सुगमो भविष्यति।

महाभारतानन्तरं विविधस्य दर्शनस्य वीचयः वृद्धं गताः अभूवन् । सर्वे दार्शनिकाः वैदिक ऋग्भ्यः पुराणोतिहासं यावत् सकलानां वाक्यानां स्व स्व मतानुरूपं व्याख्यानं प्रारब्धवन्तः, प्रतिफलतो ब्रह्मसूत्रोपरि विभिन्नानाम् आचार्याणां विभिन्नानि भाष्याणि समुपलब्धानि सन्ति, गीतायाः विविधाः व्याख्याः उपनिषदांच विविधोऽर्थः प्राप्यते ।

ग्रन्थस्य प्रामाण्यं नहि केनाऽपि अपलपितुं शक्यते, किन्तु ग्रन्थस्योद्देश्ये अनेकविधाः विप्रतिपत्तयः भवन्ति । भवतुनाम ! पौराणिक कथानां स्व-स्व मतानुरूपं व्याख्यानं प्रयोगं च कवयः उक्त प्रकारेण यत्र तत्र कृतवन्तः । नागानन्दस्य यद्यपि बौद्धग्रन्थोद्भवत्वं सर्व सम्मत्या स्वीकृतं वर्तते तथापि जैनाचार्य्यैः श्री हर्षेण च स्व स्व मताविरोधात् सा कथा स्वीयकृतौ प्रयुक्तास्ति । पुनश्चेतिहासस्य कथानां यदि तुलनात्मकमध्ययनम् भवेत् तर्हि देशभेदात् कालभेदात् कविभेदाच्च ताः कथाः परिवर्तिताः सत्यः प्राप्यन्ते तथा च श्लोकाः अपि परिणतिं गताः प्राप्यन्ते ।

भारतीय संस्कृतेः मूलाधाराणां पुराणानां प्राचीनतायाः विषये विद्वांसः ऐकमत्येन तेषां पुराणानां चिरन्तनपरम्परां स्वीकुर्वन्ति । पुराणानां कालनिर्धारणस्य पाश्चात्य परम्परां विहाय यदि तेषां प्राचीनता चिन्त्येत् तर्हि मत्स्यपुराणानुसारेण—

**पुराणं सर्वशास्त्राणां ब्रह्मणा प्रथमं स्मृतम् ।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥** —(म० पु० ५३-३)

इत्येतेन वेदादपि पूर्वं पुराणानामस्तित्वं स्वीक्रियते । वैदिककालेऽपि पुराणानां सत्ताऽसीत्, नात्रं सन्देहलेशः । प्राचीनकालादेवेतिहासं पुराणं च परम्परापरपर्यायत्वेन व्यवह्रियते । छान्दोग्योपनिषदि (७।१) इतिहास पुराणे पंचमवेदत्वेन व्यपदिष्टे स्तः । इति ह आस इत्यनेन प्राचीन काले परमार्थेन घटितघटनायाः अभिप्रायः निस्सरति । अथर्ववेदे (११।७।२४), गोपथ ब्राह्मणे (२।१०), शतपथ ब्राह्मणे (११।५।६।८) च तत्र तत्र स्थलेषु पुराण पदं प्राप्यते । आरण्यक ग्रन्थेषु उपनिषत्स्वपि 'पुराण' शब्दः समुपलभ्यते । एतावता वैदिक कालेऽपि पुराणानि आसन् इति प्रमाणितं भवति । वेदोपबृंहणार्थं व्याख्यातेषु पुराणेषु नलचरितं सुबहुशः उल्लिखितं वर्तते । फलतः नलचरितमपि निःसंदिग्धमैतिह्यंच वस्तु ।

काव्यात्मक दृष्ट्या अथ च पौराणिक दृष्टचा नलचरितस्य कथावस्तुनि नूनमेवापूर्वा क्षमता वर्तते । स्वेच्छयाऽस्य संक्षिप्तीकरणं विस्तृतीकरणं वा कल्पनावलेन कर्तुं शक्यते, अस्य परिदर्शनं वृहत्कथामंजर्यां नैषधीय चरिते च द्रष्टुं शक्यते । संक्षेपतो यदि कथानकं वर्ण्येयेत तर्हि स्थितिरियं भविष्यति—नलदमयन्त्योः पूर्वरागः हंसवृत्तान्तः, स्वयंवर समाहरणम्, देवागमनम्, नल देवयोः मिलनं, नलस्य देवदौत्यम्, स्वयंवरः, नलवरणं, देववरदानं, कलिद्वापरयोः सम्वादः, नलपुष्करयोः द्यूतक्रीड़ा, नल दमयन्त्योः विप्रवासः, कर्कोटक वृत्तान्तः, दमयन्ती वृत्तान्तः दमयन्त्या नलान्वेषणं स्वयंवर व्याजेन नलस्य ऋतु पर्णेन सहागमनं, नायकनायिकयोः पुनर्मिलनञ्च ।

किन्तु स्वसिद्धान्त प्रतिपादनाय कवयः मूल कथानकं यत्र तत्र परिवर्तयन्ति इति सत्यमेव । यथा नागानन्दस्य बौद्धग्रन्थोद्भवत्वं सर्व जन विदितं, परं जैनाचार्य्यैः श्री हर्षेण च स्वस्वमताविरोधेनैव सा कथा स्वकृतिषु प्रयुक्ता । प्रायशः जैन साहित्ये पुराणोल्लिखिताः कथा प्रसंगाः समुपलभ्यन्ते । अनेनैव प्रकारेण जैन काव्येषु दशाधिकेषु नलकथा निबन्धन संजातम् ।

नूनमेव महाभारतं रामायणादर्वाचीनं वर्तते यद्यपि रामायणे नलकथा प्रकरणवशात् सूत्ररूपेणैव प्राप्नोति, किन्तु रामकथायाः नलकथायाश्च् घटना साम्यम् तथा च केषांचित् श्लोकानां यत्किंचित् परिवर्त्य अक्षरशः साम्यं समवलोक्य सहजैव प्रतीतिजार्यते यन्महाभारतं आदिकाव्यादर्वाचीनम् ।

संस्कृत वाङ्मये रामायण महाभारतयोरनन्तरं कथा ग्रन्थानां वर्तते सुसमृद्धा परम्परा । गुणाढ्यस्य "वृहत्कथा" यद्यपि कथा साहित्ये आदिमः ग्रन्थोऽस्ति तथापि संस्कृत साहित्यदौर्भाग्यात् स नाधुना प्राप्यते । कथासाहित्यस्य मूर्द्धन्य-ग्रन्थस्य रूपे द्वावेव ग्रन्थौ-स्तःवृहत्कथामंजरी कथासरित्सागरश्च । वृहत्कथा मंजर्याः पंचदशे लम्बके त्रिंशदुत्तरत्रिशतात् श्लोकादारभ्य एकसप्तत्युत्तर त्रिशत-श्लोक पर्यन्तं नलचरितं सम्यगुपवर्णितम् । अत्र वर्णितं नलचरितं महाभारतीय-नलचरितेन साकं यद्यपि साम्यं वहति तथापि यत्र तत्र वैभिन्न्यं परिवर्तनं च संलक्ष्यते । महाकवि सोमदेवविरचिते कथासरित्सागर नाम्नि ग्रन्थे प्रयुक्ता नलकथा मौलिकया नलकथया सह साम्यमावहति परमत्र वृहत्कथा मञ्जरी-वत्संक्षेपेण कथा न संकलिता ।

रामोपाख्यानस्य कृष्णोपाख्यानस्य च व्यतिरिक्तं काव्य संसारे समादृतं नलचरितमेव । नलचरितमवलम्ब्य शताधिकाः काव्य ग्रन्थाः उपलभ्यन्ते—इति

कथोद्भूतत्वं, प्रसिद्ध नायिकानायकयोः समावेशत्वं, करुणरसस्य प्रधानत्वं, उपदेशात्मकत्वमथ च कथावस्तुनि समस्त काव्यशास्त्रीय लक्षणानां समावेशत्वादिदं नलोपाख्यानं कवीनां चित्ताकर्षणस्य प्रधानं कारणम् । श्री हर्ष त्रिविक्रम भट्ट अगस्त्यपण्डित कृष्णानन्दादिभिः महाकविभिः स्वीयाभिः प्रखरपाण्डित्यप्रतिभापूर्णाभिः नवीनाभिः उद्भावनाभिः आख्यानमिदमुद्भावयित्वा नलचरिते नूतना विशिष्टता प्रादुर्भूता । काव्येषु वर्णितं नलचरितं कविकल्पनाजन्यवैशिष्ट्यात् यत्र-तत्र परिवर्तितं परिवर्द्धितं च दृश्यते ।

नलकथामवलम्ब्य नैषधीय चरित-नलचम्पू-नलकीर्तिकौमुदी-सहृदयानन्द इत्येतेषां प्रख्यात काव्येभ्यो अतिरिक्तानित प्रकीर्णत्वेनान्यान्यपि काव्यानि प्राप्यन्ते; यथा—नलोदयः, नलायनम्, नलाभ्युदयः द्वितीयः, नैषधपारिजातम्, अवोधाकरः, राघवनैषधीयम्प्रतिनैषधम्, दमयन्ती परिणयः, कल्याण नैषधम्, आर्य नैषधम्, सार शतकम्, नल चन्द्रोदयश्च । एवमेव नैषधानन्दः, नलवर्णन काव्यं, उत्तर नैषधीय चरितम्, कलिविडम्बनम् नलकथार्णवः, नलयादवराघव पाण्डवीयम्, दमयन्ती परिणय काव्यम्, नलचरित काव्यम्, नल हरिश्चन्द्रीयम्, नलोदन्तादीनि बहूनि काव्यानि सन्ति येषां समीक्षणेन नलचरितं नियतकोटिकं भवति ।

नलचरिते व्यावहारिक शास्त्राणां स्थले-स्थले समुपयोगः दरीदृश्यते; यथा—अश्वविद्याप्रसंगे नलस्य कृते 'हयतत्त्वज्ञः' इति विशेषणं समुपलभ्यते अन्यत्रापि अश्वपरीक्षणे नलस्य कृशानश्वान्, तेजोवल समायुक्तान्, कुलशील समन्वितान्, हीनैर्लक्षणैः वर्जितान्, पृथुप्रोथान्, महाहनून्, दशभिरावर्तैः शुद्धान्; सिन्धुजान्, वातरंहसः इतीमानि विशेषणानि प्राप्यन्ते, एवमेव नलचरिते ऽक्षशास्त्रं शकुनादि शास्त्रमपि प्रयुक्तं वर्तते । एतेषां लक्षणानि लक्ष्ये संगमय्य पर्यवेक्षणेन प्रतीयते यत्सर्वं शास्त्रीयं तात्कालिकं व्यावहारिकञ्च ।

ऐतिहासिक रूपेण नलचरिते सिद्धे सति तस्य भौगोलिक स्थलानामस्तित्व विषयेऽपि जिज्ञासा स्वाभाविकी । नलचरितस्य कथावस्तुना आधारे येषां नदी-नगरदेशादिन ांविशेषरूपेण वर्णनमुपलभ्यते, तेषामवलोकनेनेदं निर्विवादतया वक्तुं शक्यते यन्नलचरित सम्बन्धिनां स्थानविशेषाणां भौगोलिकमस्तित्वं निश्चयेन सिद्ध्यति --यथा रामकृष्णयोश्चरितैः सम्बद्धानां स्थलानां भौगोलिकमस्तित्वं सर्वैः स्वीकृतमत एव तानि स्थानानि तीर्थत्वेन ख्यातानि, तथैव पुण्य-

श्लोकश्य नलस्य लीलास्थलानां निश्चयपूर्वकं परिज्ञानेन तानि स्थलानि समेषामस्माकं श्रद्धास्पदानि भविष्यन्तीति ध्रुवम् । अतः नलचरितेन सह सम्बद्धस्य निषधविदर्भचेदि दशार्णकोसलादिदेशानां साम्प्रतिकमस्तित्वं चर्चितम् ।

अमेवोद्देश्यं मनसि निधाय महाभारतस्य वन पर्वीण प्रतिपादितं नलोपाख्यान मधिगृह्य च प्रयासोऽयं कृतः । पूनातः प्रकाशितं महाभारत तस्य च प्रामाणिकं सम्पानमाधारीकृत्य तथा च अन्यान्य ग्रन्थानामपि प्रामाणिकानि संस्करणानि सबिधि आलोड्य अयं शोध प्रबन्धः प्रस्तुतः क्रियते । अस्य शोध प्रबन्धस्य दशसु अध्यायेषु नलचरितस्य वैदिकमूलत्वं, तस्य च महाभारत विस्तरेणोपबृंहणम्, पुराणेसु नलचरितम्, जैन साहित्ये नल-कथा, कथा संकलनेषु च नलचरितस्य वर्णनं, तथा च नलचरितेन सम्बद्धानां शास्त्राणां तुलनात्मकं परीक्षणं स्फुटतया संघिटितं वर्तते ।

अयं बालप्रयासः नलचरितेन सह सम्बद्धस्य सम्पूर्ण साहित्यस्य दिग्दर्शनं कर्तुं क्षमेत, विद्वत्समुदायानामाशिषं च लभेत कलि काल जनितान् दुरितानपहरेच्चेति शुभेषणया सह शोध प्रबन्धोऽयं सेवायां प्रस्तुतोऽस्ति—

**"कर्कोटकस्य नागस्य दमयन्त्याः नलस्य च ।**

**ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ।।"**

(म० मा० व० प० अ० ७९ श्लोक १०)

अन्ते च येषां महापुरुषाणां सत्परामर्शैरस्य ग्रन्थस्य प्रणयने महार्घ्यं साहाय्यम स्माभिः प्राप्तां तेषां कृते भूरिशो धन्यवादान् वितरामि । विशेषतः अन्ताराष्ट्रीय इन्दिरा कला प्रतिष्ठाने परामर्शदातृ पदमलुंकुर्वतां गुरुवर्याणां श्रीमतां डा० सी० आर० स्वामीनाथन् महाभागानां, ला० ब० शास्त्रि केन्द्रीय संस्कृत विद्यापीठे कुलपति पदभाजां डा० मण्डन मिश्र महाभागानां, नलचरितस्य प्रख्यात समीक्षकाणां डा० एन० पी० उन्नि महाभागानां, डा० शिव गोविन्द पाण्डेय महाभागानां च कृतज्ञताभारं शिरसा वहामि येषां मार्गदर्शनं विना नासीत् सम्भवोऽस्य ग्रन्थस्य ।

ग्रन्थ लेखन काले इन्द्रप्रस्थे निवसता मया यद्यपि सौकर्यं सौख्यं व समनुभूतं तत्सर्वं वैश्यवंशावतंसानां श्री ओमप्रकाश गुप्त महाभागानां कृपात एवासीत् । तेषां कृतेऽपि पौनः पुन्येन धन्यवादाः ।

ग्रन्थस्यास्थ कृते प्रसिद्ध संस्कृत महाकविभिः देववाणी परिषदो महासचिवैः किञ्च संस्कृतगौरवं वर्द्धयद्भिः मम काव्यगुरुभिः श्रद्धेयैः डा० रमाकान्त शुक्ल

महाभागैः या गवेषणात्मिका भूमिका लिखिता तत्कृते शब्द सम्भारैः कृतज्ञता प्रकाशनमनुचितमिति मत्वा तेषामधमर्णत्वं हृदयेनावहामीति ।

ग्रन्थस्यास्य प्रकाशनं भारत सर्वकारस्य मानव संसाधन विकास मंत्रालयस्य शिक्षा विभागस्यार्थिकानुदान साहाय्येन समभूत् । मंत्रालयस्वाधिकारिणः डा० राम कृष्ण शर्मा महाभागः आधुवादार्हाः । सर्वान्ते च ग्रन्थस्यास्य प्रकाशकः नाग शरण सिंह महाभागोऽपि साधुवादार्ही येषां साहाय्येन यथासम्भवं शीघ्रं त्रुटिरहितञ्च मुद्रणं ग्रन्थस्यास्य समभूत् ।

**इच्छाराम द्विवेदी**

# विषयानुक्रमणी

## प्रथमोऽध्यायः

**"पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।**
**पुण्यश्लोको विदेहश्च पुण्यश्लोको जनार्दनः ॥"[1]**

दैनन्दिने प्रातःकाले स्मरणीयानां महापुरुषाणां शुभनामावल्यामग्रेसरं राज्ञो नलस्य नाम भारतीयसंस्कृतिनाऽप्यायितैः प्राणिभिः सादरं सश्रद्धं च गृह्यते । "पुण्यश्लोक" इति पदस्य व्युत्पत्तिलभ्योऽर्थः पुण्यं पवित्रं श्लोकः यशः यस्य स इत्यस्ति । श्रीमद्भागवतादिपुराणेषु उत्तमश्लोकः पुण्यश्लोकश्चेतीमे पदेऽखिल-कोटिब्रह्माण्डनायकस्य भगवतः कृष्णस्य कृते प्रयुक्तेऽभूताम्—

**"यदुत्तमश्लोक गुणानुवर्णनम्"[2]**
**"अयं हि परमो लाभः उत्तमश्लोकदर्शनम्'[3]**

भगवते वासुदेवाय प्रयुक्ते इमे विशेषणपदे महर्षिणा व्यासेन नलस्य कृतेऽपि प्रयुक्ते चेत्तर्हि स्वयमेव संस्फुटीभवति यन्नलस्य जीवनेऽपि ताः समस्ताः गुण-सम्पत्तयोऽनुस्यूता आसन् याः प्राणिनः भगवतः कोटिं प्रापयन्ति । वेदान्त दृष्ट्या तु—

**"ममैवांशो जीवलोके जीवभूतः सनातनः"[4]**

ईश्वरांशे जीवेऽपि तासां समस्तानां शक्तीनामस्तित्वं स्वीकृतमस्त्येव तथापि संसारे कीटपतंगादिवल्लब्धजन्मनामधर्ममार्गे रतानां पुरुषाणां जीवनस्य कृते मानवजीवनमिति व्यपदेशः सर्वथाऽनुचितः । धर्मरेखायां संस्थिताः न्यायमार्गे प्रतिष्ठिताः सिद्धान्तरक्षणे कृतसर्वस्वोत्सर्गाः महापुरुषा एव इहलोके—

---

१. प्रातः स्मरणम्

२. भागवतम्, १।५।२२

३. वही, १०।८०।१२

४. गीता, १५।७

**"नास्ति येषां यशः काये जरा मरणजं भयम्"** [1]

इत्यन्वर्थतां यान्ति । भगवान् कृष्णोऽपि गीतायां—

**"यद्यत् विभूतिमत्सत्वं श्री मदूर्जितमेव वा ।**

**तत्तदेवावगच्छत्वं मम तेजोंऽश सम्भवम् ।"** [2]

इत्युक्त्वा स्वकीयां विशिष्टविभूतिमत्तां तेष्वेव सत्पुरुषेषु निदर्शयति । नलस्य जीवनेऽपि समाह्रियमाणाः गुणा एव तत्कृते "पुण्यश्लोक" इत्यभिधानार्थे सक्षमाः विद्यन्ते । विभूतिमतः पुरुषानुपगतेषु बुद्धियोगेषु (ददामि बुद्धियोगं तम्) [3] धर्मः ज्ञानं वैराग्यमैश्वर्यं चेत्येते गुणा प्रतितिष्ठन्त इति शास्त्रैः प्रतिपादिताः । राज्ञो नलस्य चरित्रेष्वपि चतुर्णामेतेषां गुणानां दृश्यमानप्रचुरतयाऽयं नलः पुण्यश्लोकेति विशेषणेन विशिष्यते । लोकोत्तराणां पुरुषाणां चरित्राणि सामान्यजनेभ्यः प्रेरणास्रोतांसि भवन्ति । यदा मानवानां जीवने दुखदारिद्र्योत्पीडनादीनां विपदां घातप्रतिघातानि भवन्ति तदा प्राणिनां सहज बुद्धयोऽपि तानिप्रतिकर्तुमन्यायमधर्मं चावलम्बन्ते । विवेकभ्रष्टाः सन्तस्ते पापकर्माणि समाचरन्ति ततश्च मर्यादापुरुषोत्तमो रामः, सत्यवादी हरिश्चन्द्रः भगवान् कृष्णः, नलश्चेत्यादयो लोकोत्तराः महापुरुषाः स्वीयौदात्यचरित्रबलेन धर्ममार्गे तान्प्रतिष्ठापयन्ति, दुर्नयं परिहापयन्तः न्यायार्थमुत्प्रेरयन्ति; समानभावेन सुख-दुःखं सोढ्ढुं समर्थयन्ति; विश्वरूपमीश्वरं प्रत्यास्थां भावयन्ति च । रामस्य वनवासः, हरिश्चन्द्रस्य विक्रयः, श्रीकृष्णस्याजीवनं संघर्षश्च यथा लोकान् प्रेरयति तथैव धर्मैकप्राणस्य नलस्यापि जीवने प्रतिपदमागताः विपत्तयः प्रतिक्षणं परीक्षाः दुःस्थितयश्चास्मानुद्बोधयन्ति । अतएव—तु महर्षिणा कृष्णद्वैपायनेन व्यासेनाकुण्ठभावनयोद्‌घुष्टम्—

**कर्कोटकस्य नागस्य दमयन्त्याः नलस्य च ।**

**ऋतुपर्णस्य राजर्षे कीर्तनं कलिनाशनम् ।।** [4]

एवमेव राजा नलः कलिजन्यं पापाधर्मादि दुर्गुणमपाकृत्य पुण्यश्लोकभाक् भवति ।

---

१. सुभाषितम्

२. गीता, १०।४१

३. वही, १०।१०

४. म० भा० व० प० अ० ७९ श्लो० १६ (गीता प्रेस संस्करण)

रामस्य कृष्णस्य च कथैव लोकोपयोगिनः सन्दर्भानुपयोजयन्ती महाभागस्य नलस्य कथाऽपि संस्कृत वाङ्मये कविभिः भृशं समादृताभवत् । यद्यपि पुराणानि सुहृत्सम्मितोपदेशतया, काव्यानि च कान्तासम्मितोपदेशतया नलचरितं वर्णितवन्ति ।[1] तथापि नलचरिते तानि सर्वाणि काव्यशास्त्रीय लक्षणानि संघटितानि समुपलभ्यन्ते यानि काव्यनिर्मितौ आवश्यकान्यथ चापेक्षितानि मन्यन्त इत्यस्माद्हेतोरेव संस्कृत साहित्यस्य महाकवयः नलचरितमुपवर्ण्य स्वकीयायाः मेधायाः वाग्विलासस्य च परिवर्धनं संपोषणं कृतवन्तः । वस्तुत उपलब्धे संस्कृतवाङ्मये कृष्ण कथायाः रामकथायाश्च ऋते एतादृशी कापि कथा न दृश्यते या परवर्तिनि संस्कृत साहित्यप्रच्छदे तन्तुवदोतप्रोततया परिलक्ष्यते । नलचरितमेवाधारीकृत्य साहित्यस्य विशालं भाण्डारं न केवलं संस्कृत साहित्ये प्रत्युत्प्राकृत-पालि-तमिल-तेलुगू-कन्नड़-हिन्दी-जर्मन- अंग्रेजीत्यादिषु अनेकासु भाषासु प्राप्यते । वस्तुतः रामात्कृष्णाच्चातिरिक्तः एतादृशः कोऽपि नायको न परिलक्ष्यते यो हि नल इव संस्कृत साहित्यस्य साम्राज्ये पौनः पुन्येन कीर्तितो भवेत् । नायिकाष्वपि सीता एव दमयन्त्याः औपम्यमाप्नोति नान्या काचित् । एभिः कारणैरेव परवर्तिनि संस्कृतसाहित्ये नलचरितं निरतिशयं श्लाघते । नलचरिते महाभारतादीतिहासग्रन्थेषूल्लेखनत्वात् इतिकथोद्भूतत्वं, सिद्धरस-प्रख्य नायक नायिकाः समावेशत्वात् रसनिष्पत्तयेऽनुकूलत्वं, कथावस्तुनः वर्णन वैविध्येन सहृदयहृदये चमत्कारप्रवणत्वमथ च प्रेरकत्वेन लोकोपयोगित्वं सर्वं च तत्काव्यवस्तु तत्त्वं प्रतिपदं प्राप्यते ।

उपर्युक्त कथावस्तु वैशद्येन चरित्रौदात्येन च समन्वितं नलचरितं प्रथमतः महाभारतस्य बनपर्वणि अष्टाविंशति संख्याकेष्वध्यायेषु सविस्तरं प्राप्यते ।[2] महाभारतं हि पंचम वेदत्वेनापि स्वीक्रियते । पंचम वेदत्वेनाख्यातं वेदार्थोपबृंहणार्थं समुद्दिष्टं महाभारतमिदं अनेकानेकानि सुन्दरतमानि आख्यानानि कुक्षी कुर्वत् विराजते । महाभारतस्य कृते भारतीय संस्कृतेः विश्वकोश इति प्रख्यापनं समीचीनं वर्तते । महाभारतस्याध्ययनं बिना भारतीयसंस्कृतेः आत्मनः प्रत्यभिज्ञानमसम्भवम् । यथा भारत एव—

---

१. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।। काव्यप्रकाश उ० १ का० २

२ म० भा० व० प० अ० ५०-७८ नलोपाख्यान पर्व

**इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।**
**बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥**[1]

श्लोकेनानेन वेदार्थस्योपबृंहणमेव महाभारतस्य मूलं लक्ष्यमिति स्पष्टम् । वेदो ह्यपौरुषेयोऽनन्तः परमपुरुषस्य सनातन ब्रह्मणः वाक् किंवा निश्वासभूतोऽस्ति—"यस्य निःश्वसितं वेदा इति प्रसिद्धमेव । वेदेऽस्मिन्नेवोपलब्धानां वस्तुतत्वानां विवेचनं पुराणेतिहासयोरभिधानेनाद्यावकल्प्यते । यथैकत्र वेदे—

**इदं विष्णुर्विचक्रमे त्रेधानिदधे पदं समूढमस्य पांसुरेः ॥**[2]

इत्यत्र त्रेधा निदधे पदमित्यनूच्य विष्णुकृत त्रैलोक्य विजयस्य रूपकं प्रस्तुती कृतवान् । भागवते पुराणेऽस्यैव मन्त्रस्य व्याख्याने बलिवामनयोः संवादरूपेऽस्य वैदिकमन्त्रस्योपबृंहणं दृश्यते—

**तद्वामनं रूपमवर्धताद्भुतं**
**हरेरनन्तस्य गुणत्रयात्मकम् ।**
**भूःखं दिशो द्यौर्विवरापयोधय-**
**स्तिर्यङ्नृदेवा ऋषयो यदासत ॥**[3]

कस्यचित् तथ्यस्य पोषणं तथा च तस्य विस्तृतीकरणमेव वर्धनार्थक वृंह् धातोः निष्पन्नस्योपबृंहणस्यार्थः । फलतः वेदमंत्रै प्रतिपादितस्यार्थस्य सिद्धान्तस्य तथ्यस्य च विस्तृतीकरणमेवेतिहासपुराणयोः कार्यमस्ति । वैदिकोपबृंहणस्य बहवः भेदाः पुराणेषु दृष्टिगोचराः भवन्ति—

१—कुत्रचित् वैदिक मंत्राणां विशिष्टं पदमेव पुराणेतिहासयोः स्पष्टतः गृहीतं वर्तते । विष्णु स्तुतिषु विष्णु मंत्राणां विशिष्टं पदं शिव स्तुतिषु शिव मंत्राणां विशिष्टं पदं भावश्चाक्षरशः संगृहीतं दृश्यते । यथा वायु पुराणे[4] शिवस्तुतौ यजुर्वेदस्थ रुद्राध्यायस्य[5] मंत्राणां पदं भावश्च बहुशः परिगृहीतः । वैष्णवेषु पुरुषसूक्तस्य[6] महिमाऽसीमोऽस्ति । भागवते[7] पुरुषसूक्तस्योपयोगः

---

१. म० भा आ० प०, १।२६७
२. ऋग्वेद, १।५।२२।१७
३. भागवतम्, ८।२०।२१
४. वायु पुराण, अ० ५५
५. यजुर्वेद रुद्राध्याय, अ० १६ माध्यन्दिन संहिता
६. ऋग्वेद, १०।९०
७. भागवतम्, २।६।१५ से ३० एवम् १०।१।२०

समुपलभ्यते ।

२—वैदिक मंत्राणां व्याख्यानमपि पुराणेतिहासयोः प्राप्नोति—यथा—"विष्णुर्नुकं वीर्याणि प्रावोचम्"[1] इत्यस्य व्याख्यानं भागवते अस्ति यद्धि श्लाध्यं ग्राह्यं चास्ति—

> विष्णोर्नु वीर्यं गणनां कतमोऽर्हतीह
> या पार्थिवान्यपि कविर्विममे रजांसि ।
> चस्कम्भ यः स्वरंहसा स्खलता त्रिपृष्ठं
> यस्मात् त्रिसाम्य सदनादुरुकम्पमानम् ॥[2]

एवमेव ईशावास्यमिदमित्यस्य व्याख्या भागवतस्य अष्टमे स्कन्धे वर्तते ।[3] "द्वा सुपर्णा सयुजा सखायाः"[4] इत्यस्य मंत्रस्य व्यासीकरणं भागवतस्य एकादशे स्कन्धे[5] तथा च वायु पुराणे[6] दृश्यते । "ॐ तत्सवितुर्वरेण्यं०"[7] इत्येतस्य विशदीकरणं अग्नि पुराणे[8] वर्तते । "चत्वारि शृंगा त्रयोअस्य पादाः[9] इत्यस्य व्याख्या महाभाष्ये पस्पशान्हिके मीमांसा सूत्रे[10] स्कन्द पुराणे काशी खण्डे[11] तथा भागवते[12] परिलक्ष्यते ।

३. वैदिकानामाख्यानानामपि समुपवृंहणं पुराणेतिहासग्रन्थेषूपलभ्यते—यथा शतपथ ब्राह्मणे प्राप्तं मत्स्योपाख्यानं[13] भागवते[14] अग्निपुराणे[15] गरुडपुराणे[16]

१ ऋग्वेद, १।१५४।१
२. भागवतम्, २।७।४०
३. वही, ८।१।१०
४. ऋग्वेद, १।१६४।२०, अथर्व०, ६।६।२०
५. भागवतम्, ११।११।६
६. वायु पुराण, अ० ६ श्लो० ११६
७. ऋग्वेद, ३।६२।१०
८. अग्नि पुराण, २१६।१ से ८ श्लोक
६. ऋग्वेद, ४।५८।३
१०. मीमांसा सूत्र, १।२।४६
११. स्कन्द पुराण काशी खण्ड ७३।६३ से ६६
१२. भागवतम्, ८।१६।३१
१३. शतपथ ब्राह्मण, २।८।१।१
१४. भागवतम्, १।३।१५, ८।२४।११ से ६१
१५. अग्नि पुराण, २।४६
१६. गरुड़ पुराण, १।१४२

पद्‌म पुराणे[१] महाभारते[२] च सम्यगुपलभ्यते । अनेनैवप्रकारेण कूर्मवाराह उरुगाय त्रिविक्रम विष्णु पुरुरवोर्वशीहरिश्चन्द्र शुनःशेपनाचिकेतोपाख्यानादीनि अनेकान्युपाख्यानानि पुराणेतिहासयोरुपवृंहितानि सन्ति । एवमेव पुराणेतिहासयोः प्राप्तोपाख्यानानां वैदिक मूलत्वमन्वेषयितुं शक्यते । अनयैव दिशा नलचरितस्यापि वैदिकमूलत्वमवश्यमेवैषितव्यम् ।

प्रथमतो हि नलस्य निषाधदेशस्य च नाम शुक्ल यजुर्वेदीय वाजसनेयि संहितायां निर्दिष्टं प्राप्यते । जर्मन देशीयो विद्वान् अलब्रेश्ट बेवरः स्वीये पुस्तके स्पष्टतयोल्लिखितवान् तथ्यमिदम् ।[3] नैषधीय चरितस्यान्यतमः टीकाकारः प्रो० आर० के० हन्डेक्की अपि मतमिदमंगी कृतवान् । तस्य मतानुसारेण संहिता भागेनैव सह तत्सम्बन्धिनि शतपथ ब्राह्मणेऽपि नलचरितस्योल्लेख आप्यते—

"It is said about the king of Naishadha that his name drives away all the bad effects of Kali. This king named Nala is well prescribed in Mahabharata first time. Although it has been discovered that the name of king Nala and his country Naishadha have back gone to the vedic age. It has been found it in "Vājsaneyi Samhitā" and its affiliated Brahmin "Shatapatha Brāhmaṇa".[४]

नलकथा साहित्यस्य विशेषज्ञों डा० एन०पी उन्नि महाशयोऽपि नल चरित स्योत्सभूमिः वैदिकीति स्वीकरोति—

---

१. पद्‌मपुराण, ५।४।७३

२. म० भा० शा० प० अ० २४०

३ "And lastly the (Southern) Naishadhas are once alluded to in the name of their king Nala Naishadha (or as he is here called Naishadha)" Albrecht Webar, The History of Indian Literature--Eng. Trans. by John Mann 1892 page-132.

४ "A Critical Addition of Naishadha" prof. R. K. Hundequi, Deccan College, Research Institute Poone 1057, page-LIV.

"Undoubtedly the story was popularly known in India from very ancient times. It has been pointed out that the name of Nala, king of Naishadha, goes back to Vedic antiquity finding a place in the "Vājsaneyi Samhita".[1]

एतदतिरिक्तमपि नलचरित उल्लिखितमन्यान्यं वस्तुतत्वाद्युपादानं वैदिककाले समुपलभ्यते। ऋग्वेदस्याक्षः सूक्ते अक्षक्रीडोल्लेखोऽस्ति। यज्ञ पुरुषस्याश्वरूपेण वर्णनं शालिहोत्रीयाश्वशास्त्रानुरूपमेवाश्वमेध प्रकरणे वैदिक वाङ्मये विभिन्नस्थलेषूपलभ्यते। पाकशास्त्रविषये पैप्पलाद संहितायां शौनक संहितायां अथर्ववेदे चोल्लेखोविद्यते।

उपरिलिखितानि सन्दर्भाण्येवाधारीकृत्य नल चरितस्य बीजं वैदिककाले प्यवगन्तुं शक्यते परन्तु सम्प्रत्युपलब्धस्य नल चरितस्य साक्षात्सम्बन्धः वैदिकवाङ्मयेन सहास्तीति दृढ़तया कथनमसमीचीनम् पुनश्च भारतीयान्वेषण दिशा "अपौरुषेयानन्ताः वेदाः", इतिसिद्धान्तघिया च वैदिक वाङ्मयेन सह नलचरितस्य सम्बन्ध एव नास्ति इति कथनमपि दुराग्रहग्रहिलं मंस्यते यतः वेदाः अनन्ता तेषां पूर्णविस्तारं परिज्ञातुं नशक्यते तत्राप्युपलब्धासु संहितासु यत्रतत्रांशो लुप्तप्रायस्त्वैन दृश्यते। भारतीय गवेषण पद्धत्यातु नलचरितस्योत्सः वैदिक वाङ्मयेऽवश्यम्भावी समीचीनश्चास्ति। वैदिक स्थलेषु प्रयुक्ते नलो नैषधः इति पदं महाभारते नलचरित रूपेणोपवृंहितं सत् प्रस्तुतं चेत्तर्हि किमाश्चर्यं तत्र।

वैदिक मूलत्वेन तदुत्पत्तेः पक्षद्वयमनिर्णीतं वक्तुं शक्यते किन्तु नल चरितस्यास्तित्वं महाभारतात्पूर्वमासीदिति खण्डयितुं न केचित् सक्षमाः सन्ति। भारत कालात्पूर्वमपि जनसामान्येषु रामकथेव नलकथाऽपि लोकगीतेषु, नाटकेषु ग्रामीण कथावाचकेषु, नटेषु विविधरूपेषु च चर्चिताऽसीत्। दक्षिण भारते नल चारिताधारिताः कतथकेत्यादि नृत्यविधाः इव नल नाट्यमिति परम्पराऽद्यावधि प्रचलिताऽस्ति। उत्तर भारतेऽपि 'ढोला' इति लोकगीते नलकथा कीर्तनं ग्रामीण कथाकारैः शैलूषैश्च गीयते तथा च कथायाः सरसतया जनसाधारणः रसार्द्रीक्रियते। नल चरितस्येयं जीवनीशक्तिरेव तस्य काव्यमयत्वं प्रमाणयति।

---

१ Nala Episode in Sanskrit Literature : Dr. N. P. Unni pp-19-20.

महाभारतकालात्पूर्वं नलचरितस्योल्लेखः आदि कवि वाल्मीकि कृते रामायणे प्राप्नोति । वाल्मीकि रामायणे रावणः सीतामपहृत्य अशोक वाटिकायां वन्दीकृत्य तामुपगम्य च प्रणयं याचते, सती सीता स्वकं पातिव्रत्यमुद्घोषयन्ती दमयन्तीवात्मानं पत्यनुगामिनीतिप्रत्याख्यातवती—

**नैषधं दमयन्तीव भैमीपतिमनुव्रता ।**
**तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ॥**[1]

अतो नलस्य रामात्पूर्ववर्तित्वमितिहासे सिद्धं वर्तते, नलस्य ऋतुपर्णेन सह मैत्री आसीत् । ऋतुपर्णः इक्ष्वाकुवंशे प्रतापशीलोऽक्ष हृदयविद्यापारंगतो राजा-आसीत् ।[2] पुराणेषु सर्वत्र ऋतु पर्णेन सह नलस्यापि नाम प्राप्यते ।[3] पौराणिक राजर्षिवंशवल्यामृतुपर्णः इक्ष्वाकोः वंशे द्वापंचाशत्तमः पुरुषः आसीत् तथा च रामः तत्पश्चात् त्रयोदशः पुरुषः आसीत् । उक्त सरण्या रामात्पूर्वं नलकथायाः प्रसारः निश्चप्रचः । इक्ष्वाकोः वंशवल्ली डा० कृष्णमणि त्रिपाठिना डा० बलदेवोपाध्यायेन च क्रमशः पुराणविमर्शे ।[4] पुराण पर्यालोचने च सप्रमाणं प्रस्तुताऽस्ति ।

पालि साहित्ये प्राकृते जैन साहित्येऽपि च नलचरिचस्य सुवहुशः उल्लेखः प्राप्यते, गुणाढ्यस्य वृहत्कथायामपि नलचरितमवश्यं संभविष्यतीति । अस्य निगमनस्यायं हेतुः यत्—सम्प्रति अनुपलब्धायां वृहत्कथायां सत्यामपि तदाधारितायां क्षेमेन्द्र कृत वृहत्कथामंजर्या[5] तथा च सोमदेव कृत कथा सरित सागरे[6] इत्येवमादिषु कथाग्रंथेषु नलचरितं वर्णितं विद्यते । कथा ग्रन्थेषूपवर्णितं नलचरितं यद्यपि कथा प्रसंगे यत्र-तत्र परिवर्तितं दृश्यते तथापि मूल कथानकस्य प्रवाहो महाभारतीय नलचरितस्य प्रवाह इव गतिशीलो वर्तते ।

---

१. बा० रा० सु० का० सर्ग २४, श्लोक १३
२. म० भा० व० प० अ० ७२, श्लोक २३
३. भागवतम् ९।९।१७, वायुपु० २६।१७२-१७३, विष्णु पु० चतुर्थाश अ० ४ श्लोक ३७-३८
४. पुराण विमर्श—डा० बलदेव उपाध्याय, पेज ३६७-३७१
पुराण पर्यालोचन—पेज २१ भाग २
५. वृहत्कथामंजरी—लम्बक ९, श्लोक ३३१ से ३७४
६. कथासरितसागर—लम्बक ९, अलंकारवती तरंग ६, श्लोक २३७-४२४

अत इदं स्पष्टं यन्नलचरितं सुदूर प्राचीनकालादेव भारतीयजनमानसेन सह संश्लिष्टमस्ति । लोकोपयोगिना कथानकेनायं ग्रन्थोऽद्यापि प्रसिद्धः । अस्मात्कारणादेव नलचरितं न केवलं स्वकाव्यविभुतया पश्चात्तनानां कविसमुदायानां केन्द्र बिन्दुरभवत् प्रत्युत्काव्य-नाटक-गद्य-प्रबन्धादि माध्यमेन संस्कृत-साहित्यस्याक्षयभाण्डारं समधिकतया समवर्धयत् । रामचरितं कृष्णचरितं चोपजीव्यं मत्वा यथाऽपरिमेयं साहित्यं प्रादुरभूत् तथा नलचरितमप्याधारी कृत्य काव्य-नाटकादीनां सुदीर्घ श्रृंखलायां नलकथा साहित्यं स्वकीय समृद्धपरिवेशेन सह प्राप्नोति । नलचरितमाश्रित्य प्रणीतानां काव्यानां संख्या शतद्वयाधिका वर्तते । रसनिष्पत्ति दृष्टया नलकथा रामकथया सदृशी वर्तते । बनवास समये रामेण सह भ्रातृसहयोगो वर्तते किन्तु दमयन्त्या वियुक्तो नलः एकाकी एव कष्टमनुभवति, अतः नलस्य कष्टं रामादधिकमासीदिति स्पष्टं जातम् । नलोऽपि रामो यथा धीरोदात्तो नायकोऽस्ति, दमयन्ती अपि सकलगुण वैशिष्ट्येन संयुक्ता नायिकाऽस्ति, अनयो द्वयोः पवित्रं उदात्तं च जीवनचरितं प्रविलोक्य एव श्री हर्षः स्व काव्यस्यारम्भेऽवोचत्—

**निपीय यस्य क्षितिरक्षिणः कथा—**
**स्तथाद्रियन्ते न बुधा सुधामपि ।**
**नलः सितच्छत्रित कीर्ति मण्डलः**
**स राशिरासीन्महसां महोज्ज्वलः ।।[1]**

**रसैः कथा यस्य सुधावधीरिणी**
**नलः स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्ण दण्डैकसितातपत्रितः**
**ज्वलत्प्रतापावलि कीर्तिमण्डितः ।।[2]**

**पवित्रमत्रातनुते जगद्युगे**
**स्मृतारसक्षालनयेव यत्कथा ।**
**कथं न सा मद्गिरमाविलामपि**
**स्व सेविनीमेव पवित्रयिष्यति ।।[3]**

---

१. नैषध १।१
२. वही, १।२
३. वही, १।३

पुराणकर्ता महर्षिः कृष्णद्वैपायनः व्यासः त्रिकालदर्शी आसीत् । अतीतानागत वर्तमानानि तस्य कृते हस्तामलकवत् प्रत्यक्षगोचराणि आसन् तत्पुनः नलचरितस्य भावि प्राशस्त्यं स कथन्न जानातु-अतएव सोऽलिखत् नलचरित विषये—

**ये चेदं कथयिष्यन्ति नलस्य चरितं महत्**
**श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान् भजिष्यति**
**अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ॥**[१]

वस्तुतोहि भगवतो वेदव्यासस्येदमाशीर्वचः नलचरितस्योपासकानां श्री हर्ष-त्रिविक्रम भट्ट-कृष्णानन्द-अगस्त्पण्डितानां समेषां कृतेऽलभत् । भगवतो व्यासस्याप्रतिमगुणानुसन्धानं परिलक्ष्य एवाभियुक्तैः कथितम्—

**नमोऽस्तु ते व्यास विशाल बुद्धे**
**फुल्लारविन्दायतपत्रनेत्र ।**
**येन त्वया भारततैलपूर्णः**
**प्रज्वालितो ज्ञानमयप्रदीपः ॥**[२]

## नलचरितस्यैतिहासिकत्वम्

यास्काचार्येण प्रणीतस्य निरुक्तस्य "इति—ह—आस" इति व्युत्पत्या यो हि पुरा एवमासीदिति वाच्यो भवति । निरुक्तस्य टीकाकारः दुर्गाचार्योऽपि वृत्तिभागे 'इति ह एवमासीत् इति य उच्यते स इतिहासः"[3] इत्युक्त्वाऽमुमेवार्थं पुष्णाति । संस्कृत साहित्ये महाभारतः इतिहासत्वेनोच्यते । ब्रह्मवैवर्त पुराणानुसारेण—

**इतिहासो भारतं च वाल्मीकं काव्यमेव च ।**[४]

इत्येतावता भारतमितिहासग्रन्थः वाल्मीकिकृतं रामायणं चादिकाव्यमस्ति । स्वयमेव महाभारतमप्यात्मानमितिहास शब्देनाभिदधाति—

**तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्**
**इतिहासमिमं चक्रे पुण्यं सत्यवती सुतः ॥**[५]

---

१. म० भा० व० प० ७६।१२
२. सुभाषितम्
३. निरुक्त दुर्गाचार्यवृत्ति २।२।१
४. ब्र० वै० पु० श्रीकृष्ण जन्म खण्ड १३३।२३
५. म० भा० ब० आ० प० १।५४

**जयनामेतिहासोऽयं श्रोतव्यं विजिगीषुणा ।**[1]

**भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ।**[2]

अतोऽप्यधिकं स्वात्मानऽमितिहासोत्तमिति समुद्घोषयति—

**इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः ।**[3]

अतः इतिहासोत्तमे महाभारते वर्णितत्वान्नलचरितस्यैतिहासिकत्वं सुतरां सिद्धम् ।

अपरञ्च खलु नलचरितं महाभारत एव नलोपाख्यान शब्देनाप्यभिहितम् । उपाख्यानशब्दस्यापि सामान्योऽर्थः पूर्व वृतान्तस्य कथनमेव गृह्यते । प्रायः उपाख्यानस्य' (उप+आ+ख्यानं) एवं चाख्यानस्य शब्दस्य कोशपठितोऽर्थः साम्यं भजते । पाणिनाः स्वसूत्रेष्वाख्यान शब्दं प्रायुंजीत तत्र तत्तत्प्रकरणे तस्यार्थः उत्तरः भेदकधर्मश्चास्ति 'पाणिनीय सूत्रे' विभाषाख्यान परिप्रश्नयोरिञ्[4] अत्राख्यानस्य परिप्रश्नस्य च प्रयोगः उत्तरार्थे प्रत्युत्तरार्थे जातः । व्याकरण नियमबलेनात्राख्यानस्य पूर्वनिपातो विद्यते । काशिकाकारस्तु स्व विमर्शे पूर्वं प्रश्नः पश्चादाख्यानमित्युल्लिखितवान् । "लक्षणेत्थं भूताख्यान भागवीप्सासु प्रतिपर्यनवः"[5] इत्यत्राख्यान शब्दोल्लेखः दृश्यते । सामान्यत आख्यानस्योपाख्यानस्य चार्थः **क्रमशः** १—कथनं सहकारी कथनम्, २—पूर्ववृत्त कथनम्, ३-प्रतिवचनम्, ४—भेदकधर्मः, ५—प्रसिद्धाख्यान संज्ञकः सर्गयुक्तो महाभारतादि आर्ष ग्रन्थस्य भागः । अयमेवार्थः वाचस्पत्ये शब्दकल्पद्रुमे चोपलब्धोऽस्ति । उपाख्यान शब्दस्य प्रयोगगतमर्थं स्वयं महाभारतं विवृणोति—

**चतुर्विंशति साहस्त्रीं चक्रे भारत संहिताम्**

**उपाख्यानैर्विनातावद् भारतं प्रोच्यते बुधैः ॥**[6]

न च महाभारतस्योद्धरणं शब्दार्थस्य निर्णायकं प्रत्युत्स्वरूपस्य निर्णायकंमस्ति यदंशतः शब्दार्थस्य गमकोऽपि वक्तुं पार्यते । एतदनुसारेणाख्यानमपि पुरा

१. म० भा० स्वर्गा० प० ५।५१

२. म० भा० आ० प० २।४१

३. वही २।३८५

४. पाणिनीय अष्टाध्यायी ३।३।११०

५. वही १।४।९०

६. म० भा० आ० प० १।१०१

वृत्तमेवास्ति, एतावताऽपि नलचरितस्य पृष्ठभूमिः ऐतिहासिकी सिद्धाभवति। एतदतिरिक्तं नलोपाख्यानस्यान्ते महर्षिः व्यासोऽपि—

**इतिहासमिमं चापि कलिनाशनमुच्यते।**[1]

**इतिहासमिमं श्रुत्वा पुराणंशश्वदुत्तमम्।**[2]

इत्येवमुक्त्वा नलचरितस्यैतिहासिकतां प्रमाणयति।

इतिहासेन सहैव पुराणमपि पुराभवमिति पुराणम् इति व्युत्पत्ति मूलकेनार्थेन पुरावृत्तमेवप्रतिपादयति, यास्कस्तु पुरानवं भवति[3] इत्युक्त्वा प्राचीनां घटनां प्रत्येव पुराणस्यार्थं विनियोजयति, वायुपुराणमपि—

**यस्मात्पुरा ह्यनतीदं पुराणं तेन तत्स्मृतम्।**[4]

इत्यनूच्य प्राचीन काले वर्तमान घटनास्तित्व वर्णनमेव पुराणशव्दस्याभिगमकोऽर्थ इति द्योतयति। इतिहास पुराणयोः समानार्थकः प्रयोगः छान्दोग्योप निषदि[5] शतपथ ब्राह्मणे[6], तैत्तिरीयारण्यके[7], वृहदारण्यके[8] च प्राचीन ग्रंथे सम्यक् मिलति। पुराणोपवर्णितानां घटनानामैतिहासिकं सत्यत्वमप्यनेन प्रमाणितं भवति। विभिन्नपुराणेषूपलव्धस्य नलचरितस्य तत्सम्बन्धिनां पात्राणां च नामजात्याद्युल्लेखनादिनाऽपि नलचरितस्यैतिहासिकतासिद्ध्यति। ऐतिहासिक याथार्थ्यस्य परिज्ञानाय भारतीया प्रणाली पाश्चात्या प्रणाली च परस्परं मौलिकमन्तरमादधातीत्यप्यवधेयो विषयः। भारतीया मनीषा समग्रतायां जीवनं परिद्रष्टुमिच्छति तथाच पाश्चात्या मनीषा तु जीवनं कालखण्डेषु विभज्य तस्य मूल्यांकनं प्रस्तौति भारतीयानामृषीणां मुनीनां च चिन्तनदृष्टिः समग्र जीवनस्य मूल्यवत्तामन्तर्निधाय विमृशति न तु जीवनस्य पक्षविशेषम्। अस्मादेव कारणात्ते जन्मतिथेः मृत्यु तिथेवोल्लेखनापेक्षया मानवजीवनस्य, सामाजिक योग-

---

१. म० भा० व० प० ७८।१०

२. वही ७८।१३

३. निरुक्त ३।१९

४. वायु पु० १।२०३

५. छान्दोग्य ७।१

६. शतपथ ब्राह्मण ११।५।७।९

७. तैत्तिरीयारण्यक २ प्रपाठक ९ अनुवाक्

८. वृहदारण्यक २।४।११

दानस्य रूपेसूपलब्धस्य तस्याचरणस्य च चित्रणे दत्तावधाना: भवन्ति, वृहत्तराणि मूल्यानि प्रतिष्ठापयितुं प्रयतन्ते, इदमेव कारणं यत् संस्कृतेतिहासे पाश्चात्य गवेषकैः प्रयुक्ते इतिहासे तिथे: मासस्य वासयस्य सम्वतादेश्चोल्लेखो न प्राप्यते । अस्या: क्रमबद्धताया: अभावे मैदं ज्ञातव्यं यत् पुराणेतिहासेषु वर्णितासु घटनासु ऐतिहासिकत्वं न विद्यते न वा सत्यत्वं विद्यते । पाश्चात्या: गवेषका: प्रज्ञाधनिन: महर्षय इव लक्षांशेऽपि जीवनमूल्यं नान्वभूवन् । साम्प्रतिका: गवेषका: अल्पज्ञतया सीमित-संकुचितदृष्ट्या चारोपापवादं कुर्वन्ति तेषु कियान सार इति शनैः शनैः स्पष्टीभवति ।

भारतीया संस्कृति: अर्वाचीना वैदेशिकी संस्कृतिश्च प्राचीनेति कथमपि प्रमाणिता भवेदिति पाश्चात्यानां गवेषकानां प्रयति: । अनयैव धारणया भारतीयैतिहास पुराणानां ग्रंथानां च निर्णय: स्वमतानुरूपं कृत: तेषां चिन्तन दिशा पुराणान्तर्गतस्येतिहासस्येतिहास ,क्षेत्रे भाव: युक्तिसंगतो न वर्तते । तेषामेवानुवर्तिन: पण्डितम्मन्या भारतीया: केचन विद्वान्सोऽपि समस्तान् पौराणिकानितिहासान् 'Myth' अर्थात् मिथ्यात्वेन प्रतिभाषयन्ति । आंग्ल सभ्यताया: प्रकाशेन चाकचिक्यायमाण नेत्रा: दीर्घकालिकं पारवश्यमनुभवन्त: विद्वान्स: तेषामेवोपनेत्रैः विवशतया साहित्यं पर्यालोचयन्ति । स्वातंत्र्योत्तरे कालेऽनेके विद्वान्स: भारतीया: साहित्येतिहासस्य संस्कृतेश्चानुसन्धानार्थं प्रवृत्ता: अभूवन् । ईशवीयत: पूर्वं षष्ठे शताब्दे समुत्पन्नस्याद्यशंकराचार्यस्योत्पत्ति ईशवीयत: पश्चात् अष्टमे शताब्दे मन्यमाना: विद्वान्स: तेषांदुराशयश्च सम्प्रति श्री कोट्टा वेंकटाचलम् इत्यादिभि विद्वद्भिर्निरस्तोजात: । एवमेव बहूनि कल्पिततथ्यानि विद्यमानानि सन्ति येषां खण्डन-मण्डन स्थितेश्च यथार्थमाकलनमवशिष्टं वर्तते । पाश्चात्यानां दृष्टिकोणं स्पष्टतया परिज्ञातुं "लार्ड मैकाले" इत्यस्य पितरं प्रति लिखितं पत्रमेव पर्याप्तं यस्मिन् स्वनिर्मिता शिक्षा प्रणाली तस्याश्च क्रियान्वयनीकरणमासीत्—

**Macaulays letter to his Father**—"No Hindu who has received education remains sincerely attached to his religion. Some continue to profess it as a matter of policy: but other profess themselves pure atheist and embrace Christianity. We desire to form a class who may be interpretors between us and the millions we govern, a class of persons Indian in blood

and colour but English in taste, in opinion, in morals and in intellect."[1]

करालकालस्य केलिप्रभेदोपभेदेनाद्य वयं स्वतंत्राः स्मः, अनुसन्धानस्य दिशायां स्वतंत्रतया वयं प्रवृत्ताः भवेम । येन भ्रान्तावधारणानां समूलोन्मूलनं भवेत् । उपर्युक्तस्य कथनस्य कथमपि नेदं तात्पर्यं यद् सर्वे पाश्चात्याः विद्वान्सः तदनुसरन्ति स्म अपितु अधिकांशानां विदुषां समवाय एवेत्थं मन्यते स्म इत्यभिप्रायः ।

साम्प्रतिकाः विद्वान्सः परीक्षणानन्तरमेव पुराणेतिहासस्य तथ्यान् स्वीकर्तुं समुद्यताः नान्यथा । वस्तुतः पौराणिके इतिहासे याः घटनाः याभिः विधाभिः घटिताः आसन् ताः याथातथ्येनोपलब्धाः सन्ति, लेखकीय सम्मिश्रणं तत्र किंचिदपि न वर्तते । एतादृशो नाभविष्यच्चेत्तर्हि अद्यावधि तेषां घटनाक्रमाणां यथावत् तारतम्यमपि नाभविष्यत् । घटनाक्रमाणामपरिवर्तनमेव सूचयति यत् पौराणिकाख्यानेषु इतिवृत्तात्मकता स्वस्वरूपतो विद्यमानाऽस्ति ।

इतिहासस्य द्वे प्रमुखे लक्ष्ये स्तः । महापुरुषाणां परिचयः भूगोलस्य ज्ञानं च । अनया लक्ष्यतयातु पुराणेतिहासस्य महत्त्वं वर्णनातीतं प्रभवति । पं० राजबली पाण्डेय श्री काशी प्रसाद जायसवाल प्रभृतयो विद्वान्सः पौराणिकानुश्रुतीनाश्रित्य तत्सम्परीक्ष्य च पुराणप्रतिपादितानुश्रुतिषु सत्यतां प्रमाणयन्ति । तस्यां प्रामाणिकतायां समुत्थितः प्रश्नः दुराग्रहग्रहिलः प्रतिभाति । अत्रेतिहासशब्दस्य तात्पर्यं महाभारतादिकाव्यवाल्मीकिरामायणाभ्यां सह पुराणान्तर्गत वर्णितेतिहासत्वादस्ति । आचार्यो बलदेवोपाध्यायः स्वकीये ग्रंथे इतिहास पुराणयोः परस्परं भेदं प्रकटयन् प्रावोचत यत् काल्पनिकाः कथाः काल्पनिकान्याख्यानानि च पुराणक्षेत्रे सत्याश्च घटनाः इतिहासक्षेत्रे समायन्ति[2], श्री उपाध्यायस्यमतं तर्कं चिन्त्यं प्रतीयते यतः महाभारतमात्मानमितिहासशब्देनोद्बोधयति । एतदतिरिक्तं नलोपाख्यानस्यान्ते—

**इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ।**[3]

---

१. उद्धृत—पुराण पर्यालोचन—ले० डा० कृष्ण मणि त्रिपाठी पेज-१० वाराणसी ।

२. पुराण विमर्श—डा० बलदेव उपाध्याय पृष्ठ ५ पंक्ति ७-८

३. म० भा० व० प० अ० ७८ श्लोक १३

इत्याख्यानं स्वयं भगवता व्यासेनेतिहासशब्दत्वेनाभिधीयते । एवंचान्येषु पुराणेषूल्लिखिताभिः घटनाभिः विभिन्नानामाख्यानानामैतिहासिकत्वं सिद्धं भवति । वस्तुत: प्राचीनेषु ग्रंथेषु इतिहासपुराणे परस्परं समानार्थकेरूपे प्रयुक्ते जाते । अनयोरैक्यं पूर्णतयानसम्भवति। किन्तु अधिकांशे तयोरैक्यं वैदिककालीनैः ग्रंथैः संसिद्ध्यति अग्रिमेऽध्याये इत्ययं विषय: वर्णितोऽस्ति । अत: रामायण महाभारताभ्यां सह पुराणन्तर्गतो हीतिहासः भारतीयेतिहासस्य सीम्नि सन्निविष्टो वर्तत इति कथनं समीचीनं सिद्ध्यति । मतमिदं च भारतीयविद्वद्वर्गैः कतिपयैः पाश्चात्य विद्वद्भिरपि समर्थितम् । पार्जिटर: पौराणिकराजवंश वर्णनस्य परम्परामितिहासोपयोगिन्याः सामग्रयाः रूपेण संगृहीतवान् । शनैः-शनैः समालोचकानां दृष्टिः इतस्तावन्निक्षिपति । यदि पुराणेषूपवर्णितैतिहासिकी सामग्री लोक सामान्यविषया भवितुं शक्नुयात्तर्हि भारतीयेतिहासस्य समाजस्य च महत्कल्याणं संभवेत् । यदि चान्धतमिस्त्रायां विलुप्तेषु पुराणेतिहासस्य पृष्ठेसु प्रकाशकिरणानि प्रसृतानि भवन्तु तदैव प्राचीनानामार्याणामैतिहासिकभावं परिज्ञातुं वयं शक्ष्यामस्तथा च समाजं नवं विधातुं शक्ष्यामः ।

पुराणस्य पंचसु "लक्षणेषु—"

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंशानुचरितं चैव पुराणं पंचलक्षणम् ।।**[1]

इत्येतेषु पंचसु लक्षणेषु त्रीणि वंशानुचरितं तथा च वंश मन्वन्तराणि इतिहास एव । पुराणवर्णितानां राजवंशानां प्रामाणिकतायां सन्देहलेशो न वर्तते । अत एव राजवंश वर्णन प्रसंगे नलचरितस्यैते पात्र विशेषाः ऋतुपर्ण भीम नल कर्कोटकादय: कवि कल्पना प्रसूता: न सम्भवन्ति । विभिन्नेषु पुराणेषु निर्दिष्टानि नामानि तेषां पात्राणमस्तित्वं प्रमाणयन्ति । नलचरितस्य पात्राणां पुराणेषूपवेशनं कुत्र कुत्र प्राप्नोतीति वर्णनमग्रिमेऽध्याये कृतमस्ति ।[2]

---

१. वि० पु० ३।६।२४, म० पु० ५३।६४, म० भ० पु० १३७।१३, देवी भागवत १।२।१८, शि० पु० वा० सम० तूर्वार्द्ध १।४१, अ० पु० १।१४, भ० पु० २।२५, ब्र० वै० पु० १३१।६, कू० पु० पूर्वार्द्ध १।१२, वाराह पु० २।४, ग० पु० आचार खण्ड २।२८, स्का० पु० प्रभास खण्ड २।८४, ब्रह्माण्ड पु० पर्व भाग १।३८, शुक्रनीति ४।६३ ।

२. दृष्टव्य शोध प्रबन्ध द्वितीय अध्याय—पुराणेषु नलचरितं

उत्तर प्रदेशस्यार्धमात्रेण परिमाणेन तुल्यस्य "इंग्लैण्ड" देशस्येतिहासे यदि चतुर्णां राजवंशानां समावेशो—वर्तते तथा च तेषां वर्णने पाश्चात्येतिहासविदः पंचशताव्दीपर्यन्तं कालं यापयन्ति तदा—तु विशाले भारतवर्षे पंचसहस्रवर्षाधिकस्य सुदीर्घकालस्य व्यापक इतिहासे कियन्तो राजानः कियन्तः राजवंशाश्चोद्भूताः विलीनाश्चजाताः, के पुनः तानुपवर्णयितुं क्षमन्ते। सप्तद्वीपवत्याः पृथिव्याः प्रतिद्वीपं प्रतिप्रान्तं प्रतिखण्डं प्रतिवर्षमस्ति भूशास्त्रदृष्ट्या वर्णनं कुर्वतां पुराणानां वंशानुचरितावल्यामैतिहासिकत्वस्यासद्भावत्वं के प्रत्यारोपयितुं सक्षमाः सन्ति, नैतावदेव प्रत्युत् भूमण्डलात्परं ब्रह्माण्डं वर्णितवत्सु पुराणेषु ऐतिहासिकत्वाभाव इति कथनमुन्मत्त प्रलापवत् व्यर्थमस्ति।

सूर्यवंश चन्द्रवंशयोः विस्तृत उल्लेखः प्रायशः समस्तेषु पुराणेषु संप्राप्यते[1]। सूर्यवंशे वैवस्वतमनोः पुत्रस्येक्ष्वाकोर्नाम पुराणेषु, यत्र तत्रोपचर्चितं विद्यते। अस्यैव महाभागस्येक्ष्वाकोः वंशवल्यामेकपंचाशत्तमायां पितृपरम्परायामृतुपर्णोऽजायत्। अतोऽनन्तरं चतुर्दश्यां पितृ परम्परायां मर्यादापुरुषोत्तमो भगवान् रामोऽवतीर्णवान्। ऋतुपर्णनलयोः मित्रता सर्वविदितैव। एवं च कर्कोटकादयोऽपि यत्र तत्रोल्लिखिताः सन्ति। अतः नल चरितमितिहाससिद्धमिति स्पष्टम्। अस्य निगमनस्यायमप्येको हेतुः यन्महर्षिणा व्यासेन आदि कविना वाल्मीकिना च स्वस्व काव्येषु केवलमैतिहासिकान्येव पात्राण्युल्लिखितानि नेतराणि।

अस्तु नामैवं तत्किन्तु येन प्रकारेणर्तुपर्णादीनां वंश परम्परायाः वर्णनमिक्ष्वाकुप्रभृतीन्मूलपुरुषान् तद्यशांसि चावलम्व्य सविस्तरमुपनिवद्धं जातं तथा च मणि कांचन संयोगवत् रामस्याविर्भावेन तद्वंशः प्रचुरतया चर्चितो जातः न च तेन प्रकारेण नलः सुवहूपर्चचितः। महाभारतेषु व्यासः—

**आसीद्राजा नलो नाम बीरसेन सुतो बली।**[2]

इत्युक्त्वा नलोपाख्यानं प्रारेभे। मत्स्य पुराणेन ज्ञातं भवति यन्नलस्य जन्म कश्यपगोत्रेऽभवत् :—

**नलौ द्वावेव विख्यातौ वंशे कश्यप सम्भवे।**
**बीरसेन सुतस्तद्वन्नैषधश्च नराधिपः॥**[3]

---

१. भागवतम्—स्कन्ध ९, अध्याय १

२. म० भा० व० प० अ० ५० श्लो० १

३. म० पु० १२।५६

नलस्यवंशपरम्परायां तस्मात्पूर्व कोऽपि एतादृशः प्रतापशीलो राजा नाऽभूतेय ऐतिहासिक दृष्ट्योल्लेखनीयो भवेत् । राज्ञो नलस्य जन्म तात्कालिके कस्मिंश्चित् सामन्तवंशे समभवत् ततः पूर्व कस्यचित् यशस्विनः प्रतापिनश्च पुरुषस्याभावात् परवर्तिनि काले नलस्यैव प्राधान्याच्च तद्वंशविशेषः नलवंशत्वेन प्रख्यातोऽभूदिति प्रतीयते—

**नल वंश प्रसूतास्ते वीर्यवन्तो महाबलाः ।**[1]

राजा नलः निषधदेशस्य राजाऽऽसीत् । तस्य धर्मपत्नी विदर्भराज भीमस्य कन्या दमयन्ती आसीत् । तयो विप्रलम्भजन्यस्य सुदुःसहस्य कष्टस्य मार्मिकं वर्णनं प्रथमतो महर्षिणा व्यासेन महाभारते सन्निवद्धं कृतम् । नलस्य दैवदुर्बिपाकत्वमेव विप्रलम्भस्य मुख्यो हेतुः । प्रतिकूले च सति दैवे महान्तोऽपि मनीषिणः प्रच्युतमतयो भवन्ति दुरवस्थामनुभवन्ति च । कलिविमोहितः राजा नलः द्यूतक्रीड़ा व्यसनदोषत्वात् कष्टत्वमुपयाति । द्यूते स्वीयैः बन्धुवर्गैः पराजितः राज्यान्निष्कासितः अर्जुनभीमादिभ्रातृभिःसह बनवासदुखमनुभवन् ज्येष्ठो युधिष्ठिरः नैराश्यात् किं कर्तव्य विमूढ़त्वाच्च परित्राणायाकुल आसीत् । धर्मध्वजो युधिष्ठिरः स्वजीवने कष्टेन परितप्यमानः व्यथतेस्म, ज्येष्ठस्य भ्रातुः दुरवस्थामवलोक्य भीमादीनाममन्तःकरणे धर्म प्रत्यनास्था युधिष्ठिरं ज्येष्ठ भ्रातरं प्रत्यवज्ञा च जागर्तिस्म । इदं कष्टजातमनुभूय महात्मा वृहदश्वः युधिष्ठिरं सान्त्वयितुं नल चरितस्यैतिहासिकं कथावस्तु श्र ावयित्वोत्तमां शिक्षां प्रादात् । परमधार्मिकस्य युधिष्ठिरस्य द्यूतप्रवृत्तिः धर्मच्युतिजनितास्तीति वक्तुं न शक्यते अपितु कालदोष इति वक्तुं पार्यते । एवमेव भीमादीनामन्तः करणात् युधिष्ठिरं प्रत्युद्भूतामवज्ञाभावनां समापयत् पुनश्च भ्रातृस्नेहं सम्वर्धयन्नलचरितमुपाकरोत् । यद्यपि राजा कालस्य कारणमित्युक्तिः समीचीना तथापि यदा कदा कालोऽपि राज्ञः कारणं श्रूयते दृश्यते चेति सिद्धान्तं समुन्मीलयितुं महाभारते यथास्थान एव नल चरितमुपन्यस्तम् । आनुषंगिकतया नलचरिते वर्णितः नायकनायिकयोः विप्रलम्भः तथा च तस्योद्बेलकाः यावन्तः रसादयः समुपलब्धास्ते सर्वेऽर्वाचीनैः रसज्ञैः कविभिः सम्पोषिताः सन्तः कालान्तरे सहृदय हृदयाय चेतोहराः संजाताः ।

यदि हि नल चरिते ऐतिहासिकत्वं नाभविष्यत्तर्हि अस्येयती प्रतिष्ठापि साहित्यरंगे नाभविष्यत् । नलचरितमिदं यदि कस्यचित्कवेः कल्पनाजन्यं कथा

---

१. ब्रह्माण्ड पु० ७४।१९०

सौधमात्रं मन्येत तदा सुदीर्घकालंयावत् अस्याअप्रतिहतं जीवनं कथं सम्भवेत् । किमपि काल्पनिकं कथावस्तु नैतादृशं जनमनः समान्दोलयितुं शक्यते । संस्कृत वाङ्मयस्यान्यतमस्यानुसन्धित्सोः विदुषः प्रो० वी० एस० सूक्तंकरस्य महाशयस्य नलचरित विषये प्रयुक्ता टिप्पणी स्मरणीयास्ति—

"Who that has once read the beautiful tale of nala can forget the Golden Swans which carriad stealthtly unknown to anybody, the secret message of the heart of Love lorn Damayanti of the noble steeds which were made by nala to go down softly on their knees, as a gesture of homage to the Gods, before starting on theie eventful journey ? can a thoughtful reader forget how nala entered Kundinpuri, filling the directions with rattle of his chariot ? The familier clatter was noticed by his own peusive horses long pent up in their new stables, Who were thrilled by it. It was haard by Elephants tethered in their spacious stalls, and by the pea-cocks perched on palace tops, who raised their heads eagerly and looking around, cried gleefully thinking it was the rumbling of dark thounder clouds at their welcome approach of rainy session."[1]

नलचरितस्यमाधुर्यं नलजीवनस्यौदात्यं दमयन्त्याः पातिव्रत्यैकनिष्ठत्वं वलीयसः कालस्य क्रूरनर्तनं मर्मन्तुदोऽभिशापश्चेत्येते भावुकस्यान्तः करणं सहसा सवेगेनानुभावयन्ति यैः भावकाः साधारणीकरणवलात्तादात्म्यं स्थापयन्ति, फलतो धर्मं प्रत्यग्रेसरन्ती लोकचित्तवृत्तिः विपद्यपि धैर्यमवलम्वते धर्ममार्गं एवं प्रवर्तयितुं दृढ़ीकरोति । नलचरितस्य विषये कविताकामिन्याः हर्षः श्री हर्षः निरतिशयं मर्महरं वचः प्रयुक्तवान्—

वाग्जन्म वैफल्यमसह्यशल्यं
गुणाद्भुते वस्तुनि मौनिता चेत्
खलत्वमल्पीयसि जल्पितेऽपि
तवस्तु वन्दिभ्रम भूमितैव ।[2]

---

1. On the meaning of Mahabharata by V. S. Suktankar Popular Book Depot. Bombay-7 1957 (Page 38)

२. नैषध ८।३२

द्वितीयोऽध्यायः

# पुराणेतिहासे नलचरितम्

**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ।।[1]**

वस्तुतो हि भगवतो निःश्वासभूतानां वेदानां साध्वर्थं प्रतिपादकेभ्यः पुराणेभ्यः प्रशस्तिरियं समीचीनैव वर्तते । वैदिक वाङ्मयस्यासार्वजनीनत्वादथ चासार्ववर्णिकत्वात् भगवान वेद व्यासः सरलसुबोध शैल्यां निखिलं वेदज्ञानं समुन्मील्य पुराणसाहित्यं प्रस्तुतवान् । भारतीय संस्कृतेः स्वरूप प्रतिपत्तये पुराणानुशीलनं परमावश्यकं भवति । पुराणन्तु आर्य संस्कृतेः मेरुदण्डोऽस्तीति व्यपदेशः नात्यर्थतामुपगच्छति, यतः सम्पूर्णं वैदिकं ज्ञानं पुराणेषु विस्तृततयोपलभ्यते । पूर्वस्मिन्नध्याये नलचरितस्य बीजं वैदिकेषु ग्रन्थेषूपलब्धमिति स्पष्टम्[2] नूनमेव वैदिकान्छब्दान पुराणं स्वीयविशिष्ट शैल्यामुपवृंहयति । नलचरितस्य रूपे "नलो नैषधः" अस्य वैदिक शब्दस्य विवेचनं पुराणेष्वेव जातम् । शनैः शनैः रुप्तं च तद्वैदिकं बीजं पुराणेष्वंकुरितं सदितिहासे वृक्षत्वमुपयातम् । कथा साहित्ये शैशवं परवर्तिनि काव्य साहित्ये च यौवनत्वं भजमानं जनमनांस्याहर्तुं प्रारेभे । अस्तु ! प्रस्तुतेऽध्याये पुराणेतिहासे नलचरितस्योपवृंहणं केन प्रकारेण कथं कुत्र कुत्र च कृतं जातं तथा च पुराणोपनिबद्धनलचरितवर्णनं मूल नलचरितस्य कथावस्तुन आयामं कुत्र कुत्र संस्पृशति विस्तारयति चेत्यादि भावच्छदं विवेचितं वर्तते ।

अतः पूर्वस्मिन्नध्याये पुराणेषु नलचरितस्योल्लेखनं नलचरितस्यैतिहासिकत्वं प्रमाणयतीत्युक्तम् । सम्प्रति प्रसंग प्राप्त प्रकरणानुसारेण पुराण विषये विमर्शः तदनन्तरं पुराणेषु नलचरितस्योपलाभो व्याख्यातः ।

---

१. नारदीय पु० २।२४।१७

२. दृष्टव्य—शोध प्रबन्ध प्रथम अध्याय नलचरितस्य वैदिक मूलोत्पत्ति ।

पुराण शब्दस्य व्युत्पत्तिः पाणिनिशास्त्रे यास्कशास्त्रे विभिन्न पुराणेषु चानेकधा विहिताऽस्ति। पुरातनमिति पदन्तु पुराभवमित्यर्थे सायंचिरं प्राह्णे-प्रगेऽव्ययेभ्यष्ट्युटुलौ तुट् च"[1] इति सूत्रेण पुराशब्दात् ट्यु प्रत्यये कृते तुडागमे च सति निष्पद्यते; किन्तु स्वयं पाणिनिरपि "पूर्वकालैक सर्व जरत नव केवलाः समानाधिकरणेन"[2] "पुराण प्रोक्तेषु ब्राह्मण कल्पेषु"[3] इति सूत्रयोः पुराणं पदं पठितवान्, अनेन पुरेतिशब्दात् ट्यु प्रत्ययस्तु विधीयते परन्तु निपातनात् तुडागमस्याभावात्पुराणमिति पदं साधु भवति। यास्कः पुरानवं भवति[4] इत्युक्त्वा पुराणानां प्राचीनकालिकंमर्थं संकेतयति। वायु पुराणे कथितं यत्—

**यस्मात्पुरा ह्यनतीदं पुराणं तेन तत्स्मृतम्।**
**निरुक्तमस्य यो वेद सर्व पापैः प्रमुच्यते॥[5]**

अस्मात् किंचित् भिन्ना व्युत्पत्तिः पद्मपुराणे प्राप्यते—

**पुरा परम्परां वष्टि पुराणं तेन तत्स्मृतम्।[6]**

पुरा परम्परां वष्टि कामयते अर्थात् यद्धि प्राचीनां परम्परां कामयति तत्पुराणमिति। ब्रह्माण्ड पुराणेऽस्यान्योऽर्थः प्रतिपद्यते—

**यस्मात्पुराह्यभूच्चैतत्पुराणं तेन तत्स्मृतम्।**
**निरुक्तमस्य यो वेद सर्व पापैः प्रमुच्यते॥[7]**

इति।

आभिः व्युत्पत्तिभिः स्पष्टमिदं प्रतीयते यद् पुराणानां वर्ण्यः विषयः प्राचीन वर्ण्यन सम्बद्धोऽस्ति। वैदिक वाङ्मये तदुत्तरवर्तिनि साहित्ये चेतिहास-पुराणे परस्परमपरपर्यायित्वेन प्रयुक्ते जाते। यास्कः इति+ह+आसेति तस्य व्याख्याकारः दुर्गाचार्यश्च निरुक्तवृत्तौ "इति ह एवमासीत् इति य उच्यते स

---

१. पाणिनीय अष्टाध्यायी ४।३।२३

२. ,, ,, २।१।४९

३. ,, ,, ४।३।१०५

४. निरुक्त ३।१९

५. वायु पुराण १।२०३

६. पद्म पुराण ५।२।५३

७. ब्रह्माण्ड पुराण १।१।१७३

इतिहासः" इत्युक्त्वेतिहासार्थं विस्पष्टयति। छान्दोग्योपनिषदि सनत्कुमारं ब्रह्मविद्यांमर्जयितुं समागतो देवर्षिः नारदः स्वाधीत विद्या प्रसंग इतिहासपुराणं पंचम वेदत्वेनोदाजहार "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमार्थवणमितिहास पुराणं पञ्चमं वेदानां वेदम्"[1] यास्कः निरुक्ते ऋचां विस्तृत विवेचनार्थं ब्राह्मण ग्रन्थानां कथां "इतिहासमाचक्षत" इत्युक्त्वोदाहरत्। पुराणस्य व्युत्पत्तिलभ्योऽर्थः इतिहासस्य व्युत्पत्तिलभ्येनार्थेन सह साम्यं भजते। पुराण-स्यान्यव्युत्पत्ति दर्शनेनेदं स्पष्टं भवति—

१—पुरति अग्रे गच्छतीतिपुरा—तुदादिगण पठितात्पुर अग्रगमन इति-धातोः औणादिके "का" प्रत्यये कृते सति पुरेति पदं निष्पद्यते यदव्ययं कथ्यते। कोषानुसारेणायंशब्दः त्रयाणामर्थानामभिव्यंजको भवति—प्रबन्धस्यातीत कालस्य संकटस्य च, या—"स्यातप्रबन्धे पुरातीते संकटागमिके तथा"[2]

२—दैवादिकात्पुरापूर्वकाण् प्राणने धातोः पचाद्यचि कृते सति पुराणं व्युत्पद्यते, अच् प्रत्ययान्तत्वात् पुराणं पुंल्लिगे प्रयोक्तव्यं किन्तु "पुराणं पञ्च-लक्षणम्[3] "पुराणं षोडशपणे पुराणं प्रत्नशास्त्रयोः[4]" पुराणं ग्रन्थ भेदे च क्लीबे त्रिषु पुरातने[5] इत्येतैः पुराणं नित्य नपुंसकलिंग एव प्रयुज्यते।

३—पुराऽतीतानर्थानणति कथयतीति व्युत्पत्या पुरोपपदाद्भौवादिकाण शब्द इति धातोः पचादित्वादचि कृते सति पुराणं पदं निष्पद्यते।

४—पुरा पूर्वकात् णीञ् प्रापण इति धातोः औणादिके "ड" प्रत्यये, टिलोपे णत्वे च कृते सति पुराणमिति सिद्धम्।

उपरि निर्दिष्टैः व्याकरणपुराण गत व्युत्पत्तिलभ्यैरर्थैरेवेदंस्पष्टं यदिति-हासपुराणयोः वर्ण्यो विषयः प्रायश एक एव। अस्तु! एतावदवश्यमेवाद्य पुराणेति शब्द मात्र श्रवणेन व्यास कृतान्यष्टादश पुराणान्येव सहसा स्मर्यमा-णानि भवन्ति।

---

१. छान्दोग्य ७।१

२. मै० कौ० २५

३. म० पु० ५३।६४

४. हेमचन्द कोष पृष्ठ १३ पंक्ति ७

५. नानार्थरत्नमाला पृष्ठ ७७ पंक्ति ८

अपरत्रेतिहासपुराणे स्वस्ववैशिष्ट्येन परस्परं विशिष्येते। इतिहासशब्दः अथर्ववेदे ब्राह्मणग्रन्थेषु च पुराणाद् भिन्नार्थे स्वतंत्र रूपेणापि निर्दिष्टोजातः। इतिहासस्य व्युत्पत्ति लभ्योऽर्थः पुराकाले घटितघटनया सम्बद्धो वर्तते। यास्कः देवापि शान्तनोः कथानकं तथा विश्वामित्र सुदास पैजवन सम्बन्धि कथानकमितिहासत्वेनाभिदधाति।[1] पुराणेषु इतिहासशब्दः निःसंशयमितिवृत्तत्वेनैवगृह्यते।

सामान्यतो महाभारतमितिहासपदेन व्यपदिश्यते। स्वयं महाभारतमपि स्वात्मानमितिहास पदेनोद्घोषयति—

**जय नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।[2]**
**इतिहासोत्तमादस्माज्जायन्ते कवि बुद्धयः॥[3]** इत्यादि।

अत्र बाल्मीकि रामायणमपि इतिहास पदेन स्वीकरणं प्राचीन शास्त्रीय मर्यादान्तर्गतमेव विद्यते। राजशेखर मतेनेतिहासः द्विधो विभज्यते—

**परक्रिया पुराकल्प इतिहासगतिर्द्विधा।**
**स्यादेकनायकापूर्वा द्वितीया बहु नायका॥[4]**

अनेनेतिहासस्य क्षेत्रं सुविस्तृतमाकल्प्यते। इतिहासपुराणे द्व एव पूर्वं कालिकैः वर्णनैः सम्बद्धे स्तः, द्वयो विभाजनरेखा प्राचीन काले निरतिशयमस्फुटाऽसीत् किन्तु परवर्तिनिकाले शनैः शनैः उद्गच्छन्ती सा रेखा परस्परं तद्विभिनक्ति। आद्यशंकराचार्येण स्व भाष्ये पुराणेतिहास शब्दयोः वर्णन क्षेत्रं पृथक्त्वेन प्रदर्शितम्—इतिहास इत्युर्वशी पुरुरवसोः संवादादिः "उर्वशीहाप्सरा" इत्यादि ब्राह्मणमेव पुराणम्" "असद्वा इदमग्र आसीतित्यादि"[5] शंकराचार्यानुसारेणेतिहासपुराणे वैदिक काले समुपलब्धे भवतः। अत एव मत्स्य पुराणस्योक्तिरियं चरितार्था भवति—

---

१. तत्रेतिहासमाचक्षते—देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः (नि० २।३।१) तथा तत्रेतिहासमाचक्षते—विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। (नि० २।७।२)

२. म० भा० उद्योग प० १३६।१८

३. " आदि प० २।३८५

४. काव्यमीमांसा।

५. छान्दोग्य ७।१ शांकर भाष्य

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥**[1]

पुराणस्य पुरातनत्वं प्रतिपत्तुं वैदिकेषु लौकिकेषु च साहित्येषु कृत पुराण-चर्चावश्यमेवैषितव्या ।

१—ऋग्वेदे सनापुराणमध्येरात्[2] तथा पुराणमोकः सख्यं शिवं वाम्[3] इतिस्थले पुराणशब्दस्योल्लेखो दृश्यते ।

२—अथर्व वेदे पुराणस्य प्रयोगो विशिष्टाया विद्यायाः रूपे प्रयुक्तो जातः—

**ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।**
**उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः ॥**[4]

एतदतिरिक्तम्—**स बृहतीं दिशमनुव्यचलत् ॥१०॥**
**तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानु व्यचलन् ॥१०॥**
**इतिहासस्य च स वै पुराणस्य च गाथानां च नाराशंसीनां**
**च प्रियं धाम भवति च एवं वेद ॥१२ ॥**[5]

अन्यो परिमार्जित उल्लेखः एवमस्ति—

**यैत आसीत् भूमिः पूर्वा यामद्धा त य इद् विदुः ।**
**यो वै तां विद्यान्नामथा स मन्येत पुराणवित् ॥**[6]

अर्थात् दृश्यमानाज्जगतः पूर्व प्रथम कल्पस्य या भूमिरासीत् तां सत्य पुरुष एव जानाति । यो हि याथार्थ्येन तामवगच्छेत् स पुराण वित् भवति ।

३—गोपथब्राह्मणे—"एवमिमेसर्वे वेदानिर्मिताः सकल्पाः सरहस्याः स ब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वख्याताः सपुराणाः" ।[7]

"पंचवेदान् निरमिमत् सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराण-वेदम् । स प्राच्या एव दिशः सर्पवेदं निरमिमत्, दक्षिणस्याः पिशाचवेदं,

---

१. म० पु० ५३।३
२. ऋग्वेद ३।५४।६
३. " ३।५८।६
४. अथर्व ११।७।२४
५. " १५ काण्ड, १ अनुवाक्, ६ सूक्त
६. अथर्व ११।८।७
७. गो० ब्रा० पूर्व भाग २।१०

प्रतीच्या असुरवेदमुदीच्या इतिहासवेदं ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदं ।"[१]

"सतान् पंचवेदानभ्य श्राभ्यददभ्य तपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यः पंचमहाव्याहृतीनिरंमिमत् वृधत् करत् गुहत् महत् तदिति । वृधदिति सर्पवेदात् करदिति पिशाचवेदात् गुहदित्यसुरवेदात् महादितीतिहासवेदात् तदिति पुराणवेदात् ।"[२]

४—शतपथथ ब्राह्मणे—"मध्याहुतयो ह वा एता देवानाम् । यदनुशासनानि विद्यावाकोवाक्यमितिहासपुराणं गाथा नाराशंस्यः । यएवं विद्वान् अनुशासनानि विद्यावाकोवाक्यमितिहासपुराणं गाथा नाराशंसीरित्यहरहः स्वाध्यायमधीते । मध्वाहुतिभिरेव तद्देवांस्तर्पयति ।[३]

"क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति य एवं विद्वान् वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते ।[४]

"ऋग्वेदो यजुर्वेदो सामवेदोऽथर्वांगिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि वा चैव सम्राट प्रजायते ।[५]

"अथाष्टमेऽहन———मत्स्याश्च मत्स्य हनश्चोपसमेता भवन्ति । तानुपदिशतीतिहासोवेदः सोऽयमिति किंचिदितिहासमाचक्षीत् । अथ नवमेहन् तानुपदिशति पुराणं वेदः सोऽयमिति किंचित पुराणमाचक्षीत् ।[६]

५—तैत्तिरीय आरण्यके—"ब्रह्म यज्ञप्रकरणे-यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयो देवानामभवन् । ताभिः क्षुधं पाप्मानमपाघ्नन् ।"[७]

६. बृहदारण्यके—"सयथार्द्रैन्धनाग्नेख्याहितात् पृथग्धूमा विनिश्चरन्ति, एवं वा अरेऽस्य महतोभूतस्य निःश्वसितमेतद् यदृग्वेदो, यजुर्वेदः, सामवेदोऽथर्वांगिरस इतिहासपुराणम् ।"[८]

---

१. तत्रैव १।१०
२. " १।१०
३. शतपथ ब्राह्मण ११।५;६।८
४. " " ११।५।७।६
५. " " १४।६।१०।६
६. शतपथ ब्राह्मण ११।४।३।१२-१३
७. तै० आ० २ प्रपा० ६ अनुवाक्
८. बृहदारन्यक २।४।११

७—छान्दोग्योपनिषदि—"नामवा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहास पुराणः पंचमो वेदानां वेदम् ।"[१]

"वाग्वाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति, यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पंचमम् ।"[२]

उपरिलिखितानीमान्युद्धरणानि निम्ननिर्दिष्टानि तथ्यानि संकलयन्ति—

(अ) महाभूतपरब्रह्मणः वेदचतुष्टयवदेवेतिहासः पुराणंचापि समुत्पन्नमभूत्,

(ब) वेदवत् पुराणमपिनित्यम्

(स) अस्मादेवेतिहास पुराणे पंचमवेदत्वेनाख्याप्यते,

(द) इतिहास पुराणे केवलं मौखिकतत्वस्य द्योतके न भूत्वा सम्भवतः ग्रन्थरूपेणास्तां यतः तेऽध्ययनस्य विषय आस्ताम् ।

(य) आरण्यक युगे पुराणानां वहुत्वस्य कल्पना प्रारब्धासीत् । अनेकेषु रूपेषुपुराणं वर्तमानमासीत् । ग्रन्थरूपे नासीत् न भवतु आख्यान रूपे तु नूनमेवासीत् ।

वैदिक वाङ्मयानन्तरं सूत्र ग्रंथेष्वपीतिहासपुराणयोः चर्चोपिलभ्यते । अत्र कानिचिदुद्धरणानि द्रष्टव्यानि—

**आश्वलायन गृह्यसूत्रे—**

१. "अथस्वाध्यायमधीयीत् ऋचौ यूजंषि सामान्यथर्वांगिरसो ब्राह्मणानि कल्पान्गाथा नाराशंसीदितिहास पुराणानीति ।"[३]

२. "यदृचोऽधीते पय आहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषिघृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथावांगिरसः सोमाहुतिभिर्यदि ब्राह्मणानि कल्पान्गाथा नाराशंसीदितिहास पुराणानीत्यमृताऽहुतिभिः ।"[४]

३. "य दृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा उपक्षरन्ति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्यवः कुल्या यदथर्वांगिरसः सोमस्य कुल्या यत् ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहास पुराणानीत्यमृतस्य कुल्याः ।"[५]

---

१. छान्दोग्य ७।१।४
२. " ७।२।१
३. आश्वलायन गृह सूत्र अ० ३। खण्ड ४।१५, १६, १७।
४. " " " "
५. " " " "

एवमेवापस्तम्वधर्मसूत्रे कस्यचित्पुराणस्य द्वौ श्लौको समुद्धृतावभवतां ययोः सन्तानेच्छूनामष्टाशीति सहस्र परिमितानामृषीणामर्यमणः दक्षिणमार्गात् चलित्वा श्मसानोपगमनं तथा च सन्तानाभिलाषिणामष्टाशीतिसहस्रपरिमितानामृषीणाममृतत्वोपवर्णनं कृतमस्ति—

**अष्टाशीति सहस्राणि ये प्रजामीषिरर्षयः ।**
**दक्षिणेनार्यम्णः पन्थानं ते श्मसानानि भेजिरे ॥**
**अष्टाशीति सहस्राणि ये प्रजां नेषिरर्षयः ।**
**उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि भेजिरे ॥**

अनेन साम्यं भजमानाः श्लोकाः ब्रह्माण्डपुराणे[1] प्राप्नुवन्ति । तथा च पद्म पुराणे, विष्णु पुराणे च प्राप्नुवन्ति ।[2]

भविष्य पुराणस्य तु नामतो निर्देशः आपस्तम्वे धर्मसूत्रे प्राप्यते ।--"आभूत संप्लवास्ते स्वर्गजितः पुनः सर्गे बीजार्था भवन्तीति भविष्य पुराणे ।"[3] आपस्तम्व धर्मसूत्रमीशवीयतः पंचषवर्षपूर्वस्य निर्णीतमस्ति अनेन स्पष्टं प्रतीयते यदद्यतो २५०० वर्ष पूर्वमेव भविष्य पुराणं प्रणीतं जातम् ।

कौटिलीयार्थशास्त्रे[४], गौतम धर्म सूत्रे[५], व्यासस्मृतौ[६], उशनस स्मृतौ[७] मनुस्मृतौ[८], याज्ञवल्क्यस्मृतौ[९], शुक्रनीतौ[१०], शवरजैमिनि सूत्रे[११], इत्येतेषु पुराणेतिहास शब्दयोः प्रयोगः प्राप्यते ।

एभिः विवरणैः पुराणानां प्राचीनत्वं स्पष्टतया परिज्ञातुं शक्यते । वैदिक-

---

१. ब्रह्माण्ड पु० अ० ६५ । श्लोक १०३, १०४ एवम् अ० ५४ । श्लोक १५९-१६६
२. वि० पु० १।८।९१
३. आ० स्त० घ० सू० १।९।१४।६
४. अर्थशास्त्र कौटिल्य १।३, ५।६, ५।१३-१४, ५।३
५. गौतम घ० सू० ८।४-६, ११।१३
६. व्यासस्मृति ४।४५, १।५
७. उशनसस्मृति ३।३४
८. मनुस्मृति ३।१३१
९. याज्ञवल्क्य स्मृति (उपोद्घात श्लो० ३), १।४५-४६, १।१०१, ३।१८९
१०. शुक्रनीति १।१७९, ४।१६९
११. शबर जैमिनि सूत्र १०।४।१३

कालादेव पुराणानामवधारणा प्रादुरभवत् किन्तु तेषां वर्तमानं स्वरूपं वैदिककाले परिलब्धं न वाऽथवा वर्तमानैरष्टादशपुराणैः वैदिक वाङ्मयः परिचितोनवेति निश्चप्रचतया कथनं कठिनम् । कौटिल्यस्य (ई० पू० चतुर्थ शती) कालं यावत्पुराणसंहिता प्रकाशिताऽऽसीत् तथा च तस्मिन्समये राजसंसदि पारिश्रमिक शुल्क भोगिनः पौराणिकाः अधिकारिणः नियुक्ताः भवन्तिस्मेति निर्णीतम् ।

अष्टादश पुराणरूपेण पुराण संहितायां चतुर्लक्षाः श्लोकाः प्राप्नुवन्ति । प्रत्येकस्य महायुगस्य द्वापरे वेदव्यासः आविर्भूय वेदानां पुराणानां च व्याख्यानं विभाजनन्च प्रस्तौति । वस्तुतो व्यासः कस्यचित् व्यक्तिविशेषस्याभिधानत्वेन न स्वीकृतः प्रत्युत् पदाधिकारिणोऽभिधानत्वेन स्वीकृतः । वर्तमानो व्यासः कृष्ण द्वैपायनः व्यास देवोऽस्ति । मर्त्यधर्माणां प्राणिनां कल्याणाय सो देवः पुराणान्यसृजत्—

**द्वापरे द्वापरे विष्णुः व्यास रूपेण सर्वदा ।**
**वेदमेकं स कुरुते बहुधा हित काम्यया ॥**
**अल्पायुषोऽल्पबुद्धीश्च विप्रान् ज्ञात्वा कलावथ ।**
**पुराणसंहितां पुण्यां कुरुतेऽसौ युगे-युगे ॥**
**स्त्री-शूद्र-द्विजबन्धूनां न वेद श्रवणं मतम् ।**
**तेषामेव हितार्थाय पुराणानि कृतानि च ॥**[1]

वर्तमान व्यासात्पूर्वमष्टाविंशति संख्याकाः व्यासाः जन्मलेभिरे ये क्रमशः ब्रह्मा-प्रजापति-शुक्राचार्य-वृहस्पति-सूर्य-तम-इन्द्र-वशिष्ठ-सारस्वत-त्रिधामा-त्रिशिख भरद्वाज-अन्तरिक्ष-वर्णी-त्रय्यारुणि-धनंजय-ऋतुंजय-जय-भारद्वाज-गौतम-हर्यात्मा-बाजश्रवा-सोमसुष्मायण-तृणबिन्दु-मार्गऋक्ष-(बाल्मीकि)-शक्ति-पराशर-जातुकर्ण-कृष्ण द्वैपायना इती मे सन्ति । श्री कृष्ण द्वैपायन व्यासेन प्रणीतानि पुराणानि मत्स्य पुराणे[2], देवी भागवते[3], विष्णु पुराणे[4], तथा च भागवतादिषु पुराणेषु परिचीयन्ते । देवी भागवत् पुराणानुसारेण—

---

१. देवी भागवत् १।३।१९-१०-१०
२. मत्स्य पुराण अ० ५३
३. देवी भागवत् १।३।४-१६
४. विष्णु पुराण ३।६।८४

मद्वयं भद्वयं चै व ब्रत्रयं व चतुष्टतम् ।
अनाप लिंग कूस्कानि पुराणानि प्रचक्षते ॥[1]

अत्र मद्वयात् मत्स्य पुराणं मार्कण्डेय पुराणं च, भद्वयात्-भागवतपुराणं भविष्य पुराणं च, ब्रत्रयात्-ब्रह्म-ब्रह्म वैवर्त-ब्रह्माण्ड पुराणानि व चतुष्टयात्-वामन-वायु-विष्णु-वाराह पुराणानि, अकारात्-अग्नि पुराणम्, नाकारात्-नारद-पुराणम्, पदः पद्मपुराणम्, लिकरात् लिंग पुराणम्, गकारात्-गरुण पुराणम तथा च कूकारात, कूर्म्म पुराणम्, स्ककारात्-स्कन्दपुराणं गृह्यते । एतेषु चतुर्लक्षसंख्याकाः श्लोकावर्तन्ते । पुराणेषूपलब्धवर्णनानुसारेण विभिन्न पुराणानां श्लोकसंख्या निम्ननिर्दिष्टाः सन्ति—

| | भागवत | देवी भागवत | अग्नि पु० | मत्स्य पु० |
|---|---|---|---|---|
| १. ब्रह्म पुराण | १०,००० | १०,००० | २५,००० | १३,००० |
| २. पद्म पुराण | ५५,००० | ५५,००० | — | ५५,००० |
| ३. विष्णु पुराण | २३,००० | २३,००० | २३,००० | २३,००० |
| ४. शिव पुराण | २४,००० | २४,६०० | १४,००० | २४,००० |
| | | (वायु) | (वायु) | (वायु) |
| ५. नारद पुराण | २५,००० | २५,००० | २५,००० | २५,००० |
| ६. भागवत पुराण | १८,००० | १८,००० | १८,००० | १८,००० |
| ७. मार्कण्डेय पुराण | ९,००० | ९,००० | ९,००० | ९,००० |
| ८. अग्नि पुराण | १५,४०० | १६,००० | १२,००० | १६,००० |
| ९. भविष्य पुराण | १४,५०० | १४,५०० | १४,००० | १४,५०० |
| १०. ब्रह्मवैवर्त पुराण | १८,००० | १८,००० | १८,००० | १८,००० |
| ११. लिंग पुराण | ११,००० | ११,००० | ११,००० | ११,००० |
| १२. वराह पुराण | २४,००० | २४,००० | २४,००० | २४,००० |
| १३. स्कन्ध पुराण | ८१,१०० | ८१,००० | ८४,००० | ८१,००० |
| १४. वामन पुराण | १०,००० | १०,००० | १०,००० | १०,००० |
| १५. कूर्म्म पुराण | १७,००० | १७,००० | ८,००० | १८,००० |
| १६. मत्स्य पुराण | १४,००० | १४,००० | १३,००० | १४,००० |
| १७. गरुड़ पुराण | १९,००० | १९,००० | ८,००० | १९,००० |
| १८. ब्रह्माण्ड पुराण | १२,००० | १२,१०० | १२,००० | १२,२०० |
| | ४,००,००० | | | |

१. देवी भागवत १।३।२१

## पुराणेषु नलचरितम्

एतेषु चतुर्लक्षात्मेकष्वष्टादशपुराण साहित्येषु नलस्य तत्सम्बन्धिनां पात्राणां वर्णनमनेकेषु पुराणेषु प्राप्नोति। अन्यत्र चापि गणेश पुराणाद्युपपुराणेष्वपि नलचरितेनसम्बद्धा सामग्री प्राप्यते। पुराणेषु मत्स्य-भविष्य-भागवत्-विष्णु-वायुवराह-ब्रह्माण्ड-अग्नि-कूर्म्म-लिंग-स्कन्द-शिव पुराणादिषु नलचरितमुल्लिखित मस्ति। एतेषु समग्रेषु पुराणेषु विभिन्नस्थलप्राप्तानां नलचरितानामध्ययनेन नूतनानां तथ्यानां परिज्ञानं भवति। सम्पूर्ण एव पुराणसाहित्ये नलनाम्ना प्रख्यातयशसां सप्तसंख्याकानां पात्राणां वर्णनं दृष्टिपथे आपतितम्—

**१. नलः प्रथमः**—अयं यदुपुत्रो नलः यस्योल्लेखः भागवते[1], विष्णु पुराणे च[2] सम्यगुपलभ्यते।

**२. नलो द्वितीयः**—वानरजातौ समुत्पन्नः अग्नेः पुत्रोऽयं नलः ब्रह्माण्ड पुराणे वर्णितोऽस्ति, अस्य मातुर्नामे 'कनक बिन्दु' इत्यासीत[3]

**३. नलः तृतीयः**—रामायणे, वानराणां सेनापति आसीत्[4]

**४. नलश्चतुर्थः**—मत्स्य पुराणेऽयं दैत्यराजस्य हिरण्यकशिपोः भ्रातुः हिरण्याक्षस्य पुत्रत्वेन प्रसिद्धः।[5]

**५. नलः पंचमः**—निषध नामकस्य राज्ञः पुत्र आसीत्। इक्ष्वाकुर्बशस्य सप्तति-तमेऽन्वये यो जन्म लेभे। भगवतो रामस्य प्रपौत्रत्वेनायं प्रसिद्ध इति वर्णितम् मत्स्ये—

**'अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः।**
**नलस्तु नैषधस्तस्मान्नभस्तस्माद्जायत ॥[6]**

**६. नलः षष्ठः**—कश्यप वंशीयः बीरसेनस्य पुत्रः राज्ञ ऋतु पर्णस्य प्रिय मित्रं च योहि अक्षविद्यायाः प्रतिदानेऽश्वविद्यां प्रादात्।[7]

---

१. भागवत् ९।२०।२३
२. बिष्णु पुराण ४।११।५
३. ब्रह्माण्ड पु० खण्ड ३।७।२२६
४. ब्रह्माण्ड पु० खण्ड ३।३।२३४
५. म० पु० ६।२६
६. मत्स्य पु० १२।५२
७. मत्स्य पु० १२।२६) वायु० २६।१७२-१७३-१७७) (भागवत ९।९।१७) (ब्रह्माण्ड खण्ड ३।६३।६३, १७३।२०२, ७४, १९० वाराह अ० ४४) (विष्णु-चतुर्था ४।३९)

**७. नलः सप्तमः**—अयं नलः 'नन्दनोदर दुन्दुभि' इति नाम्ना प्रसिद्धः। अस्य पितुर्नाम तैत्तिरीत्यासीत्। अनेनाश्वमेधोयज्ञः कृतः। तत्र चलति सत्यतिरात्रे समुपस्थितः सन् पुनर्वसुः तस्य पुत्रत्वमाप।[1]

एतेषु द्वावेव राजानावास्ताम्, निषधस्य पुत्रो नलः वीरसेनस्य पुत्रो नलश्च। नामसादृश्यात् द्वावेव समानौ नावगच्छेतामित्येतावता पुराणेषु स्पष्टतयोल्लेखो विहितः। मत्स्यपुराणेऽन्येभ्यो व्यतिरिक्तं नलं प्रदर्शयितुमेवोक्तम्—

**'नलौ द्वावेव विख्यातौ वंशे कश्यप सम्भवे।**
**वीरसेन सुतस्तद्वन्नैषधश्च नराधिपः॥**[2]

वायुपुराणेऽपि एतादृश उल्लेखो विद्यते—

**'नलौ द्वाविति विख्यातौ पुराणेषु दृढव्रतौ।**
**वीरसेनात्मजश्चैव यश्चेक्ष्वाकु कुलोद्वहः॥'**[3]

ब्रह्माण्ड पुराणेऽपि तद्वदेव श्लोकः प्रतिविहितः—

**'नलौ द्वाविति विख्यातौ पुराणेषु दृढव्रतौ।**
**वीरसेनात्मजश्चैव यश्चेक्ष्वाकु कुलोद्भवः**[4]

इक्ष्वाकुवंशोत्पन्नः नलः प्रस्तुतस्य नलचरितस्य चरितनायकोनास्ति, वीरसेनस्य पुत्रो नल एव चरितनायकोऽस्ति। निषधपुत्रस्य नलस्य वंश परम्परायां नमस्य जन्म जातम्—

**'निषधस्य नलः पुत्रो नलस्य तु नभः सुतः**[5]

किन्तु महाभारतादिवर्णिते नलचरिते इन्द्रसेनस्य नाम नल पुत्रत्वेन गृहीतमस्ति—

**'जनयामास च ततो दमयन्त्यां महात्मनाः।**
**इन्द्रसेन सुतं चापि इन्द्रसेनां च कन्यकाम्॥**[6]

इन्द्रसेन नाम्ना प्रख्याताः पुराणेषु त्रयः पुरुषा प्राप्यन्ते—

---

१. मत्स्य पु० अ० ४४।६३५

२. म० पु० १२।५६

३. वायु पु० २६।१७३-१७४

४. ब्र꣡ ब्रह्माण्ड पु० खण्ड ३।६३।१७४

५. ब्रह्माण्ड पु० अ० ७४।१६० (मोतीलाल बनारसीदास १९७३)

६. म० भा० व० प० अ० ५७ श्लोक ४६ (गीता प्रेस संस्करण)

**१. इन्द्रसेनः (प्रथम)**—अयं देवर्षभस्य पुत्र आसीत् ।[1]

**२. इन्द्रसेनः (द्वितीय)**—अयं कूर्चस्य पुत्रः वीतिहोत्रस्य च पितासीत् ।[2]

**३. इन्द्रसेनः (तृतीय)**—पूर्वजन्मनि बलि नाम्ना प्रसिद्धोऽयं भगवतः नाराय-यणात् सुतललोकस्य राज्यमवाप्तवान् तथा च कंसेन हतान् षड्भ्रातृन् कृष्णस्य कृते परावर्तयामास ।[3]

पुराणेषु नलपुत्रस्य नाम न प्राप्यते, महाभारतेऽपि गोरखपुरस्थ गीता प्रेस संस्करण एवेन्द्रसेनस्य नामोल्लिखितं प्राप्यते, पूनातः प्रकाशिते महाभारते इन्द्र-सेनस्य नाम आप्यते । नलस्यैकः पुत्रः एका च पुत्री आसीदिति तु सर्वे जान-न्त्येव । पुत्र्याः नाम इन्द्रसेना आसीत् । इन्द्रसेनाया विषये महाभारतीयं नल चरितं मौनमस्ति । वायु पुराण एकस्याः इन्द्र सेनायाः समुल्लेखो वर्तते या मुद्गलस्य पत्नी आसीत् । अस्या इन्द्रसेनायाः पुत्रनाम बध्याश्च आसीत्[4] । इयमिन्द्रसेना राज्ञोनलस्य पुत्री अस्ति न वेति सिद्धिः कष्टसाध्या लक्ष्यते ।

नलचरितस्य नायिका दमयन्तीतु भारतीय साहित्यस्य भारतीय संस्कृतेश्चा-न्यतम नायिकात्वेनाद्रियते, अन्या चैका दमयन्ती प्रम्लोचा पुत्री आसीदितित्यनया निम्नांकितया पंक्तया प्रतीयते—

"The daughter of Pramlocha. See Vishvakarma 2nd Para."
(quoted from —"Puran Encyplopedia" Page-199 Para 2)

पुराणेषु नलचरितस्योल्लेख कीदृशः कुत्र कुत्र च प्राप्यत इति सर्वमस्मिन्न-ध्याय एवाग्रे स्पष्टम् । अत्र नलचरितस्य कथावस्तु विषये पुराणानां चतुरस्त्रां दृष्टिमवगन्तुं पुराणैरेव प्रतिपादितं नलचरित विषयकं स्थलं ज्ञापणीयम् ।

पुराणेषु महाभारतीयस्य नल चरितस्याधारे नल कथा कुत्रचिदपि नोप-निबद्धा । महर्षिः व्यासो नलचरितस्याख्यानं सर्वैः सौन्दर्य वैशिष्ट्यैः सह महा-भारते कृतवानासीत् । अतोऽन्यस्मिन्पुराणे सः नल चरितस्य विस्तरेण चर्चां नाकरोत् । यद्यपि पुराणेषु एकैव कथा अनेकेषु पुराणेषूद्धृता दृश्यते तथापि पिष्ट पेषणं माभूत एतदर्थे सा कथा पुराणान्तरेषु संक्षेपतः कथिता वर्ततेऽथवा कंचि-

---

१. भागवत ५।२०।४१

२. भागवत ६।२।१६-२०

३. भागवत १०।८५।३५,४६,५१

४. वायु पु० अ० ६६, श्लोक २००

त्पक्षविशेष सम्बद्धयितुं सा द्विरावृताऽस्ति । नल चरितस्य यत्कथावस्तु महाभारत उपनिबद्धं वर्तते तस्मिन् लेशतोऽपि परिवर्तनं विना पुराणानि नलचरितमुल्लेखयामासुः उद्वा कथायां ये वर्ण्यपक्षाः दृष्टिगोचराः न प्रभवन्ति तानुद्घाट्य तासु रमणीयता नीताऽस्ति । पुराणे नलचरितस्य पूर्ववर्तिन्यः घटनाः परिवर्तिन्य घटनाः वा विवृताः । यदि तत्सम्बद्धाः घटनाः अन्यत्र पुराणेषु प्राप्यन्ते तर्हि तत्र नाममात्रेणैव दृश्यन्ते । किन्तु पौराणिकैराख्यानैः सह नलकथायाः संयुक्तीकरणेन काव्य सौन्दर्यं द्विगुणिततरं वर्धत एव ।

पुराणेषु नल चरितात्पूर्वं वृतान्तं प्रस्तुवन्त्यः नल कथाः प्राप्यन्ते । भारतीयदर्शनानुसारेण—

**'शुचीनां श्रीमतां गेहे योग भ्रष्टोऽभिजायते ।'**[1]

इत्येतेन राज्ञो नलस्यापि पूर्वजन्मकृतानुष्ठानमनुमीयते, यस्य प्रभावाज्जगति सः निषधेश्वरस्य नलस्य रूपेऽवतीर्णवान् । महाभारते—

**'आसीद्राजा नलो नाम वीरसेनसुतो बली ।'**[2]

इत्यनेनोपाख्यानं प्रारब्धम् । नल चरितं महाभागस्य नलस्य जीवनं तदौदात्यं च प्रभावोत्पादकतया प्रस्तौति किन्तु असाधारणगुणसम्पन्नोऽयं पुरुषः कथमवतीर्ण इति न विवृणोति । नलस्य जन्मान्तरीयं वैशिष्ट्यं द्योतयितुं भिन्ने द्वै कथे पुराणेषूपलभ्येते—

**१. शिव पुराणान्तर्गतं नल चरितम्—**

नलस्य पूर्व जन्मनो वृतान्तं शिव पुराणस्य शतरुद्र संहिता नाम्नि भागे कीर्तितमस्ति । अत्र नलो दमयन्ती च पूर्व जन्मनि भिल्ल भिल्लिन्यावास्ताम् । कथा संक्षेपत एवमस्ति—

'अर्बुदाचल पर्वते दम्पतित्वेन भिल्ल भिल्लिन्यो न्यवसताम् । पत्युर्नामाहुकः पत्न्याश्च नामाहुकी आसीत् । अनयोः युगलं सानन्दं दिनं यापयतिस्म । आहुकी आहुकौ शंकरस्य परमभक्तावास्ताम् । शिवमाराधयन्तौ धर्ममनुतिष्ठन्तौ च वने न्यवसताम् । एकदा प्रातःकाले स्नानध्याननिवृत्तौ भूत्वा परिवार पोषणार्थमाहुकः मृगयार्थं बहिर्गतवान् । शनैः शनैः दिनं व्यतीतम् । तदनन्तर-

---

१. गीता ६।४१

२. म० भा० व० प० अ० ५० श्लोक १

मस्तंगते च सूर्ये एको यतिः आहुकस्य द्वारमुपागतय भिक्षां ययाचे । आहुकस्य धर्मपत्नी आहुकी यतिनो दर्शनं विधाय प्रसन्ना सती तस्मै भिक्षां प्रादात् । तदैव आहुकोऽपि वनात् न्यवर्तत् । सोऽप्यतिथिं सत्कृतवान् ।

अस्तं गच्छति सति भगवति सूर्ये यदा यतिः प्रयातुमुद्यतो जातः तदाऽहुकी अवोचत्, प्रभो ! रात्रौ वन्या हिंसकाः पशवः परिभ्रमन्ति अतो भवतः गमनं न निरापदम् ।

---

## शिवपुराणशतरुद्र संहिता

### प्रस्तावना

नलेन च तथा पूजा कृता वै शंकरस्य च ।
पूर्वजन्मनि-वै-विप्रास्तेन राज्यं सुशोभनम् ।।
प्राप्तं च रक्षितस्तेन यतिर्हरसमीपतः ।
तस्य पुण्य प्रभावेण राज्यं दत्तं हरेण च ।।
इतितस्य वचः श्रुत्वा पुनरूचु ऋषीश्वराः ।
नलेन च कथं पूर्वं पूजितः शंकरो मुदा ।।
पूजितश्च यतिः को वै तत्वं वद सुविस्तरम् ।
अन्यच्चैवार्जुनस्यैव सेवनं शंकरस्य च ।।
ब्रूहि त्वं च विशेषेण व्यासस्यैवोपदेशतः ।
कथं जातं च तस्यैव कथं च पूजितस्तदा ।।

### सूत उवाच

इति तेषां वचः श्रुत्वा सूतो वाक्यमथाददे ।
श्रुणु बिप्रा प्रवक्ष्यामि नलस्यामिततेजसः ।।
अर्बुदाचल संज्ञे तु पर्वते भिल्लवंशजः ।
आहुकश्च तदाभ्याशे वसतिस्म मुनीश्वराः ।।
तत्पत्नी ह्याहुकी नाम्नी चकार शिव पूजनम् ।
निरन्तरं च कोटीशे कृत्वा च जलसेचनम् ।।
यौवनं च तयोः श्रेष्ठं तत्सुखं च निरन्तरम् ।
आनन्देन समायुक्तौ भुंजानौ प्रीतिमानसौ ।।
कस्मिंश्चित्समने स्वाम्याराधनार्थं गतोयदा ।
एतस्मिन्नन्तरे कश्चित् यतिर्जटिल आगतः ।।

संध्यायां दर्शनं कृत्वा शंकरस्य स्थलेच्छया ।
इमां रात्रिं समाक्रम्य प्रातश्चैव यथागतम् ॥
गमिष्यामि च तत्रैव विचार्यैवमुपागतः ।
एकाकिनीं तदा दृष्ट्वा भयत्रस्तविलोचनः ॥
तथापि च पितास्त्वं च ह्युक्तश्च स्थिरतां गतः ।
एतस्मिन्समये सो वै ह्याजगाम गृहाधिपः ॥
पूजनं तस्य कृत्वा च ब्रूहि कार्यं प्रभो इति ।

यतिरुवाच

अद्य स्थलं च मह्यं वै दीयतां प्रातरेव हि ॥
गमिष्ये सर्वथाभिल्ल इत्युक्तेऽन्यदब्रवीत् प्रभो ।
स्वल्पं चैव स्थलं मेऽद्य वर्तते नान्यथाकथम् ।
इत्युक्तश्च तदासौवै गमनाय मतिं दधे ।
तावद् भिल्ल्या वचः प्रोक्तं धर्मश्चैव गमिष्यति ॥
स्वामिनं च तदा ब्रूत युवाभ्यां स्थीयतां गृहे ।
अहं बहिः स्थितिं कुर्यां आयुधानिदधत्यपि ॥
तद्वचश्च श्रुतं तेन स्वामिना च विचारितम् ।
स्त्रियं बहिश्च निष्कास्य कथं स्थेयं मया गृहे ॥
यद्भावि तद्भवेदेव मया स्थेयं बहिः स्वयम् ।
इत्याग्रहं तदा कृत्वा गृहे तौ च सुरक्षितौ ॥

स्वयं चैवायुधान्यत्र धृत्वा तिष्ठत् बने चरः ।
योगीन्द्रोध्यानयोगेन स्थितः कोणान्तरे तदा ॥
सापि निद्रां करोतिस्म स्थितो बहि बनेचरः ।
रात्रौ च पशवस्तं वै पीडयामासुरुद्धताः ॥
तेनैव च यथाशक्ति कृतो यत्नश्च निश्चलः ।
तदनन्तरं च यज्जातं भिल्लो व्याघ्रैश्च भक्षितः ।
प्रातः कालेऽथ योगीन्द्रो दृष्ट्वा भिल्लं च भक्षितम् ।
दुःखं प्राप तदा सा च किमर्थं खिद्यते प्रभो ॥
धन्योऽयं कृत कृत्योऽयं मज्जातं त्वीदृशमिह ।
अहं वै वर्धयिष्यामि स्त्रीणां धर्मः सनातनः ॥

इत्येव च हितं मत्वा तथा कृत्वा स्वयं चितिम् ।
विचार्येत्थं स्वयं चाग्नि प्रविवेश हिताय वै ॥
एतस्मिन्नन्तरे साक्षाच्छिवः प्रादुर-भूत्पुरः ।
धन्ये धन्ये इति साध्वी प्रसन्नोऽस्मि तवानघे ॥

शिव उवाच

एतस्मिन्नवतारे वै सुखं प्राप्तं न किंचन ।
तस्माच्च जन्म यातां हि ह्येक वारं पुनर्नहि ॥
अयं च वै महायोगी हंसरूपो भविष्यति ।
परजन्मनि च युवयोः संयोगं च करिष्यति ॥
भिल्लश्च वीरसेनस्य नैषधे नगरे वरे ।
तत्पुत्रश्च नलोनाम भविष्यति न संशयः ॥
त्वं चैव भीमराज्ञोर्वै वैदर्भे नगरे शुभे ।
दमयन्ती च विख्याता भविष्यसि गुणान्विता ॥
युवां चोभौ मिलित्वा च राज्यभोगं सुविस्तरम् ।
भुक्त्वा मुक्तिश्च योगीन्द्रे दुर्लभा वौ भविष्यति ॥
इत्युक्त्वा च स्वयं शम्भुरचलेशो भवत्तदा ।
यस्मान्नचलितो धर्मादचलेश इति स्मृतः ॥
तदुक्तं च तदाह्यासीतेषां चैव महात्मनाम् ।
इति वंशश्च समाख्यातं श्रूयतां चार्जुनस्य च ॥

भवान् अत्र विश्राम्यतु, संकीर्णे कुटीरे केवलं द्वावेव जनौ निवसितुं शक्नुतः स्म । अतएवातिथिं तत्र निवासयितुं आहुकस्य दोलायमानं मनः समनुभूयाहुकी तं धर्मे द्रढ़यितुं प्रेरयामास । सुशीलायाः पत्न्याः वचनमाकर्ण्य सो भिल्लः सश्रद्धं रात्रिविश्रामायातिथिं कुटीरं नीतवान् । प्रियां भिल्लिनीं यतिनं च कुटीरे विहाय स्वयमायुधहस्तो भूत्वा वहिरुपविष्टः । अहो ! विचित्रा दैव गतिर्भवति, रात्रौ हिंसकाः पशवः तस्यैहिकं जीवनं समापयामासुः ।

प्रातःकाले यदाऽऽहुकी पत्युः आहुकस्य दशां दृष्टवती तदा सकरुणं विललाप, विलपन्तीं तामवलोक्य यतिरपि व्यथितो जातः । खिन्नहृदययतिनमनुभूय सा पतिव्रता तं सान्त्वयामास अवोचच्च मे पतिः धर्ममाचरन् देहं परित्यज्य स्वर्लोकं जगाम । अहमपि चितारोहणद्वारा पतिलोकं प्राप्स्यामि ।

आहुक्याः दिव्यभावमिदमाकर्ण्य यतिरूपः शिवः प्रकटितवान् तथा चाशिषं यच्छन्नवोचत्—अहं युवयोः धर्मनिष्ठया हृष्टोस्मि, अतः वरं ददाति यत्ते पतिः आहुकः भविष्यमाणे जन्मनि राजा नलो भूत्वा विश्वविश्रुतो भविष्यति त्वं च दमयन्ती सती यशस्विनी भविष्यसि अहं च हंसरूपेण युवयोः संयोगं विधास्यामि, भगवतः वरं स्वीकृत्याहुकी अपि पतिमनुसृतवती। कालान्तरे द्वावेव नलदमयन्त्योः रूपेणावतीर्णाविभूताम्।

पूर्वजन्मन इदमौदात्यमेव नलमन्येभ्यो व्यतिरिच्य पुण्यश्लोकत्वे प्रतिष्ठापयति तथा चेहजन्मनि धर्मपथे द्रढयितुं विश्वासमुत्पादयति। सूक्ष्म शरीरे संस्काराणि अनुस्यूतानि सन्त्येवातो नलः तद्भावभावितान्तःकरणेन धर्मे स्थिरनिश्चयो जातः।

गणेशपुराणमुपपुराणेषु परिगण्यते तत्रेयं कथा प्रशस्यते—

"गौड़ देशे पिप्पलादनामकमेकं नगरमासीत्।" तत्रैको धनिकः वैश्यः निवसतिस्म, सः महत्कष्टं सहित्वाऽर्थमुपार्जितवान् किन्तु "कस्यात्यन्तं सुखमुपनतं दुखमेकान्ततोवेति" नियमानुसारेण सः कालान्तरे निर्धनतामुपाजगाम। कणशोऽर्जितसम्पत्तिनाशत्वात् तद्वैश्यः सँसाराद्विरक्तोऽभवत् वनं च गत्वा शान्त्यर्थं प्रयततेस्म। एकदा कश्चिद्यतिः भगवतो गणेशस्याराधनार्थं तं नोदयामास यतः गणेश एव विघ्नमपाकृत्य मांगल्यं वितनोति। यतिनो वचोंऽगीकृत्य वैश्यः भगवन्तं गणपतिमानर्च, तत्तपसो बलादेव वैश्योऽसावपरस्मिंज्जन्मनि नलो बभूव।[1]

गणेश पुराणोपवर्णितेऽस्मिन् कथा प्रसङ्गे भगवतो गणेशस्य व्रतस्य महिमा स्पष्टतयोपवर्णिता। कथावस्तुनो दृष्ट्या शिवपुराणस्य कथा नलचरित्रं प्रचुरतयोद्घाटयति। इमे द्वे कथे महाभारतीये नलचरिते वर्णितं राज्ञो नलस्य गुणशीलसमन्वितं जीवनं प्रभावोत्पादकतया मण्डयन्त्यौ समुपस्थापयतः।

भारतीयमान्यतानुसारेण यदि पवित्रात्मा प्राणी एव पूतात्मनां पुरुषाणां गेहे जन्म गृह्णाति तर्हि तत्प्रकारकं महापुरुषं प्रादुर्भावयितुं स्वयं पित्राऽपि

---

1. *Quoted* from—"Puranic Encyclopeadia," 1975, p. 519, Vattam Mani, and also "Nala Episode in Sanskritic Literature by *Dr.* N. P, Unni, Page 14.

तपस्तप्यते । यथैकत्र कृष्णं जनयितुं दैवकी वसुदेवौ कंसस्य कारागृहे व्यथितावभूताम्, अपरत्र वामनमाविर्भावयितुमदितिः पयोव्रतमनुतिष्ठति[२], एवमेव कालिदासस्य दिलीपः पत्न्या सुदक्षिणया सह गुरोः वशिष्ठस्याश्रमं प्राप्य प्रार्थयति—

> लोकान्तर सुखं पुण्यं तपोदान समुद्भवम् ।
> सन्तति शुद्धवंश्या हि परत्रेह च शर्मणे ।।
> तयाहीनं विधातर्मां कथं पश्यन्न दूयसे ।[३]

अनन्तरं गुरोराज्ञया श्रद्धाविश्वासभाव सहितं गोः सेवनं दिलीपः कृतवान्, तत्पश्चात्—"विद्यामभ्यसनेनैव प्रसादयितुमर्हसि"[४] इति गुरु वाक्य फलश्रुतितया तेजस्विनमथ च यशस्विनं पुत्रं रघुमवाप।

एतावता पुण्यश्लोकस्य नलस्य पित्रा वीरसेनेनापि नूनमेवानुष्ठानादिकं पुण्यकर्म कृतं भविष्यति यस्मान्नलः पुत्ररूपेण तस्य गृहे जन्म जग्राह । महाभारतीयं नल चरितंमत्र मौनम् किन्तूपवृंहणमेवेतिहासपुराणयोः विषय वस्तु । पुराणदृष्ट्या तथ्यमिदमपरिचितमित्यसंभवम् । वाराह पुराण एतद्विषयिणी कथैका दृश्यते—

"प्राचीन काले वीरसेनाख्यः एको महापराक्रमशीलो भाग्यवान् राजाऽऽसीत् । सत्स्वपि व्यतीतेष्वनेकेषु वर्षेषु यदा सन्तानप्राप्तिर्नाऽभवत् तदा खिन्नमनासन् वने गत्वा तपस्तप्तुमारेभे, नेदीयस्येव स्थाने ऋषेः याज्ञवल्क्यस्याश्रम आसीत् । एकदाऽकस्मादेव याज्ञवल्क्यः तत्रोपाजगाम् । तपस्तपन्तं वीरसेनमवलोक्य याज्ञवल्क्यः पप्रच्छ को भवान् ? किमर्थं चात्र दुःसहं तपः तपते । बीरसेनः करौ सम्पुटीकृत्य तं सभाजयामास तथा चावोचत् यदहं पुत्रहीनोऽस्मिः, स्व शरीरं तपसोऽग्नौ शमयितुमिच्छामि । याज्ञवल्क्योऽवोचत्—राजन् अलमति दुःसहेन तपसा । अहं त्वां पुत्रप्राप्त्यर्थं सरलमुपायं निर्दिशामि, राजन् जामदग्न्य द्वादश्याः व्रतानुष्ठानं विधेहि, व्रतमिदं परशुराम द्वादश्यप्यभिधीयते वैशाख मासे शुक्ल पक्षे आगता द्वादशी एव जामदग्न्य द्वादशीति विख्याता । पुत्राभिलाषुको वीर-

---

१. भागवत, १०।२।६६ ।

२. वही, ८।१६ ।

३. रघुवंश, सर्ग १ ।

४. वही,

सेनः सानन्दं विधि पूर्वकं व्रतमिदं समाचरत् । फलतः पुत्रत्वेनायमेव नलः समुपजातः पुण्यश्लोकत्वेनाख्यापितश्च ।

इदं व्रतमनुचरन् पुरुषः सर्वमैहिकंसुखं कल्पमेकं यावत्स्वर्गीय सुखं च प्राप्य पारलौकिकं फलमश्नुते । यदा पुनः स आवर्तते तदा सम्राजः रूपे त्रिंशत् सहस्र परिमितमायुषमुपयुंजति ।[1]

नलस्य कृते पितुः वीरसेनस्य तपोविधिः वाराहपुराणस्यानया वर्णनया प्रतीयते । अनेन प्रकारेण पुराणानि नलचरितस्यानुद्घाटितं पक्षं प्रकाश्य नल चरितं विशदीकुर्वन्ति ।

राज्ञो नलस्य पूर्वजीवनवृत्तान्तानि प्रस्तुतवतां पुराणानां पश्चात् तस्य वर्तमान जीवन प्रसङ्गे स्कन्द पुराणकृतं नलचरित वर्णनं महाभारतीय नल चरितेऽनुपलब्ध कथांशानि समुद्गिरति । स्कन्द महापुराणस्य द्वयोः स्थलयोः नलस्योल्लेखः प्राप्यते ।

एकत्र यदा राजा नलः पुष्करेण पराजितो भूत्वा दमयन्त्या सह वने कतिचित् दिनानि यावत् इतस्ततोऽटन् विन्ध्य पर्वतस्याधित्यकायां स्थितं हाटकेश्वर क्षेत्रमुपगच्छति तत्र व्यथितमना नलः चर्ममुण्डेति नाम्नीं भगवतीं तस्याश्च प्रतिमापार्श्वं भगवन्तं शिवलिंगं च स्थापयामास कालान्तरे नलेश्वर महादेवेति तल्लिंग प्रख्यातमभवत् ।[2]

अपरत्र नल सम्बन्धे केवलं सूचनामात्रमेव प्राप्यते—यथाऽत्र—

**वीरसेन सुतः पूर्वं नलो नाम महीपतिः ।**
**आसीत् सर्व गुणोपेतः सर्वशत्रुक्षयावहः ॥**
**भार्या यस्याभवत् साध्वी प्राणेभ्योऽपि गरीयसी ।**
**दमयन्तीति विख्याता विदर्भाधिपतेः सुता ॥**[3]

स्कन्द पुराणे नलचरितस्यैक पात्रस्य नागराज कर्कोटकस्य विषये किंचिदुदन्तं प्राप्नोति । कर्कोटकेनापि भगवतः शिवस्यैका मूर्तिः स्थापिता या कर्कोट-

---

१. वाराह पुराण, अ० ४४, स्टीम प्रेस संस्करण ।

२. स्कन्द पुराण, नागर खण्ड अ० ५४-५५ ।

३. वही, खण्ड ६, अ० ५४ श्लोक ३-४ (उद्धृत नलचम्पू सम० कैलाशपतित्रिपाठी)

केश्वरेण प्रसिद्धाऽभूत् ।[1]

यद्यपि स्कन्द पुराण वर्णितं नल द्वारा चर्ममुण्डेति देव्याः स्थापनं तस्याश्चाराधन नलं शक्ति पूजकं सिद्धयति । भविष्य पुराणेऽपि एकत्र स्थले नलः शक्ति पूजकत्वेनाख्यापितो दृश्यते—

तस्माज्जातो नलोनाम त्रेतायां शक्ति पूजकः ।[2]

किन्तु तत्र शक्ति पूजकेति विशेषणेन विशिष्टो नलः निषधस्य पुत्रो नलोऽस्ति न तु चरित नायको राजा नलः । अतः स्कन्दपुराणकृतं नलचरितं मूलकथावस्तुनि न किमपि वैविध्यं चमत्कृतिं वोपस्थापयति ।

एवमेव प्रकरण प्राप्तो नल विषयकः समुल्लेखः अन्यत्रापि पुराणेषु यत्र कुत्रचिदुपलभ्यते किन्तु न तत्र कथावस्तुनः विविधाः घटनाः दृश्यन्ते । अयोध्यायाः राजर्तुपर्णः य इक्ष्वाकुवंशोत्पन्न आसीत् स नलस्य मित्रम् । द्यूते पराजितः कलिविमोहितो नलः वन एव त्यक्तपत्नीकः सन् कर्कोटकेन विरूपितो भूत्वाऽयोध्यामुपागम्य ऋतुपर्णस्याऽऽवासे बाहुक इति छद्मनाम्ना निवसति । सः बाहुकवेशिनं नलमश्वशालायां नियोजयति । यथा च महाभारते वर्णितमाप्यते । कालान्तरे यदा दमयन्ती भूयो नल प्राप्त्यर्थमृतुपर्णं स्वयम्वरार्थमामंत्रयति तदा कुण्डिन पुरीं गच्छनृतुपर्णः मार्गे नलायाक्षहृदयविद्यां प्रादात् तथा च नलः ऋतुपर्णायाश्वहृदय विद्यां प्रायच्छत् । इमौ द्वावेव तत्कालेऽनयोर्द्वयोरेव विद्ययोः प्रकाण्ड पण्डितौ समभवतामित्यप्यत्र प्रतीयते । यतो हि पुराणेषु यत्र-यत्र नलर्तुपर्णयोः मैत्री चर्चिता तत्र तत्राक्षाश्वहृदयविद्ययोरपि परस्परमादानं प्रदानं चोपवर्णितम् । अतः तस्मिन् काले घटनेयं भृशमाह्निणतया महत्वापूर्णेति सम्भाव्यते ।

वैवस्वत मनोः समस्तेषु पुत्रवंशेषु इक्ष्वाकोः वंशः समधिकतया विस्तीर्णो जात इति पौराणिक वंशानुचरितेन स्पष्टम् । इक्ष्वाकोः वंशावली प्रायशोऽखिलेषु पुराणेषु परिगणिता । वंशेऽत्र ऋतुपर्णस्य नाम सर्वत्र प्राप्नोति । इक्ष्वाकुवंश वर्णन प्रसंगे श्रीमद्भागवतस्यायं श्लोकः द्रष्टव्यः—

---

१. स्कन्द पुराण, अवन्ति खण्ड अ० १० (स्टीम प्रेस संस्करण) भूमिका, पृष्ठ ४३, पैरा २ ।

२. भविष्य पु०, प्रतिसर्ग पर्व १।६, स्टीम प्रेस संवत् १६६७ ।

ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ।
दत्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥[१]

इत्युद्धरणेऽपि ऋतुपर्णनलयोर्मैत्री तयोश्चाक्षहृदयविद्याऽश्वहृदयविद्ययोः मिथ आदान प्रदानं लिखितं प्राप्यते ।

विष्णु पुराणमपि तथ्यमिदं स्वीकरोति—

तत्पुत्रश्च ऋतुपर्णः योऽसौ नल सहायोऽक्षहृदयज्ञोऽभूत् ।[२]

श्री मद्भागवतस्यान्यस्मिन् स्थले प्रतापशीलानां राज्ञां नामोल्लिखन् शुकदेवः "नैषध" इति नामानं नलं वर्णयति—

"तृणबिन्दुर्ययातिश्चशर्यातिः शंतनुर्गयः ।
भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥[३]

भविष्य पुराणे तु ऋतुपर्णस्य नाम एवास्ति न किमप्यन्यद्वर्णनम् ।

शत हीनं कृतं राज्यं ऋतुपर्णस्तु तत्सुतः ।[४]

एवमेवाग्निपुराणेऽपि नाम संकेत एव मिलति—

श्रुतायो ऋतु पर्णोऽभूतस्य कल्माष पादकः ।[५]

तद्वदेव कूर्म्मपुराणेऽपि—

अयुतायुः सुतस्तस्य ऋतुपर्णो महाबलः ।
ऋतुपर्णस्य पुत्रोऽभूत् सुवासो नाम धार्मिकः ॥[६]

मत्स्यपुराणमपि नाममात्रेणतुष्यति—

तस्यायुतायुः पुत्रोऽभूत् ऋतुपर्णस्तु तत्सुतः ।[७]

---

१ भागवत, ६।६।१७ ।

२. विष्णु पु० चतुर्थांश ११।५, पेज १८३, स्टीम प्रेस संस्करण संवत् १६६७

३. भागवत, १२।३।१० ।

४. भविष्य पुराण, प्रतिसर्ग पर्व अ० १ श्लो० ३८ पृ० २५१, स्टी० प्रे० सं० सम्वत् १६६७ ।

५. अग्नि पुराण अ० २७३, पृ० १८४, स्टीम प्रेस संस्करण संवत् १६७७ ।

६. कू० पु०, अ० २१, पृ० ५६, आर० एस० भट्टाचार्य इन्डोलाजीकल बुक हाऊस १६६७ ।

७. मत्स्य पु०, १२।४६ ।

परन्तु नलविषये सन्देहो माभूदिति हेतुना नलाभिधानेन द्वावेव महापुरुषौ गृहीतौ मत्स्यपुराणे—

**नलौ द्वावेव विख्यातौ वंशे कश्यप सम्भवे ।**
**वीरसेन सुतस्तद्वत् नैषधश्च नराधिपः ॥**[1]

अनेन श्लोकेन स्पष्टतया द्वावेव नलौ भिन्नतया प्रतीयेते, बीरसेनात्मजो नलः निषधात्मजो नलश्च ।

वायु पुराणेऽप्ययं श्लोकः पाठभेदेन सह संदृश्यते । तत्र ऋतुपर्ण नलयोमैत्री विद्ययोरादानप्रदानं नामतो भिन्नयोर्नलयोर्द्वयोभेद प्रतीतिश्चैकत्र वर्णिताऽस्ति—

**अयुतायोस्तु दायावः ऋतुपर्णो महायशाः ।**
**दिव्याक्षहृदयज्ञोऽसौ राजा नल सखो बली ॥**
**नलौ द्वाविति विख्यातौ पुराणेषु बृढ़व्रतौ ।**
**वीरसेनात्मजश्चैव यश्चैक्ष्वाकु कुलोद्वहः ॥**[2]

वायु पुराण उल्लिखितौ श्लोकाविमौ ब्रह्माण्ड पुराणे सम्यक्मिलतः—

**अयुतायोस्तु बायावः ऋतुपर्णो महायशाः ।**
**दिव्याक्षहृदयज्ञोऽसो राजा नलसखो बली ॥**
**नलौ द्वाविति विख्यातौ पुराणेषु बृढ़व्रतौ ।**
**वीरसेनात्मजश्चैव यश्चेक्ष्वाकु कुलोद्भवः ॥**[3]

अत्र केवलं "कुलोद्वह" इत्यस्य स्थाने "कुलोद्भव" इति पाठान्तरम् ।

एतदतिरिक्तं लिंग पुराणेऽपि[4] ऋतुपर्णस्य नलस्य च नाम विहितम् । पद्मपुराणे[5] हरिवंशपुराणे[6] चानयोर्द्वयोर्नामोल्लेखनं दृश्यते ।

---

१. मत्स्य, १५।५६ ।

२. वायु० पु०, उत्तरार्द्ध अ० २६, श्लोक, १७२, १७३, १७४, पृष्ठ १४६, स्टीम प्रेस संस्करण संवत् १९९० ।

३. ब्रह्माण्ड पुराण, खण्ड ३, श्लो० १७३-१७४, अ० ६३, मोतीलाल बनारसीदास सन् १९६३ ।

४. लिंग पुराण, ६६।२४ ।

५. पद्म पुराण, सृष्टि खण्ड अध्याय ८ ।

६. हरिवंश पुराण, १।१५ ।

एभिरुक्तैः प्रमाणैः स्फुटं प्रमीयते यन्नलचरितस्य कथायां किमपि परिवर्तनं पुराणेषु न परिलक्षितं विद्यते । नलस्य पूर्वजन्मनः कथां प्रस्तुवद्भिः पुराणैः नलोपाख्यानस्यायामो विस्तारितः कृतः । वेदेषु बीजरूपेण विद्यमानं "नडो-नैषध"[1] इति पदं यदासीत् तन्महाभारते स्फुटं पुराणेषु च समेधितं दृश्यते । यथा परवर्तिनः कवयो नाट्यशिल्पिनश्चम्पूप्रणेतारश्च कथानकं यदृक्षया परि-वर्त्य प्रणीतवन्तस्तथा न पुराणकारोऽकरोत् । पुराणकारस्तु यथावत्कथानकं निबध्नाति । नलचरितेन सह संघटितैः सम्बद्धकथाप्रसंगैः नलस्य चरित्रसौन्दर्यं संवर्धते । पात्राणां मूलकथानकात्मके चरित्रचित्रणे काचिन्न्यूनता समवलोक्यते चेर्तह् पौराणिकं साक्ष्यं तां संपूरयति । सहृदयस्य सामाजिकस्य हृदये कौतूहलं पुण्यश्लोकं नलं प्रति श्रद्धा भावं च पूरयितुं पौराणिकं नलचरितं पर्याप्तं साहाय्यं प्रददाति । पुराणेषु नलचरितं प्रधानत्वं न प्राप्नोति यतो हि महर्षिणा व्यासेन स्वयमेव महाभारते सविस्तरं सुन्दरतमं नलोपाख्यानं संसृष्टं चेर्तह् भृशतयाऽन्येषु पुराणेषु तद्वदेव कथायाः पुनर्विधानीकरणमनवीकृतत्वमावहतीति-धिया तेन गौणत्वेनैव नलचरितं व्यधायि ।

१. शतपथ ब्राह्मण, ii।२।४।१।२।

## तृतीयोऽध्यायः

# महाभारतीयं नलचरितं तस्य वैशिष्ट्यं च

**चत्वार एकतो वेदा भारतं चैकमेकतः ।**
**समागतैः सुरर्षिभिस्तुलामारोपितं मुदा ॥**
**महत्त्वे च गुरुत्वे च ध्रियमाणं ततोऽधिकम् ॥**
**महत्वात् भारवत्वाच्च महाभारतमुच्यते ।**
**निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥[1]**

महाभारतं हि भारतीयैतिहासिकत्वेन काव्यमयत्वेन च सर्वानतिशेते। अखिले विश्वसाहित्ये प्रौढो विशालतमोऽयं ग्रन्थः स्फीततया प्रशस्यते । आंग्ल साहित्यस्य प्रसिद्धयोः विशालसम्भारयुक्तयों महाकाव्ययो "इलियड, ओडसीति" नामकयोस्तुलनायां विपुलपरिमाणशीलमिदं ग्रन्थरत्नमष्ट गुणाधिकं परिलक्ष्यते। अतएव महाभारतत्वेनास्य प्रसिद्धिः । ज्ञानविज्ञानस्यायं कोशः । समये समये परिवर्तितं परिवर्धितं च सदिदं कालान्तरे सुविस्तृतीभूय "शतसाहस्री" संहितायाः रूपेण प्रख्यातम् । महाभारतस्य मंगलाचरणे—

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततोजयमुदीरयेत् ॥[2]**

अनेन महाभारतं "जय" इति नाम्ना सम्बुद्धं प्रतीयते ग्रन्थे अन्यत्रापि जयेत्यभिधानेन तत्प्रकीर्तितम्—

**जय नामेदिहासोऽयं श्रोतव्यो विजिगीषुणा ।"[3]**

परमतः ग्रन्थस्यास्यापरं स्वरूपपरिवर्तनं परिवर्धनं च जातं येनास्य नाम भारतमिति समाम्नातम् । अस्मिन्नवे संस्करणे चतुर्विंशति सहस्र संख्याकाः श्लोकाः सूपनिबद्धाः आसन्निति ग्रन्थेनेव स्पष्टम्—

**चतुर्विंशति साहस्रीं चक्रे भारतसंहिताम् ।**
**उपाख्यानैर्विना यावत् भारतं प्रोच्यते बुधैः ॥[4]**

---

१. म० भा०, आदि पर्व १।२०८-२०९ ।

२. वही, मंगलाचरण ।

३. वही, १३६।१८ ।

४. वही, १।६१ ।

राज्ञः परीक्षितो मृत्योरनन्तरं—नागयज्ञं समारब्धवन्तं परीक्षिदात्मजं जनमेजयं इमामेव चतुर्विंशति साहस्री संहितां वैशम्पायनः श्रावयामास तृतीये च परिवर्धिते संस्करणे भारतमिद महाभारतमित्यनेनाख्यातम्। अत्र महाभारते लक्षैक परिमिताः श्लोकाः सन्तीत्यस्माद्धेतोः शत साहस्री संहितेति विश्रुतमिदम्। भारतस्येदं स्वरूप निर्माणं सुदूर पूर्वकाल एव कृतमिति साक्ष्यैः प्रमाणितं भवति। कलिकालस्य समारम्भः ईशवीयतः एकोत्तरशताधिकत्रिसहस्र वर्ष पूर्वमनुमीयते, कौरव पाण्डवानां सुप्रसिद्धः संग्रामोऽपि कालेऽस्मिन्नेवाभूत् अतः 'जय' नाम काव्यं ईश्वीयतः शतोत्तर त्रिसहस्र सम्वत्सर पूर्वं प्रचलितमिति सम्भाव्यते। द्वितीय संस्करणवतः भारतस्य समयं जनमेजयस्य नगयज्ञे पठितत्वादीशवीयतः सहस्रत्रयवर्षपूर्वं स्वीकर्तुं शक्यते। अथ शौनकः कतिपय वर्षानन्तर मेव नैमिषे निमिषक्षेत्रेऽध्वरं प्रारेभे यत्रसौतिः अष्टाशीति सहस्राणामृषीणां समक्षे 'महाभारतमिति' तृतीयं संस्करणमश्रावयत्। अनेन महाभारतं भारतं चेति द्वे समकालिके प्रतीयेते। कौरव पाण्डवानां यदा महायुद्धोऽभूत्तदा सर्वे ग्रहाः अश्विनीनक्षत्रपार्श्ववर्तिन आसन्। ज्योतिर्विदां गणनयाऽयं कालः ईशवीयतः एकाधिक शतोत्तर त्रिसहह्रवर्षपूर्वमापतति। इतिहासवेत्ता 'मेगस्थनीजः' भगवन्तं कृष्णं चन्द्रगुप्त मौर्यात् (ई० पूभ ३२०) अष्टत्रिदुतरशत पूर्वं पुरुष रूपे सम्भावयति। एकस्य पुरुषस्य कालं विंशतिवर्षपरिमितमिति निश्चिते कृते समयोऽयमनुमानत ईशवीयत अशीत्युत्तर त्रिसहस्र वर्ष पूर्वं निश्चीयते। भारतीय परम्परानुसारेण महाभारतमस्यैव कालस्य रचनाऽस्ति।

विभिन्नानां महाकाव्यानां यावन्ति कथावस्तूनि दरीदृश्यन्ते तानि सर्वाणि येन केन प्रकारेण आकरग्रन्थस्य महाभारतस्य सुविस्तीर्णात्काव्यीयकुक्षितो गृहीतानि सन्ति। महाकाव्यत्वं विधातुं यद्यप्यत्रानेकानि कथानकानि वर्तन्ते किन्त्वत्र नलोपाख्यानस्य सार एव संक्षेपेण प्रस्तूयते येन नलचरितस्य कथावस्तुनः समीक्षात्मक दृष्ट्याऽध्ययनं तस्योपाख्यानस्य विश्लेषणात्मकं पर्यालोचनं भवेदिति। यतः समीक्षात्मकं विश्लेषणात्मकं चाध्ययनं विना प्रस्तुतस्य नलचरितस्य याथातथ्येन मूल्यांकनं भवितुं नार्हति। नलचरितस्य काव्यशास्त्रीय दृष्ट्या विवेचनमस्मिन्नेवाध्यायेऽग्रे प्रस्तुतमतः पूर्वं संक्षिप्ततया कथावस्तु प्रस्तूयते—

महाभारतीयान्येषु समस्तेषु—राम-मत्स्य-उर्वशी-शिव-शकुन्तलाद्युपाख्यानेषु नलचरितस्योपाख्यानं सुश्लिष्टतायाः दृष्टिकोणेन सर्वोत्तमत्वं भजते। नल-

चरितस्य कथावस्तुनः विन्यास कौशलं तदैव द्रष्टुं वर्णयितुं च शक्यते यदैकत्र कथायाः सूत्ररूपेणोल्लेखनं परीक्षणं च क्रियते । नलचरितं प्रपठ्य सामाजिकः एकत औदात्यस्याभ्रंकषं शिखरं समुपेत्य स्वीयान्तः करणे कर्तव्य परायतां तत्प्रति सर्वस्वं विहाय प्राणोत्सर्गार्थमप्युत्सहते अन्यतः करालस्य कालस्य क्रूरं विडम्बन मवलोक्य जीवनस्य निःसारतामपरिमितावसादं चानुभूय चेखिद्यते । एवं विविधानामारोहावरोहानामनुभवं प्राप्यान्ते नलस्य पुनः अभ्युदय वृतान्तपरिज्ञानेनोच्छलितायाः ज्ञानविवेकमन्दाकिन्यास्तटं प्राप्य कृतामृताचमनः सन् समुल्लसतेऽभूतपूर्व शान्तिसीमानं च स्पृशति ।

द्यूते सर्वं पित्र्यं वित्तं नाशयित्वाकुलो ज्येष्ठपाण्डवः विप्रवास दुःखमनुभवन् भीमादिभिर्भ्रातृभिः सह न्यवसत्तत्रैकदा यदृक्षया समागतं महर्षिवृहदश्वं समवलोक्य कृतांजलिः सन् स्वागत् प्रश्नानन्तरमब्रवीत्—प्रभो ; साम्प्रतमहमतीवकष्टमनुभवामि । मन्ये यन्मत्तो दुःखिततरो न कश्चिदप्यस्त्यासीद्वा राजा, यः द्यूते सर्वं स्वकीयं वैभवं परित्यज्यैतादृशीं कष्टबहुलां संकटग्रहग्रहिलांदशां प्राप्तवान् । अहमेवैकाकी हतभाग्यपुरुषोऽस्मि । परमधार्मिकस्य युधिष्ठिरस्य करूण विलापनं श्रुत्वा वृहदश्वः तं सान्त्वयामास । धर्ममार्गे तं द्रढ़यितुं नलचरितं च श्रावयामासवृहदश्व उवाच—

आसीत्पुरानिषधदेशे वीरसेनेति नामकस्य कस्यचित् राज्ञः पुत्रः नलो नाम । गुणेष्वप्रतिमः कामदेव इव सौन्दर्यसम्पन्नः स नलः प्राप्त यौवनः सन् समागतैरागन्तुकपुरुषैः विदर्भराज्ञः दुहितरं दमयन्तीमश्रौषीत् । तस्याः रूप गुण शीलादिकं आकर्ण्यापहृतमानसोऽभवत् । उत्कण्ठितं स्वीयं चित्तं विनोदयन् सोऽन्तः पुरवर्तिन्येकस्मिन्नुद्याने समगच्छत् । अकस्मादेव स तत्र धृतसुवर्णच्छदान् हंसानवलोकयामास । अपूर्वदर्शनादुत्कण्ठितः नलः आश्चर्यायितो भूत्वा स्वीयोत्तरीयेण तेष्वेकंजग्राह । परिग्रहीतः स हंसोऽब्रवीत्—महाराज् ! मुंचतु मां नहन्तव्योऽस्मि अहं भवतामभीष्टं साधयिष्ये । दमयन्त्याः सकाशे गत्वा त्वां तत्र तथा वर्णयिष्यामि यथा न सान्यं कंचिदपि पुरुषं वरयिष्यति । नलस्तममुंचत् ।

मुक्तः सन् हंसोऽपि दमयन्त्याः केलिवने समुपागतवान् । स्वसखीगणैः सह क्रीडन्ती सा हंसान् दृष्टवती । तदा हंसः तस्याः समक्षं नलस्याप्रतिमरूपसौन्दर्याणां प्रशंसनं व्यदधत । दमयन्ती तु तत्सर्वं श्रुत्वा नलस्याकर्षणे बद्धा सती दिना-

नुदिनं वर्द्धमाणस्नेहाधिक्येन मन्मथज्वरेण च कृशतामनुभवन्ती प्रतिज्ञातवती यदहं कथमपि नलादन्यं न वरयिष्यामि। राजकुमार्याः तदवस्थां विलोक्य तस्याः सखीगणाः पितरं भीमं तत्सर्वं वृतान्तजातं न्यवेदयन्। स्वपुत्र्याः वृतान्तमाकर्ण्य महाराजो भीमः तस्याः परिणयार्थे स्वयंवरावाहनस्य व्यवस्थां सम्पादितवान्। दमयन्त्याः सौन्दर्यं लोकेऽप्रतिममासीदेव, स्वयंवरस्य वार्तां श्रुत्वा नैके भूपालाः राजकुमाराश्च तस्याः प्राप्त्यर्थं स्वयंवरे समागतवन्तः।

तस्मिन्नेवकाले पर्वतनारदौ इन्द्र लोकं गतौ। देवसभायां देवर्षिणा नारदेन दमयन्त्याः सौन्दर्यवाता स्वर्गलोके प्रापिता। नारद मुखात्तस्याः रूपलावण्यं समाकर्ण्य इन्द्रादयो लोकपालाः कामातुराः सन्तः परिणयार्थं तस्मादुच्चलिताः। इन्द्राग्निवरुणयमप्रभृतयो चत्वारो देवाः नाकलोकं विहाय विदर्भराजधान्यां कुण्डिनपुर्यां समाव्रजन। इतः स्वप्रियायाः दमयन्त्याः परिणयोत्सव कौतुकं श्रुत्वा स्मरपीडितो नलोऽपि स्वपरिकरेण सह विदर्भान् गन्तुमियेष। निषधान्निर्गत्य नलः विदर्भ देशं प्रत्यगच्छत्।

मार्गे एव विहायसाध्वनेनागच्छतः चतुरो देवान् समवलोक्य नलः तेभ्य प्रणाम निवेदनं कृतवान्। नलस्याप्रतिमं सौन्दर्यं दृष्ट्वा ते लोकपालाः स्व संकल्पसिद्धौ बाधकं तममन्यन्त। अतः तस्य परिवंचनार्थे ते सर्व एव नलं प्रार्थयामास यत्वमस्माकं कार्ये सहायको भव। देवाज्ञापलनं मनुजानां कर्तव्यमिति घिया सरलो नलः तेभ्यः वचनं प्रादात्। ततस्ते देवाऽब्रुवन् यद्भवान् दमयन्त्याः सकाशं गत्वा अस्माकं प्रणय याचनां करोतु। येन सा अस्मास्वेकं कंचिद् वृणुयात्। अस्मिन् दौत्यकर्मणि भवानेव क्षमते। सममनोरथं परिज्ञाय ससम्भ्रतया नलः तान् प्रतिषिद्धवान् यस्या प्राप्त्यर्थं सः स्वयमेव व्रजतिस्म तस्याः एव विषये पुरुषान्तराणामभिलाषं पूरयितुं कथं समर्थो भवेत। नलस्य प्रत्याख्यानं श्रुत्वा लोकपालाः धर्मस्य व्यवस्थां प्रतिपादयन्तः सत्य पालनार्थं, प्रदत्तवचनपरिपालनार्थं च तं विवशमकुर्वन्।

अतः परं कथमपि तेषां वचनं स्वीकृत्य देवेभ्यः तिरस्करिणीं विद्या प्राप्य तया च विद्यया स्वशरीरं लोकानांदृष्टयाऽऽच्छन्नं कृत्वा दमयन्त्याः हर्म्ये समगच्छत्। भट गुप्ते स्वान्तः पुरे समागतं नलमवलोक्य सम्भ्रान्ता दमयन्ती आश्चर्यायिता संजाता। परस्परं तयोर्दर्शनानन्तरं सा कथमपि नलस्य परिचयमपृच्छत्। नलस्य परिचयं ज्ञात्वा सा तस्यागमनस्य प्रयोजनं पृष्टवती। नलोऽव-

दत् यदहमधुना लोकपालानां चतुर्णामिन्द्राग्नियमवरुणानां दूतत्वेनेहायातोऽस्मि ते सर्वे एव त्वामभिलषन्ति। तेषां प्रणययाचनां नीत्वा तव सकाशे समुपागतोऽहम् भवती तेष्वैकं लोकपालं वृणोतु। नलस्य वचनं श्रुत्वा दमयन्ती तमवादीत् यदहं न भवतां प्रस्तावं अवदधे। असमर्थाऽहम्। मया तु भवानेव एव पतिरूपे प्रार्थितः संकल्पतयावृतश्चातः परं कंचिदप्यन्यमहं न वरयिष्यामि इत्येव मे दृढ़ निश्चयः। भवतां कृते दौत्येकर्मणि सत्यतापरित्यागस्य दोषो माभूदिति दृष्ट्याऽहं स्वयंवरे समेषां समक्षे भवन्तं वरयिष्यामि। नो चेत् विषं पीत्वा, रज्जुमास्थाय, जले निमज्य वा स्व प्राणानुत्सृक्ष्यामि परं न कस्याप्यन्यस्य वरणं सम्भवति। नलः तस्याः दाढ्र्यं समनुभूय हृष्टमनाऽपि पुनः कर्तव्य गौरवात् देवानां कृते याचनामकार्षीदवोचच्च—सर्वसमर्थेषु देवेषु भवती नपरिमितं सुखमवाप्स्यति। अथच देवान् प्रत्याख्याय न कमपि पदार्थं मनुजः लब्धुं शक्नोति अतः तेषां वांछानिराकरणं न निरापदम्। यदि ते हतसंकल्पाः सन् विघ्नौघान् प्रेषयिष्यन्ति तदा ते दुरापोनल'। इत्युक्त्वा स प्रतिनिवृत्य देवान् सर्वं वृत्तान्तमश्रावयत्। नलस्य सत्य प्रतिज्ञतां दृष्ट्वा हृष्टमानसाः सर्वे लोकपालाः तस्मै आशिषं प्रयुंजानः तस्मात्स्थानादगच्छन्।

अपरेद्युः प्रकल्पिते स्वयंवर मण्डपे देशदेशान्तरादागताः राजानः, कुमाराः, वीराः अन्ये च सुपुरुषाः तत्रोपस्थिताः अभूवन्। नलोऽपि स्वरूपचाकचिक्येन मुष्णीकृतसम्यचक्षुष्कः तत्रोपविष्टोऽभूत्। एतस्मिन्नन्तर एव त एव चत्वारो लोकपालाः तत्रागत्य नलस्य पार्श्वे नलस्यैव रूपे स्वाकृतिं परिवर्त्य समुपाविशन्। हस्ते वरमालिकां धृत्वा समागता दमयन्ती यदा तत्र समानुरूपान् तुल्याकृतीन् पंचनलान् दृष्टवती तदा व्याकुला सती भृशं पर्यतप्यत्। अन्ते सा स्वपातिव्रत्यस्य शपथ प्रदान पुरःस्सरं देवान् प्रार्थितवती। तस्याः अनन्यं प्रेम परिलक्ष्य प्रहर्षिता देवाः नैजं रूपं धृतवन्तः। देवाभिज्ञानं प्राप्य सा पूर्वसंकलिपतां वर मालिकां नलस्य कण्ठदेशेऽपातयत्। नलदमयन्त्योर्विवाहः सम्पन्नो-जातः। लोकपालाः ताभ्यां दम्पतीभ्यां वरान् प्रदाय स्वर्गं प्रत्यगच्छन्। नलोऽपि विवाहानन्तरं कानिचित् दिनानियावत् स्वश्वसुरगेहे उषित्वा प्राणवल्लभां दमयन्तीं स्वदेशमनैषीत्।

देवानां वरप्रदानप्रसंगे इन्द्रः आत्मपदप्राप्ति उत्तमगतिं, अग्निः स्वेच्छयाग्निप्रकटनमग्निलोकवासं, यमः नलसिद्धभोज्यैऽद्भुतस्वादवत्वं धर्मभीरुतां, वरुणश्च स्वेच्छया जलाविष्करणं दिव्य गन्धसंयुतमेकं स्रजं च प्रादात्। दमयन्त्याः

स्वयंवरात् प्रतिनिवृत्ताः देवाः मार्गे त्वरया गच्छन्तौ कलिद्वापरौ दृष्टवन्तः। पृष्टौ सन्तौ तौ दमयन्ती स्वयंवरे आवां गच्छावः इत्युत्तरं प्रायच्छताम्। देवाः निवृत्तो दमयन्ती स्वयंवरः, समेषां समक्ष एव तया नलोवृतः' इति प्रत्युत्तरं विनिवेद्य प्रस्थिताः। वार्तामिमामाकर्ण्य क्रोधाविष्टः कलिः तानवोचत— यद्देवान विहाय यदा सां मर्त्यं मानुषं नलं वृतवती अतः न सा सुखेन वत्स्यति। दण्ड्या सा। दमयन्तीनलौ न कथमपि सुखेन निवसितुमर्हतः। अहं तौ दण्डयिष्यामि। दैवास्तं सान्त्वनार्थं किंचिदूचुः किन्तुः स तेषां बचः न श्रुत्वा तस्मात्स्थानात् स्वमित्रेण द्वापरेत साकं निषधं प्रति समगच्छति।

निषघायां स्वपत्न्याः दमयन्त्याः सार्द्धं सुखेन निवसतिस्म नलः। द्वादश वर्ष परिमितं कालं क्षणमात्रमिव व्यपगतम्। अस्मिन्नेव काल मध्ये इन्द्रसेननामकं सुतं इन्द्रसेना नामिकांसुतांचापि स प्राप्तवान्। एकदा सायंकाले लघुशंकानन्तरं पादयोः शौचमविधायैव संध्यामुपासति सति नले छिद्रान्वेषी कलिः तस्य देहे संक्रमितो जातः। अपरत्र तस्य मित्रं द्वांपरः नलस्य भ्रातुः पुष्करस्य समीपे गत्वा तं नलेन सह द्यूतक्रीड़ां प्रति प्रैरयत्। कलिविमोहितो नलः पुष्करस्यामंत्रणं द्यूतार्थे श्रुत्वाऽनर्थकारिणि द्यूते मग्नो जातः। शनैः शनैः व्यपगतं धनं, हारितं, वाहनादिकं, रिक्तं कोशजातं, अपहृतं सर्वस्वं तस्य पुण्यश्लोकस्य। क्रीडामध्ये दमयन्त्या प्रतिबोधितोऽपि, प्रजाजनैः प्रार्थितोऽपि, अमात्यैः निवेदितोऽपि स न विवराम द्यूतात्। अन्ते शरीरमात्रावशिष्टो नलः अद्योमुखः सन् किंकर्तव्यविमूढ़ो जातः। दमयन्ती तस्य द्यूते एतादृशीममिरुचिं ज्ञात्वा स्वसन्ततिद्वयं राजकीयसारथिना वार्ष्णेयेन सह पितृगेहे कुण्डिनपुर्यां प्रैषयत्। सर्वं नलस्य हृतं राज्यादिकं समधिगम्य पुष्करः दमयन्तीं पणे नियोजयितुं नल न्यवेदयत्। तस्य कदर्यस्य कुत्सितमभिप्रायं प्रकल्प्य क्षुभितो नलः क्रोधाक्रान्तोऽपि सन् द्यूतधर्मंविवशतया नकिंचिद् वक्तुमशक्नोत्। दीर्घमुष्णं च निःश्वस्य मौनमाकलय्य दमयन्त्याः सार्द्धं स वने समाजगाम। पुष्करोऽघोषयत्—यन्न केनापि नलदमयन्त्योः कृते निवासो देयोऽन्यथा स दण्डभाक् भविष्यति। स्वीयादेव देशान्निष्कासितो नलः क्षुधया परिक्रान्तः नष्ट इव, मुष्ट इव, दिग्भ्रान्त इव वन इतस्ततः पर्यटन् सायंकाले एकस्मिन् स्थले शकुन कुलं वीक्ष्य भोजनार्थं तत्-गृहीतुं स स्वप्रावारकमुत्तरीयकं निचिक्षेप। परं हाहन्त। दैवे विपरीते सति— 'प्रायोगच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः इतिन्यायेन तच्छकुन कुलं नलस्यैवमेव तद्वस्त्रमादायान्तरिक्षे उदपतत। आकाशमुपेत्य चावोचत्यद्वयं तव

अक्षा एव स्म । तवशरीरे परिधापनीयं वस्त्रमिदं नास्मभ्यं रोचते । अतीव दुःखितो नलस्ततः बारं बारं दमयन्तीं प्रत्यबोधयत् यदयं पन्था दक्षिणापथं प्रतिगच्छति मयासह किमर्थं भवत्या परितप्यते कंटकाकीर्णे विपत्तिवहुले भयपरिवृतेऽस्मिन् वनप्रान्ते भवत्याः वासः कथमपि नोचितः । पितृगृहं गम्यताम् । तदवस्थां गतं तमवलोक्य करुणार्द्रा सती दमयन्ती न केनापि प्रकारेण नलमत्यजत् । विपन्नं त्वामत्र संत्यज्य कथमहमेकाकिनी स्वगृहं गमिष्यामि, त्वयासहैव अहं तु वत्स्यामि दृढ़तया सा इत्थं प्रत्यपादयत् । नलोऽपि तस्याः वचनं शुश्रावाथ च तया सह वनं पर्यतप्यत् । दमयन्त्या अयमपि प्रस्तावः कृतो यदा वां सहैव पितृगृहं प्रस्थास्यावः परन्तु नलस्तत्प्रस्तावं नाभिनन्दत् ।

एकस्यां रात्रौ दिनं यावत् इतस्ततः परिश्रान्तौ तौ द्वावपि शून्यालये एकस्मिन् स्वपतः स्म । अकस्मादेवोत्थितः नलः स्वबाहुपरिलम्भितां प्रियां तां पौनः पुन्येनावलोक्य कलिमोहितमनस्कः चिन्ताकुलसंकुलान्तरतया दमयन्ती परित्यागार्थं मनो दधे । दुर्विपाकतया तत्रैव परिभ्रष्टं पुरातनमेकं खड्गं । समवलोक्य तेनैव दमयन्त्याः वस्त्रार्द्धं कर्तयित्वा आत्मानमाच्छाद्यतस्मात्स्थानान्निर्गतः ।

सुप्तोत्थिता दमयन्ती यदा नलं नापश्यत्तदा विह्वला सती भृशं विललाप । हा नाथ क्वासि, वने मां त्यक्त्वा कथं गतोऽसि, कथं मया विना त्वं वत्स्यसि । नाहं स्वार्थं चिन्तयामि परं त्वदर्थमेव मे विलपितम् । हिंस्त्रैः कृव्यभुग्भिः परिसंकुले भयानक वने भ्रमन्ती सा न कुत्रापि शर्म लेभे । उन्मत्तेव गच्छन्तीं तां वृक्षात्पतित एकोऽजगरः जग्राह । काकोदरेण तेन ग्रस्यमाणा सा परित्राणार्थं बारं बारं नलमुच्चैराकारयत् । भाग्यतः तत्रैको व्याधः समायातः । आक्रोशन्तीं तां श्रुत्वाऽऽगत्य च तमजगरं जघान तस्याः प्राणरक्षणं चाऽकरोत् । किन्तु सा वराकी आकाशात विष वृक्षोपरि पतिता जाता । तस्याः सौन्दर्यातिशयेनाकृष्टः स व्याधः कामार्दितः सन् तां घर्षयितु कामोऽभूत् । साध्व्याः प्रतिव्रतायाः सीमानमुल्लंघयितुं कः समर्थ इति तु अस्त्येवातः स्वपातिव्रत्यप्रभावात् सा शापप्रदानपुरस्सरं कामुकं तं भस्मसात्कृतवती । अनन्तरं पुनः नितरां खिन्ना सती सा इतस्ततः पर्यटन्ती नलस्यान्वेषणे प्रवृत्ताऽभूत् । तदैव वानप्रस्थिनां मुनीनां एकः आश्रमो मार्गे आपतितः तं दृष्टवा व्यथिता सा आश्रमे प्रवेशं

कृत्वा ऋषिभ्यः प्रणामनिवेदनं चकार । सुन्दर्यास्तस्या अपरिमितं क्लेशमनुभूय सहृदयास्ते ऋषीश्वरास्तां सान्त्वयामासुः । दमयन्ती स्वपरिचयं स्ववृत्तान्तं च न्यवेदयत् । मुनयस्ते तामाशीर्वचोभिरभिन्द्य 'पुनस्ते पति प्राप्तिर्भवेत्' इत्थं वरं प्रदायान्तर्हिताः अभूवन् । आश्रमान्निर्गत्य दमयन्ती पुनः वने पर्यटत् । नलान्वेषणे कृतप्रयत्ना सा वन एवैकदा गच्छन्तं सार्थ समूहं निरीक्ष्य तेन सार्द्धं चेदिदेशं प्रति गन्तुमियेष । सार्थवाहास्तस्याः स्वागतं चक्रुः । तस्याः परिचयं ज्ञात्वा ससम्मानपूर्वकं तां स्व समूहेन सह गन्तुं प्रार्थयन् । परं काकथा रात्रावकस्मादेव वनकरिणः मानुषं गन्धविशेषमाघ्राय तत्रागत्य समस्तमेव सार्थसमूहमकालकाल-कवलितं कर्तुमुद्यताः । त्राहि त्राहि पाहि पाहि इत्यार्तनादं विमुंचन्तः ते सार्थ वाहाः कथमपि स्वप्राणरक्षां कृतवन्तः । बहवो भग्नांगकाः जाता अपरे मृताः न्यूनाधिकाः येऽवशिष्टास्तेसर्वे विपत्तिजालं तदवलोक्यैतत्सर्वमवश्यमेव तस्या एव पापराक्षसिन्याः कार्यजात मिति चिन्तयन्तः दमयन्तीमेव तत्कारणंमन्यमानाः तां घातयितुं सर्वतोऽन्वेषयन् । येन-केन-प्रकारेणं लतागुल्मैः स्वशरीरमाच्छाद्य कम्पमानगात्रा सा दमयन्ती क्रुद्धेभ्यो दुर्ललितसार्थवाहेभ्योऽवशिष्टपुण्यतया आत्मानं जुगोप ।

ततः कतिचिद्दिवसानन्तरं केनचित् ब्राह्मण समूहेन सार्द्धं सा चेदिराजस्य सुबाहोः देशे प्रापिता । यदा ते ब्राह्मणाः दमयन्त्या सार्द्धं चेदिराजधान्यां प्राप्ता-स्तदा तस्याः सौन्दर्यमवलोक्य नागरास्तामन्वगच्छन् । तत्रैव प्रासादे राजमाता मार्गे गच्छन्तीं तां वातायनेन तामाकारयत् । राजमातुः परिचारिका यदा दम-यन्तीं नीत्वा राजहर्म्ये प्रावेशयत् तदा तां दृष्ट्वा राजमाता तस्याः परिचयम-पृच्छत् । दमयन्ती स्वपरिचयं छद्मतया प्रस्तुतवती यदहं सैरन्ध्री वर्ते मम भर्ता द्यूते सर्वस्वं परित्यज्य विपन्नो भूत्वा कुत्रापि गतः । अतोऽधुना प्रोषित पतिकाऽहं तमन्वेषयामि । राजमाता तां सान्त्वयामास । तस्याः पत्युरन्वेषण-स्यापि वचनं तया दत्तम् । राजमाता तां स्वगेह एव स्वपुत्र्याः सुनन्दायाः सखीरूपेण निवासयितुमैच्छत् । दमयन्ती तदाऽवोचत् यदि भवती मामत्र निवासयितुमिच्छति तदाहमपि किंचिद् इच्छामि । नाहमुच्छिष्टमन्नं भोक्ष्ये, नकस्याप्यन्यस्य पाद प्रक्षालनं करिष्ये, पर पुरुषैः सह वार्तालापमपि न विधास्यामि । ऋते ब्राह्मणेभ्यः यैरहं स्वपत्युरन्वेषणविषये वार्तां विधास्यामि । यदि कश्चिदपि पुरुषापसदः मां प्रति दुर्भावं संविधास्यति तदा स त्वया दण्ड-

नीयो भविष्यति । पुनरपि सः तथा करोति चेत्तर्हि स वध्यो भविष्यति । दमयन्त्याः सर्वानपि भावान् राजमाता यथावज्जग्राह । ततः सा सुनंदायाः सखी भावं भजमाना तत्रैव न्यवसत् ।

इतस्तावत् शून्यायां शालायां प्रियां दमयन्तीं सुप्तामेव परित्यज्य पुण्यश्लोको नलः वने विक्षिप्त इव, लुण्ठित इव परिभ्रमन् कंचिदध्वानं गत्वाऽकस्मादेव वने चीत्कार रवं शुश्राव । विपत्ति व्याकुलो कोऽपिजीवः स्वप्राणरक्षार्थमार्तनादं मुंचन् नैषधमाकारयति स्म । स्वाभिधानमाकारितं श्रुत्वा नैषधस्तस्यामेवदिशि अग्रेसरन्यावद् कतिपय पदान्यगच्छत् तावत्तत्र दावानलेन दन्दह्यमाणमेकं सरीसृपमवलोकयत् । नलमागतमालक्ष्य सोऽब्रवीत् यदहंकर्कोटक नामा नागराजोऽस्मि । एकदा क्रुद्धः देवर्षिनारदः मामशपत् तस्मादेवदिवसादहं भवतः प्रतीक्षायामत्र स्थितो वर्ते । यतोहि नारदेन भणितं यन्नलस्य दर्शनं कृत्वैव तव शाप निवृतिर्भविष्यति । अहं चलनेऽसमर्थोऽस्मि । तर्हि भवान् मां रक्षतु । कर्कोटकस्य तस्य वचः श्रुत्वा दयालुर्नलः करुणापरवशः सन् तस्य रक्षार्थं स्कन्धदेशे नागराजं तं संस्थाप्य दावानलात्तस्मान्निसार्य यावद् तं पृथिव्यां मोचितुमैच्छत् तावद् सोऽकथयत् यद्भवान् मां दशपदानि परिगणना पूर्वकं नयतु तदाहं भवतां समुपकारं संविधास्यामि । विस्मितो नलः एक-द्वि-त्रि-चतुः-पंच-षड-सप्त-नव-इत्थं परिगणनपुरस्सरं यदा 'दश' इति कथितवान् तदैव तेन काकोदरेण स तीक्ष्णया विषदग्धया दंष्ट्रया दंशितः । विष प्रभावात् कृष्णवर्णो जातः । नलस्तमपृच्छत्—किमयमनर्थस्त्वा प्रत्युपकारे कृतः । नागः सान्त्वनाप्रदानसहितमेवमवोचत् यद् न भवान् शोचितुमर्हति । अधुना परिवर्तित शरीरकान्तिना न जनाः भवन्तं ज्ञास्यन्ति भवांश्च निर्भयो भूत्वा विचरिष्यति । भवतां शरीरे सन्निविष्टः कलिरधुना तीव्रेण ममविषप्रभावेण दुःखमनुभविष्यति । विषमेतन्न भवतांकृतेऽनर्थं समुत्पादयिष्यति । निर्भयतया विचरन्तुभवन्तः । अथ च वस्त्रमिदं प्रतिगृह्णातु भवान् । इमे वस्त्रे यदा भवान् परिधापयिष्यति तदैव स्वीयं रूपं समागमिष्यति । इत्थं निगद्य वस्त्रयुगलं समर्प्य नागः कर्कोटकः वन एव व्यलीयत् ।

अनन्तरं कथमपि वने संप्राप्तमार्गो नलः अयोध्यां प्रति जगाम । ततः कौशल देशस्य राजधान्यामयोध्यायांमागत्य तत्र राजानमृतुपर्णं समुपगम्य सोऽब्रवीत्—महाराज ! सूतकर्मणि कुशलोऽहम् । अश्वसंचालने, अश्वायुर्वेदे

चाप्रतिहता मेगतिः । पाकशास्त्रेऽपि दाक्ष्यमादधामि । बाहुकाख्योऽहं भवतां सकाशे भृत्यतया वसितुमिच्छामि । ऋतुपर्णस्तु अश्वप्रिय आसीदेव । स बाहुकाभिधानं नलं स्वाश्वशालायां न्ययोजयत् । नलोऽपि शममुपगम्य ऋतुपर्णस्याश्वशालायां न्यवसत् । दमयन्ती द्वारा पूर्वं प्रेषितः वार्ष्णेयोऽपि "यो हि तस्या पुत्रं पुत्रीं च विदर्भाननयत्" ऋतुपर्णस्यैवाश्वशालायां कार्यं करोतिस्म । परं विरूपधारिणं नलं स कथमपि न ज्ञातवान् । इत्थमेव दिनानतिवाहयन्नलः सायंकाले समुपागते सति प्रत्यहरहः श्लोकमेकं गायति स्म—

**क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।**
**स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥**[1]

दुःखितं बाहुकं परिलक्ष्यान्यतमः सारथिः जीवलस्तमपृच्छत् यत् भवान् कस्याः स्मरणे एतादृशं क्लेशमनुभवति । नलः प्रत्यवोचत्—न कस्या अपि कृते चिन्तयामि । आसीत्कोऽपि भाग्यहतकः पुरुषः यो हि स्वीयां भार्यां कस्मादपि कारणाद्वने संत्यज्य साम्प्रतं इतस्ततः पर्यटति । अनेनैव प्रकारेण नलः कालयापनं चक्रे ।

अपरतस्तु विदर्भराजो भीमः स्वजामातुः पुत्र्याश्च वृतान्तमाकर्ण्यातीव दुःखितो जातः । तयोरन्वेषणार्थं कृतभूरिप्रयत्नः स देशे देशान्तरे च ब्राह्मणान् चारान् प्रैषयत् । उदघोषयच्च यत् यः कश्चिदपि तयोर्विषये संसूचयिष्यति सः पुष्कलं धनमवाप्स्यति । सर्वतो ब्राह्मणाः परिबभ्रमुः । एकस्मिन् दिवसे एको ब्राह्मणः चेदिदेशस्य राज्ञः गेहे समागतः । तत्र राज्ञः अन्तःपुरे स एकामप्रतिमां सौन्दर्ययुतां स्त्रियमवलोक्य विचारपरोजातः । दमयन्त्या शारीरिकैः लक्षणैः मुखमण्डलस्थेन पिप्लुना च स तां पर्यचिनोत् । तामुपगम्य सुदेव नामकोऽयं विप्रः समवदत्—यदहं तव भ्रातुः प्रिय सखा सुदेवोऽस्मि । विदर्भ राजकुमारि ! महाराजस्य भीमस्यादेशेन तवान्वेषणार्थं प्रहितोऽहमत्र समायातोऽस्मि । सर्वे एव तेबान्धवाः कुशलिनः । ते तु भवतीमेव चिन्तयन्ति । सुदेवः यदा दमयन्त्या सह वार्तालापं करोति स्म तदा राजपुत्रीसुनन्दा दमयन्तीं ब्राह्मणेन सहालपन्तीं वीक्ष्य स्वपितामहीं न्यवेदयत् । राजमाता तत्रागत्य सुदेवस्य परिचयं पृष्टवती । सुदेवः स्व परिचयं दत्वा सर्वं दमयन्ती वृत्तान्तं श्रावयामास यदियं विदर्भ-

---

१. म० भा० व० प० ६१।१०

राजदुहितेति । अस्याः भर्ता साम्प्रत द्यूते सर्वस्वं विहायेमां त्यक्त्वा वने कुत्रापि निर्गतः । विप्रयुक्तेयं कथमपि भवत्याः निवेशने समायाता । अद्य अस्याः पिप्लुनाऽहमस्याः परिज्ञानमकार्षम् । राजमाता यदा पिप्लुं दृष्ट्वा तस्याः परिचयं प्राप्तवती तदा दमयन्तीं कण्ठेनाश्लिष्य भृशं रुरोद । राजमाता अवादीत्—यदहं दशार्णाधिपतेः कन्याः । तब माता मे भगिनी । तवाहं मातृष्वसा । त्वं तु मम पितृगृहे एव जाता । ततः परमहं त्वां नावलोकयम् । अतएव न ज्ञातासि मया । यदि किमप्यनुचितमत्र जातं तर्हि क्षन्तव्यम् । अधुना यथा भवत्यै रोचते तथैव कर्तुमीहे । दमयन्ती तस्याः वचनमाकर्ण्यावोचत्—मातः । अत्राहं सुखेनैवावसम् । यद्यपि तव गृहे नास्ति कापि विप्रतिपत्तिः तथापि स्वपितृगृहं गन्तुमिच्छामि । तत्र मे बालकौ निवसतः तयोः कृते चिरादुत्कण्ठिताऽहं गमनार्थं भवत्या अनुज्ञां वांछामि । भवती सुरक्षितां मां तत्र प्रेषयतु इत्येव याचे । राजमाता प्रहृष्टतया भटरक्षितां तां विदर्भान् प्रति प्रैषयामास ।

दमयन्ती विदर्भराजस्य भीमस्य गेहे समागता । पितरौ तां दृष्ट्वातितरां मुमुदाते । दमयन्त्यपि कुशलिनौ स्वदारकौ वीक्ष्य किंचित्सुखं प्राप्तवती । एकस्मिन् दिने सा स्वमातरं प्रत्यवोचत् यन्मातः ! मां जीवितां द्रष्टुमिच्छसि चेत्तदा मे भर्तुः अन्वेषणार्थे प्रयासं कारयतु अन्यथा न मे चिरकालिकं जीवनं भविष्यति । माता तस्य वार्तां सुश्रावाथ च स्व पुत्र्याः क्लेशं भीमं निवेदितवती सा अब्रवीच्च यद् स्वयं दमयन्ती एव लज्जां विहाय एतादृशं कथितवती अतः परं देव एव प्रमाणम् । कथमपि अन्वेष्यतां जामातारं नलम् । राजा भीमः पुनः दूतान् प्राहिणोत् । यदा नलमन्वेषयितुं ब्राह्मणा उद्यता अभूवन् तदा दमयन्ती तानाकार्य जगाद्-यद् भवन्तः सर्वे यत्र-यत्र गमिष्यन्ति तत्र तत्रैव इमां गाथां गायन्तु—

"क्व नु त्वं कितव छित्त्वा वस्त्रार्द्धं प्रस्थितो मम ।
उत्सृज्य विपिनेसुप्तामनुरक्तां प्रियां प्रिय ॥
साथै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ॥
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥

एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथामयि ।
वायुना धूयमानोहि वनं दहति पावकः ॥
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ।
तन्नष्टमुभयं कस्माद् धर्मज्ञस्य सतस्तव ॥
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा ।
संवृतो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् ॥
संकुरुष्व महेष्वास दयां मयि निरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम् ॥[1]

यद्यस्याः गाथायाः कश्चिदुत्तरं दद्यात् तर्हि स नरः सर्वथाज्ञेयः ।

बहुकालानन्तरं पर्णाद नामको द्विजः अयोध्यातः प्रतिनिवृत्य दमयन्त्यै निवेदयामास यत्—भवत्या संदेशं गृहीत्वा इतस्ततः महाभागं नलमन्वेषयन्नहं यदा अयोध्यायां राज्ञः ऋतुपर्णस्य नगरे समनुप्राप्तस्तदा तस्मिन्नेव सदसि मया तव गाथा प्रस्तुता । तत्र तु केनापि सा नोत्तरिता परं यदाहमेकान्ते न्यवसम् तदा कृष्णवर्णो एकः बाहुकाभिधः मां समुपगम्य भृशं विललाप । रुदन्नेव स बाहुकः भवत्या गाथायाः उत्तरे अवोचत्—

"वैषम्यमपिसम्प्राप्ता गोपायन्ति कुल स्त्रियः ।
आत्मानमात्मना सत्यो जित स्वर्गा न संशयः ॥
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
विषमस्थेन मूढ़ेन परिभ्रष्ट सुखेन च ॥
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ।
प्राणयात्रां परिप्रेप्सो शकुनैर्हृतवाससः ॥
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ।
सत्कृतासत्कृता वापि पतिं दृष्टवा तथागतम् ।
भ्रष्टराज्यं श्रियाहीनं श्यामा न क्रोद्धुमर्हति ॥[2]

तस्यैतद् बचनं श्रुत्वा त्वरितोऽहमिहायातोऽस्मि । अतः परं भवत्यै यद्रोचते तत्करोतु । दमयन्ती तु तच्छ्रुत्वा तस्य विप्रस्य धनादिकेन सत्कारं संविधाय

---

१. म० भा० व० प० अध्याय ६७, श्लोक ६-१५
२. म० भा० व० प० अ० ६८, श्लोक ८-११ ।

स्वमातृ मुखेन सुदेव नामकं विप्रमाहूय संदिदेश—'त्वमधुनैवायोध्यां प्रतिगच्छ। तत्र राज्ञः ऋतुपर्णस्य सभां गत्वा तं निवेदय यद्दमयन्ती पुनः स्वयंवरं कर्तुमुद्यतास्ति। श्व एव साऽन्यं कंचिद् पुरुषं वरयिष्यति। यदीच्छसि र्तीह भवानपि तत्र गच्छतु एवं तस्याः समनुज्ञां प्राप्य सुदेवः अयोध्यां प्रति प्राचलत्। कोशलानधिगम्य अयोध्यां प्राप्य ऋतुपर्णनिवेशने गत्वा सुदेवोदमयन्त्याः पुनस्स्वयंवरस्यावाहनमामंत्रणं च ऋतुपर्णाय ददौ। राजा ऋतुपर्णः उद्विग्नो भूत्वाऽचिन्तयत्कथमहं एकस्मिन्नेव दिने विदर्भान् गन्तुं शक्नोमि। ततः बाहुकमाकार्य सर्वं वृतान्तादिकं श्रावयित्वाऽवोचत्—'त्वमेव मां तत्र प्रापयितुं समर्थोऽसि। कथमपि एकेनैवाह्ना मां तत्र नय। बाहुकाभिधो नलः तत्सर्वं श्रुत्वा नितरामतप्यत्।' कथमिदं सम्भवेत्, कथं सा मदन्यं कंचिद् वरयिष्यति, मन्ये मां पुनः संम्प्राप्तुमेव तस्याः प्रयत्नमिदम्, उताहो नष्टं मृतं वा मां विज्ञाय नैराश्याभिभूता सती सा वस्तुत एव पुनः स्वयंवरायोजनं करोतीति सर्वे विचारणपरो नलः अन्ते निश्चयंकृत्वा यदहं स्वयमेवतत्र गत्वा वृतान्तस्यास्य याथार्थ्यं परिज्ञास्यामीति धिया गमनाय स्वीकृतिं प्रादात्।

अश्वशालामुपागम्याश्व परीक्षणं कृत्वा बाहुकः कृशानश्वान् रथे नियोजयामास। चालिते सति स्यन्दने तेऽश्वाः पर्यपतन्। ऋतुपर्णः खिन्नतयाऽवादीत्—कीदृशानश्वान् संयोजयसि बाहुक! कथमहमेकेनैवाह्ना विदर्भान् प्राप्स्यामि एतादृशैः अश्वैः। बाहुकः प्रत्यवोचत् यदहं परीक्षणानन्तरमेवेमानश्वान् रथे न्यवेशयम्। एभिरश्वैरेवावामद्य कोशलं गमिष्यावः। पश्यतु मेऽश्व संचालनमित्युक्त्वा बाहुकः अश्वान् प्रेरयामास। प्राप्ते सत्येव कशाघाते तेऽश्वाः वायुवेगेनाधावन्। रथस्य तीव्रया गत्या चमत्कृतो ऋतुपर्णः तस्य सारथिः वार्ष्णेयश्चाचिन्तयताम्—किमयं शालिहोत्रः अथवा साक्षादेव राजा नलः योहि अश्वहृदयाचार्य आसीत्। मनस्येवं बाहुकं प्रशंसन् ऋतुपर्णः मार्गे वायुवेगेनापहृतमात्मोत्तरीयकमपश्यत्। स रथसंस्थापनाय बाहुकमादिदेश तेन कथितं यद् क्वाधुना ते उत्तरीयकं ततु द्वियोजनपूर्वं एव पतितम्। बाहुकस्याश्व संचालनं परिलक्ष्योल्लसितः ऋतुपर्णस्तमुवाच त्वमपि ममाक्षसंख्याने वलं पश्य। स्वाक्षगणनावलेन ऋतुपर्णः चलन्नेव मार्गे आपतितं बिभीतकं वृक्षमवलोक्य तस्य पर्ण-शाखाफलादिकं सर्वं परिगणय्य ख्यापितवान्। बाहुकोऽवदत् कथमहं भवतां वचनं स्वीकरोमि। प्रथमं तावत् गणनां कृत्वा तवोत्तरस्य सत्यतां प्रमाणयित्वैवाग्रे

गमिष्यामि । बिलम्बो मा भूदिति धिया ऋतुपर्णेन बारं बारं प्रार्थितोऽपि बाहुकः गन्तुं न प्रायतत् । विवशतयारथस्थः ऋतुपर्णः असह्यं तत्कालक्षेपणं तदाऽसहमानोऽपि तत्रैव तस्थौ । बाहुकोऽपि सर्वान् पर्णान् फलांश्च गणयित्वा प्रत्याजगामा आश्चर्यचकिततया ऋतुपर्णस्याक्षज्ञानस्य प्रशंसामकरोत् । मार्ग एव बाहुकः प्रस्तावयत् यदि भवान् अक्षहृदयं मह्यं दत्वा अश्व हृदयं प्राप्तुमिच्छन्ति तदाऽहमेतत्कृते सन्नद्धोऽस्मि । राजा ऋतुपर्णोऽपि तस्याश्वविद्यालोभात् तस्मै अक्ष हृदयं प्रादात् । अक्ष हृदयं दत्वा ऋतुपर्णस्तमवोचत् यन्ममाश्व हृदयं त्वयि एव निक्षेपरूपेण तिष्ठत्वधुना, कस्मिंश्चिदप्यन्यकाले प्रतिगृहीष्यामि । त्वरिततया रथः विदर्भान् गच्छति स्म । अध्वन्येव प्राप्ताक्ष हृदयस्य नलस्य शरीरात् कलिः निर्गत्य कृतांजलिः सन् क्षमायाचनापूर्वकं प्रार्थयत्—यदहं कर्कोटकस्य विषेण दग्धोऽस्मि दमयन्त्याः शापादपि मया दुःखं प्राप्तम् । यद्यपि दुष्टोऽहमेव भवतां क्लेशकारणोऽस्मि परमभिशप्ताय मह्यं भवान् शापदानं न करिष्यतीति में प्रार्थना । कलिनलयोरयं संवादः न केनापि श्रुतः ।

तस्मिन्नेवाहनि सायंकाले ऋतुपर्णः वार्ष्णेयबाहुकाभिहितनलाभ्यां सह कुण्डिनपुरीमुपागमत् । नगरे नासीत् काचित् रचना महोत्सवस्य । कोलहल शून्यं सामान्यगत्या प्रवहन्तं नागरचक्रं संदृश्य ऋतुपर्णः मनसि चिन्तामाप । महाराजा भीमोऽपि अकारणमेवर्तुपर्णस्यागमनं श्रुत्वा नितरांमाश्चर्यमन्वभवत् । दमयन्त्याः अभिप्रायस्तु न केनापि ज्ञात आसीत् । भीमः ऋतुपर्णस्य राज्योचितं स्वागतं सत्कारं च विधाय कुशल प्रश्नानतरं तस्यागमनकारणं पृष्टवान । चतुरतया स्वाभिप्रायमप्रकटयन् ऋतुपर्णोऽवोचत्—न किमपि कारण विशेषेणेहायातोऽस्मि । अहं तु भवतां कुशल वृत्तान्तपरिज्ञानार्थमेव समुपागतः । सायंकालस्तु आसीदेव । अतिथिशालायां ऋतुपर्णं संस्थाप्य प्रतिनिवृतो भीमः रात्रौ तस्यागमन प्रयोजनं बहुशो चिन्तिततवान् किन्तु नानुमातुमशक्नोत् । अन्ततः श्वः वात करिष्यामीति चिन्तयन् स सुष्वाप । बाहुकस्तु अश्वशालायां वार्ष्णेयेन सहाश्वानां परिचर्यादिकं करोति स्म ।

दमयन्ती तदा केशिनी नामिकामन्यतमां दूतीं प्राहिणोत् अवोचच्च—यत्वं गत्वा बाहुकस्य याथार्थ्यं ज्ञातुं प्रवृत्ता भव । शंके स एव नलः वर्तते । तस्य परिचयानन्तरं त्वं पर्णादेन श्रावितानां वचनानामपि स्मरणं तं कारयिष्यसि । यथा स उत्तरं दद्यात् तत्सर्वं मां निवेदय । केशिनी अश्वशालामुपागम्य बाहुकात् राज्ञः

ऋतुपर्णस्यागमनस्य प्रयोजनं पृष्टवती। बाहुकः दमयन्त्याः पुनः स्वयंवरार्थे राजा समागत इति विज्ञापितवान्। केशिन्या वार्ष्णेयस्य विषये पृष्टेन बाहुकेन तस्य परिचयो दत्तः यत्सः पूर्वं पुण्य श्लोकस्य नलस्य सारथित्वं भजतेस्म अधुनातु स ऋतुपर्ण सेवते। नलस्य विषये स किमपि न जानाति। केशिनी ततः पुनरवोचत् बाहुक ! यदा अयोध्यायां ऋतुपर्णस्य सदसि पर्णादनामको कश्चिद् द्विजः गतवांस्तदा त्वया तस्य वचांसि प्रत्युत्तरितानि। अहं पुनस्तवोत्तरं श्रोतुमीहे। बाहुकः पुनः—

वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः॥[1]

इत्यादिकं सर्वं यथावच्छ्रावयामास। एतत्सर्वां वार्ता विधाय केशिनी प्रतिनिवृत्य वृतांतमिदं दमयन्त्यै न्यवेदयत्। तदनन्तरं पुनः दमयन्ती केशिनीं प्रेषयन्ती अवोचत् यत्वं बालकाविमौ गृहीत्वा बाहुकस्य समीपे गच्छ। बालौ दृष्टवा तस्य का प्रतिक्रिया भवतीति सर्वं परिज्ञाय मां विज्ञापय। अन्यच्च बाहुकस्य महानसं गत्वा तेन पक्वं सिद्धान्नमपि समादाय मह्यं देहि। तस्याः आज्ञापालनार्थं यदा दूती गतवती तदा स्वबालकौ समवलोक्य बाहुकाभिघः नलः मुक्तकण्ठेन भृशमुच्चैः रुरोद। बाष्पाकुलेक्षणः स प्रत्युवाच न त्वयाऽन्यत्किंचिदनुमन्यं ममाप्येतादृशौ बालकावास्ताम् तावेव स्मृत्वा वत्सलहृदयोऽहं वाष्पाण्युत्सृजामि। केशिनी तत्सर्वं नलस्य विकारादिकं संलक्ष्यान्ते नलेन्न सिद्धं भोजनं चादायान्यान्यप्याश्चर्याणि यथा—महानसे नलस्य इच्छामात्रेणैव अग्निजलयोराविष्करणं, हस्तपरामृष्टाणामपि पुष्पाणामपरिम्लानत्वं, चैतत्सर्वं निरीक्ष्य समागत्य च दमयन्त्यै विज्ञापयामास। नलाचरितानि सर्वाणि कर्माणि श्रुत्वा सा तं नलममन्यत्। यदा नलेन संसिद्धं भोजनं साऽस्वादितवती तदा सा निश्चयेन तं प्रत्यभिज्ञातवती। यदयं नल एवास्ति नान्यः कश्चित्, परमधुनाऽपि तस्य वैरूप्यस्य विषये आसीदेव विप्रतिपत्तिः। स्व मातरं समुपगम्य दमयन्ती स्वाभिप्रायं ज्ञापितवती यद् बाहुक एव नलः वर्तते सर्वौः लक्षण परीक्षणैरित्येवानुमीयते। यद्यप्यहं तस्य वाह्य रूपे शंके अतस्तन्निरसनार्थे तत्र गत्वा स्वयं तस्य साक्षात्कारं कर्तुमिच्छामि एतदर्थे पितुः भवत्याश्चानुमतिं वांछामि।

---

१. म० भा० व० प० अ ७२, श्लोक २५।

ततः मातुरनुज्ञां प्राप्य सा बाहुकमुपगम्य तत्समक्षे ता एव गाथा अगायत् याः पर्णादेव पूर्वं श्राविताः। मामेकवस्त्रां परित्यज्य कथं भवान् निरनुक्रोश इवागच्छत् इत्थं कथयित्वा सा स्फुटं रुरोद। तस्य रोदनमाकर्ण्यं नलोऽवोचत्—भीरु! मया यदपि समाचरितं तत्सर्वं तु कलि प्रेरितएवासीत् किन्तु त्वया तु साम्प्रतं स्वैरिणीव पर पुरुषाराधनार्थं स्वयंवरविधानं रचितं तदिदमेव समुचितं भवत्याः कृते किम्? नलस्य वचः श्रुत्वा साऽवोचत् नाथ मया स्वप्नेऽपि कश्चिदन्यो न परिचिन्ततः। भवतां चरणकमलयोः प्राप्त्यर्थं किं किं मया न कृतम्। स्वयंवर व्याजोऽयं तवोपलब्धेः हेतुः नान्यस्य कस्यचिदपि। "अहं शपे चन्द्राग्नि वायूनां समक्ष एव यदि मया स्वप्नेऽपि कस्यचिदन्यस्य कल्पना कृताऽभूत्तदा में शरीरपातो भूयात्।" आकाशवाण्या तदैवोद्घोषणा समभूत—दमयन्त्याः शीलमक्षुण्णं वर्तत इति। आकाशवाणीं श्रुत्वा विश्वस्य च नलः प्रसन्नोजातः। तदैव कर्कोटकात्प्राप्तं वस्त्र द्वयं परिधाय नलः स्वं सहजं रूपं प्राप। चतुःर्वर्षानन्तरं पुनः स्वप्राणप्रियां तामाश्लिष्य समोदं विप्रलम्भजन्यं दुःखमत्यवाहयत्। स्वीयेन परिवारेण संयुक्तो नलः प्रातःकाले श्वसुराय भीमाय प्रणाम निवेदनं चकार। भीमस्तं समभिनन्दयत्।

राजा ऋतुपर्णोऽपि यदा ज्ञातवान्यन्नल एव बाहुकस्य रूपे आसीत्ततः सः स्वयं तस्यसमीपमुपगम्य क्षमायाचना पुरस्सरं मैत्रीभावेन नलं शुभैषणा पूर्वकं स्वपुरं प्रतिनिवर्तितुं प्रार्थयामास। पुण्यश्लोको नलोऽपि सहर्षमश्वहृदयविद्यां ऋतुपर्णाय दत्वा ससम्मानपूर्वकं प्रेषयत्। किंचित्समयानंतरं महाराजः नलोऽपि स्वल्प परिच्छदेनावृतः सन् स्वदेशान् नैषधानगमत्। तत्र गत्वा स पुष्करं द्यूतक्रीडार्थं द्वन्द्वयुद्धं वा कर्तुं उत्प्रेरयामास। "अहंपुनः दमयन्त्या सह नलस्य धनादिकं विजित्य तस्य निष्कासनं करिष्यामीति" धिया पुष्करः द्यूते समुपविष्टः। नल शनैः शनैः तस्य सर्वस्वं विजित्य राज्यसमेतं तस्य प्राणानपि च जित्वा पुनः स्वं राज्यं स्थापितवान्। किन्तु कारुणिकोऽसौ पुष्करस्य राज्यादिकं जित्वापि तस्मै एव प्रदाय तं नगरे प्रेषयत्।

इत्थं पुण्य श्लोको नलः स्वीये जीवने बहून् क्लेशाननुभूयापि धैर्यमवलम्ब्यान्तेऽभ्युदयं प्राप्तवान्। वृहदश्वः नलचरितं समाप्य युधिष्ठिरं प्रत्यवोचत् यत्वमपि पुनः स्वाभ्युदयमंगलं द्रक्ष्यसि।

यद्यपीह खलूपाख्यानेषु काव्यतत्वं गौणतया कथातत्वं च प्रधानतया स्वीक्रियतेऽनुभूयते च तथापि व्यासेन समुदीरितं नलोपाख्यानं स्वयमेव नैजेन

वैशिष्ट्येन काव्यत्वमेव विशेषेणानुभावयति, कथा तु जनसाधारणान्तः करण-मान्दोलयन्ती संस्कुर्वन्ती चातिश्लाघ्या । कथा रसे समाप्यायिता यदा वाचकाः श्रोतारश्च वस्तु संघटनया पात्रेण च सह तादात्म्यं स्थापयन्ति तदा कथा कृत-कार्या सती पर्यवसिता भवति । कथारसभावकयोः तादात्म्यस्थापनं विना कला न प्राणिति नोद्देश्यं चरममाप्नोति । भगवतः रामस्य कृष्णस्य चौदात्यं चरित्रं यथा कलावलेन श्रोतुः जिज्ञासां शमयति जिजीविसामुत्पादयति च तथा नल-चरितस्य कथाऽपि स्वकीय काव्यमयतया पतितं जीवनस्योच्चावचं सुखदुः खादिकं समानभावेनानुभावयन्ती लोकान् भावयति ।

महाभारतस्यैतिहासिक्यः कथाः इव जातकस्य कथाः अपि गतिशीलाः दृश्यन्ते । यत्र कुत्रचिदपि गाथेत्यादेः प्रयोगो मिलतिचेत्तर्हि तत्र महाभारत जातकयोः कथायां साम्यप्रतीतिर्भवति । जातक कथाः पूर्णतया नैतिक परम्परां संस्थापयितुं समुद्दिष्टाः, विनेयोन्मुखीकरण प्रवृत्तावाधारिताः सन्ति । लोककथो-पाख्यानयोः वस्तुतत्व प्राधान्यादेव स्वरूपधायकतया उत्कर्षाधायकतया चेमे समाने कल्प्येते । यथा लोककथासु मर्महरं घटना विशेषं भूयोभूय भावयितुं विशिष्टं पदं पुनरावर्त्यते येन सामाजिकः कथायाः प्रधानं रसमनुभवति तथा महाभारतीय नलचरितेऽपि करुणरसादिकैः सम्वलितं कथावस्तु तद्गतभावाभि-व्यंजनं चानुभूय सामाजिकाः साधारणीकरणोपायवलेन विगलितकलिमलान्तः करणाः कृतार्थाः भवन्ति । प्रिया वियुक्तो वाहुकेति छद्माभिधो नलः अयोध्या-धिपस्य ऋतुपर्णस्यावासे निवसन्नहरहः सायंकाले मर्मोद्वेजकमिदं श्लोकं गायति स्म यत्काव्यं कस्य भावकस्य मनो नोन्मथ्नाति—

**क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।**
**स्मरन्ती तस्य मन्दस्य कं वा सद्योपतिष्ठति ॥**[1]

अयं श्लोकः न केवलमितिवृत्तमेव निर्वहति अपितु नायकस्यान्तर्निष्ठां व्यथामपि प्रकटयति । यद्यपि स्वपरिकरवियुक्तः असीन्नलस्तथापि स्वीयां वेद-नामन्तर्निगूह्य स निःश्वासपुरस्सरं खेदमनुभवति येनानुभूयमानो व्यंग्योऽर्थः सहृदयान् कारुण्यस्य परां कोटिं प्रापयति । अत्र व्यथा संकेताभिव्यंग्यत्वेन या रस प्रणाली परिपुष्टा कृता महर्षिणा व्यासेन सा नकथमपि स्फुटतया विलाप-वर्णनेऽपि सम्भवति ।

---

१. म० भा० व० प० अ० ६४ श्लोक १० ।

इत्थमेव यदा नलविप्रयुक्ता सती दमयन्ती कानने इतस्ततः कष्टमनुभवन्ती विलपति स्म तदा तत्र नायिकायाः विलपने व्यासस्य ध्यानं तथा नापतितं यथा तस्याः नैतिक परम्परानुगमनवर्णने । व्याकुलतया परिभ्रमन्ती दमयन्ती सर्वत्र प्रियं नलमन्वेषयति तदा न सा स्वात्मार्थमनुशोचति किन्तु स्वपत्युः कष्टमनुमीय तस्यैव कृते चिन्तातुरा भवति—

**न शोचाम्यहमात्मानं न चान्यदपि किंचन ।**
**कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥**
**कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः ।**
**सायाह्ने वृक्ष मूलेष मामपश्यन्भविष्यसि ॥**[1]

पतिव्रतायास्तस्याः सर्वा अपि चिंताः केवलं नलस्यैवार्थे सन्ति न स्वार्थाय । नलः सुप्तायास्तस्याः वस्त्रार्द्धं कर्तयित्वा तां वराकीं तत्रैव परित्यज्य च पलायित आसीत् । तस्य कार्यमिदं कथमपि धीरोदात्तस्य नायकस्य कृते नोचितं, अत्र तस्य चारित्रिकं न्यूनत्वमनेन द्योत्यते किन्तु नलस्य कृते व्याकुला सा सर्वमेतत् विस्मृत्य कथमपि तस्याभ्युदयं स्यात्, कथमपि स पुनः प्राप्नुयादिति चिन्तया आनलप्राप्तिं यावत् सर्वानेव सम्भवानुपायायाननुष्ठितवती । त्यक्ताऽपि सा यदा स्वपितृगृहे समागत्य पत्युरन्वेषयितुं ब्राह्मणांश्चारान् प्रैषयत्तदा सा एतादृशीमेवगाथां पठति यया नलस्यान्तःकरणे प्रसुप्तं प्रेम पुनः समुत्थितं भवेत्—

**क्वनु त्वं कितवच्छित्वा वस्त्रार्द्धं प्रस्थितो मम ।**
**उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥**
**सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।**
**दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥**[2]

तस्याः इयं गाथा पुण्यश्लोकस्य तस्य हृतन्त्रीं तथा झंकृतवती यथा स बाहुकस्य छद्मवेषे प्रच्छन्नोऽपि पर्णादस्य मुखात् गाथामिमां श्रुत्वा स्वान्तःस्थं भावं रोद्धुं नाशकत् तथा चाबोचत्—

**वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।**
**आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥**

---

१. म० भा० व० प० अ० ६०, श्लोक १०-११ ।
२. वही, अ० ६७, श्लोक ९-१० ।

रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।।
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ।।[1]

पर्णादः यदा बाहुक वृत्तान्तं दमयन्तीं श्रावयामास, तदा सा गाथायाः उत्तरं प्राप्य नलस्याभिज्ञानविषये किंचित् विश्वस्ताऽभूत् । पुनः स्वयंवर व्याजेन ऋतुपर्णेन सह नलमाकार्य सा बाहुकरूपे समाच्छन्नं नलं परीक्षितुं केशिनीं प्रेषितवती, केशिन्या पुनः स एव श्लोकः तत्र पठितः—

क्व नु त्वं कितवच्छित्त्वा वस्त्रार्द्धं प्रस्थितो मम ।।[2]

अनेन प्रकारेण तान्येव पद्यानि पौनः पुन्येन विदधता महर्षिणा व्यासेन प्रेम्णोऽतिशयत्वं तीक्ष्णत्वं मार्मिकत्वं च सम्पादितम् नात्र पुनरुक्ति दोषो वर्तते । अतः परं एकमन्यदपि कारणमस्ति यत् विपुलकाये कथानके पाठकः कथावस्तु क्रमे कतिचित् मुख्य प्रसंगान्, सूक्ष्मानि संवेगात्मकानि स्थलानि च न विस्मरेत अतएव आख्याने तेषामेव मार्मिकाणामंशानां पुनरुल्लेखनं प्रकारान्तरेण संयुज्यते । कथाप्रसंगानुकूलतया क्रियते चेत्तदा पुनरुक्तास्तेंऽशाः कथावस्तुनि गतिशीलतां भावमयतां चोत्पादयन्ति, विस्मर्यमाणान् सूक्ष्मांशान् पुनः स्मारयन्ति च । एतेन सत्यपि पुनरुक्ति दोषे न तत्र किमप्यत्याहितं भवत्यपितु कथाकर्तुः कौशलेन प्रतीयमानोऽयं दोषः गुणत्वे पर्यवसति ।

उपाख्यानेषु कथातत्वापेक्षया काव्यतत्वस्य गौणत्वं भवतीत्युक्तं यत्तस्यायमेवाभिप्रायो यत्कथानके कथारचनाकर्तुराशयः कथावस्तुनः सर्वतोभावेनोत्कर्षं विदधेत् । उपाख्याने काव्यत्वं तु स्वयं समुद्भूयते न खलु कथाकृत्कौशलजन्यं तत्सम्भवम् । कथावस्तुनिसर्वांगीण वैशिष्टंय प्रकटयितुं सन्नद्धस्य रचनाकारस्य कृतौ काव्यत्वं स्वत एव समायाति । अन्यच्चापि यत्कारणं तदेव ध्यातव्यम्, आदि कवेः वाल्मीकेः, महर्षेः व्यासस्य वा काव्यदृष्टिः न खलु सामान्य कविदृष्टिरिवासीत् । जीवितसंघर्षेष्वपि धर्म्यं पन्थानमपरित्यजद्भिः यैः राम-हरिश्चन्द्र-नलादि नायक विशेषैः नैतिकी मूल्य परम्परा रक्षिता त एव महर्षिणा कृष्णद्वैपायनेन स्वकाव्ये समनुवर्णिताः । खण्ड विशेषं जीवनस्य न परिलक्ष्य

---

१. म० भा०, व० प०, अ० ६८, श्लोक ८-९ ।

२. वही, अ० ६८, श्लोक १८ ।

जीवनस्य समग्रतामेव स्वकाव्ये सम्यगुपवर्णयति। पौराणिककालस्य सर्वेऽपि नायकाः नायिकाश्च कष्टेष्वपि धर्मे आस्थावन्तः नैतिकमूल्यान् परिपालयन्ति-स्म, सुखेष्वपि स्व विनम्रतामौदात्यं च तथैवाक्षुण्णतया संधार्य कीर्तिशरीरं प्रत्यधिकतया दत्तक्षणाः आसन्, सत्यपि सामर्थ्ये दण्ड्यस्य क्षमापरास्तेऽभूवन्, स्व वचनपरिपालनार्थमनुचितमपि देवदौत्यं सम्पादयन्तः स्वप्रियया: पार्श्वे हृच्छयार्दितानां देवानां प्रेमसन्देशं वाहयन्ति स्म। किं वहुना, जीवनाग्नि परीक्षणेऽपिधैर्य धनिकास्त एव नायकाः वाल्मीकिना व्यासेन वा स्व स्व कृतौ वर्णिताः। अतएव समाधिस्थबुद्ध्या यत्किंचिदपि तेऽवर्णयन् तत्सर्वं कथा काव्य वस्तु भाविनः कवित्वस्य शरीरमण्डनायालं बभूव। वाल्मीकेः राघवेन्द्रकृत सीतोपदेशः, कालिदासस्य कुमारसम्भवे पार्वती तपस्या, रघुवंशे दिलीपस्य गोसेवा, इत्येतानि सर्वाण्येव स्थलानि भारतीय जीवनदर्शनस्य शाश्वन्मूल्यं समुपस्थापयन्ति।

काव्य दृष्टया कस्मिन्नपि कथा वस्तुनि स्वरूप संकोच विस्तारयोः समुचिता क्षमताऽपेक्ष्यते। उपाख्याने च पुनः कथायाः प्रत्येकस्मिन्नङ्गे, उपाङ्गे तथाच सन्धिस्थले समानभावेन दृष्टि निक्षेपः आवश्यक अत एवात्र शैल्यां संकेतस्य व्यंचनायाश्च बाहुल्यं दरीदृश्यते। साम्प्रतिके युगे या लघुकथा(कहानी) वा प्रच-लिताऽस्ति तस्यां व्यंजनात्मकता तीव्रतरा वर्तते। संस्कृत वाङ्मयेऽपि अमरुकस्य मुक्तछन्दसां विशेषरूपेण श्लाघा समभूत्। उपाख्यानस्यशैली शिल्पानुरूपतयात्र नलोपाख्याने वर्णनक्रमे वस्तु विविधतायाः वक्रतायाश्च तथाविधो मणिकांचन संयोगो दृश्यते योऽन्यत्र न परिलक्ष्यते। लोक विश्रुतापि नलकथा स्वीव कौतू-हलवृत्तिना सहृदयान्तःकरणं समावर्णयति। कौतूहलस्य वृत्ति कथाप्रसंगे जीवन्ततामादधाति, समस्ताः एव प्राचीनकथाः अस्यामेव पद्धतौ रचिताः। साम्प्रतमस्य वृत्तेः उपेक्षाभावेन कथा साहित्यं न सामाजिकहृदये आनन्दं समुत्पादयत्यतः कथा काव्यं नीरसे मरुभूमावितस्ततो दूयत इति केषांचिद् आधुनिकानां कथाकाराणामस्ति विमर्शः।[1]

भारतीयाकला सपेक्षतायाः सिद्धान्तं स्वीकरोति, निरपेक्षा कला तु पाश्चा-त्यानां परिकल्पनाऽस्ति। वस्तुतः कलायाः सामाजिकमथ च निर्वैयक्तिकमेव

---

१. ज्ञानोदय कहानी विशेषांक १९६४।

रूपं ग्राह्यं समीचीनं चास्ति । ननु कलायाः कृते कला भवतीति सिद्धान्तं स्वीकरणीयं चेत्तर्हि कोहि कविः इदं मत्काव्यं स्वान्तः सुखायैव, न सामाजिकानुरंजनाय न च लोकयशसे सृष्टमिति वक्तुं शक्नोति यदि च वक्तु प्रयतते तर्हि तस्यानुपयोगित्वात् तत्काव्यं काव्यपदं न लप्स्यति । परं वस्तुस्थितौ कला परस्मै एव भवति समुद्दिष्टा, तत्र कविः स्वयमात्मानं तथा च सामाजिकं यावत्काल पर्यन्तमात्मोपलब्धिं कारयति तावदव सा कृतिः साफल्यं भजते । इदमेव कलायाः सार्वभौमं स्वरूपमस्ति ।

वैदिककालादेव प्रातःकाले समुपागताया उषसः स्वागतगानं कुर्वती भारतीया मनीषा सदैव उदयगिरिगतस्यैव सूर्यस्याराधनं कृतवती । सायंकालस्य अस्ताचलगामिनि सूर्ये प्रतीततया वर्तमानस्य नैराश्यस्याराधनं क्वापि कदापि तया न स्वीकृतम् । अत एवोर्जितमाशाप्रकाशं प्रत्येकस्मिन् कथानके समाहितं स्यादिति निश्चप्रचम् । त्रासदीति (Tragidi) नामिका या दुःखान्त रचना-सा पाश्चात्यैः सुवहुशा प्रतिपाद्यत्वेन प्रशंसिता सती सामाजिके कारुण्यमुत्सर्जन्ती, मनः समान्दोलयती व्यक्तित्वं विरेचयति । सामाजिकः विरेचन सिद्धान्तानुसारेण फलश्रुतिमप्यवाप्नोति । फलतः स नैराश्यान्धकारस्य कालिमायामवसन्नतया निमज्जितमात्मानमनुभवति । अस्माकं वाङ्मये कथा काव्यान्ते वाक्यं यत्कथ्यते तदित्थं—"यथा कथा नायकस्य पुनरभ्युदयो जातस्तथैव श्रोतुः पाठकस्य वाऽपिस्यादिति ।" कथायाः सुखान्तमुद्देश्यम् । नलोपाख्यानेपि कष्टाकुलं युधिष्ठिरं सान्त्वयितुं वृहदश्वमुखेन महर्षिः व्यासदेवः प्रारम्भ एव जगाद—

**शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।**
**यवस्त्वत्तो दुःखिततरो राजासीत् पृथिवीपते ॥**[1]

कथां समाप्य श्रोतारं युधिष्ठिरं वृहदश्वः आश्वास्य पुनरुवाच—

**इतिहासमिमं चापि कलिनाशनमुच्यते ।**
**शक्यमाश्वासितुं श्रुत्वा त्वद्विधेनविशांपते ॥**[2]

संकोचविस्तारयोः या चर्चा कथा प्रसंगे कृता तस्याः विषये विवेचनं क्रियते चेत्तदा निःस्संकोचतया वक्तु शक्यते यन्नलचरिते ययापि मूल कथया सहावान्तर कथा वर्णितास्ता सर्वा एव कथावस्तुनः मूलधाराप्रवाहं सम्बर्धयितुमेव प्रवृत्ताः

---

१. म० भा०, व० प०, अ० ४६, श्लोक ३८ ।
२. वही, अ० ७८, श्लोक १० ।

दृश्यन्ते तत्रैकोऽपि कथाप्रसंगो न हेय इति । ये महाकवयः नलचरितस्य पूर्वार्द्ध-मेव वर्णितवन्तस्तेषां दृष्टिपथे उत्तरनलचरितस्य सौन्दर्यं नापतितमिति मन्ये अन्यथा श्री हर्षस्य त्रिविक्रमभट्टस्य वा काव्ये भाषालंकाराणां सौन्दर्य प्रदर्शन-मेव चमत्कारकारि न प्रभवेत् । तत्र कथावस्तु भाषाभारेण तथा क्रान्तं यथा नलचरिताद् भिन्नं कस्यचिदन्यस्य चरितं भवेत् । कथायाः विस्तारो व्यासी-करणं वा प्रासंगिकस्य स्थलस्य सूक्ष्मातिसूक्ष्मं सौन्दर्यतत्वंमनेक विधया प्रत्याय-यितुं प्रयतते तथैव तस्याः संकोचनमपि काव्ये प्रतिपाद्यं वस्तु तीक्ष्णं किन्तु समग्र प्रभावान्वितौ दूरगामि एवं च वर्ण्यवस्तुनः कृते दृढां भूमिं विदधत् कथा काव्य-कलेवरमुपकरोति । यथा—

**निषधेषु महीपालो वीरसेन इति श्रुतः ।**
**तस्य पुत्रो भवन्नाम्ना नलो धर्मार्थ कोविदः ॥**
**स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।**
**वनवासं सुदुःखार्तो भार्यया न्यवसत्सह ॥**
**न तस्य दासा न रथो न भार्या न च बान्धवः ।**
**वने निवसतो राजन् शिष्यन्ते स्म कदाचन ॥[1]**

नलचरितस्यास्मिन् प्रसंगे दृश्यते । समासेन व्याहृत मिदं कथावस्तु नूनमेव श्रोतारं पात्रं पाठकं चोत्कण्ठयति, कथायाः नवनवमायामं सृजति, संघटनानां चतुष्पथे स्थितं सत् नवनवोन्मेषं प्रददाति अथ च स्वीय प्रभावान्वितौ सम्पूर्णां कथामुपसंहरतीति ।

विस्तारस्य दर्शनमभीष्टं चेत्तर्हि हर्षस्य नैषधं द्रष्टव्यं यत्र केवलं नलदम-यन्त्योर्विवाहं यावदेव वृत्तान्तं द्वाविंशत्सर्गेषु द्विसहस्त्राधिक पद्येषूपनिबद्धम् ।

पुराणेतिहास कालिकाः रचनाकाराः सर्वे एव नाङ्गस्य वर्णने दत्तावधानाः बभूवुः अपितु अंगीवर्णन एव । साम्प्रतिकाः साहित्यिकाः भौतिकं सौन्दर्यं प्रति समधिकतया आस्थां धारयन्ति, अन्ये रीतिकालस्य प्रवृत्तिः वर्तमानमपि काल-मनुधावति, परं प्राचीनाः व्यास-वाल्मीकि-सूर-तुलसीहोमर-दान्ते प्रभृतयः प्राच्याः पाश्चात्याः वा शब्दार्थ शरीरापेक्षया तदात्मानं काव्यरसमैवे परिपुष्ट-वन्तः । अतएव तेषां काव्यशिल्पं कला चोदात्तत्वात् शेखरायते । अत्र नल-

---

१. म० भा०, व० प०, अ० ४६, श्लोक ३९-४०-४१ ।

चरितगतानि कानिचित्तादृशानि स्थलानि समवलोक्यन्ते यानि महर्षिणा व्यास देवेनातीव सूक्ष्मतया संकेतमात्रतया च संप्रतिपादितानि। यदीमानिस्थलानि हर्षस्य, वाणस्य, भवभूतेर्वा हस्ते परापतिष्यन् तदा एते सर्वे कवय एव नैकानि महाकाव्यानि स्रष्टुं प्रवृत्ताः अभविष्यन्।

(अ) नलदमयन्त्योः पूर्वानुरागवर्णने व्यासेन दमयन्त्याः रूप विधानमतिशयतया नोद्घाटितम् तस्याः पर्थिवसौन्दर्यस्य रेखांकनमात्रमेव विहितम्—

**दमयन्ती तु रूपेण तेजसा, यशसा, श्रिया।**
**सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा॥**[1]

अत्र सुमध्यमा इत्यनैनैव पदेन कटि प्रदेशस्य क्षीणत्वं सौकुमार्यमलौकिक रतियोग्यत्वं च व्यज्यते।

(ब) दमयन्त्याः परित्यागावसरे यदा करुणरसस्योद्रेकः चरम दशां प्राप्नोति तदा कविः सांसारिक रोदनादिक व्यवहारंमुत्कृष्ट प्रेम्णे न्यूनं मत्वा नायिकायाः स्वपत्युः पुनरभ्युदयार्थं चिन्तां वर्णयति। तस्यामपि दशायां सा न स्वार्थमनुशोचति—

**न शोचाम्यहमात्मानं न चान्यदपि किंचन।**
**कथं नु भवितास्येक इति त्वां नृप शोचिमि॥**
**कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः।**
**सायाह्ने वृक्ष मूलेषु मामपश्यन्भविष्यसि॥**[2]

(स) सुदीर्घकालं यावत्, नायिका दमयन्ती यदा कथमपि सुदेव नामकस्य ब्राह्मणस्य साहाय्येन चेदिदेशात् स्वपितुर्गृहमागत्य, स्वबालकौ पुनः दृष्टवती तदा वात्सल्यभावतया न जाने कीदृशं हृदयं तस्याः साध्व्याः अभूत्। माता एव मातुः हृदयवेदनामनुभवितुं शक्यते। परन्तु मानवीयमनसः क्षीणत्वमिदं महाकवेः व्यासस्य वर्ण्यं कथमपि नावसीदति। अस्मिन्नवसरेऽपि व्यासः—

**सर्वान्कुशलिनो दृष्ट्या बाण्धबान्वारकौ च तौ।**
**मातरं पितरं चैव सर्वं चै सखीजनम्॥**[3]

---

१. म० भा० व० प०, अ० ५०, श्लोक १०।

२. वही, अ० ६०, श्लोक १०-११।

३. म० भा०, व० प०, अ० ६६, श्लोक २३।

इत्युक्तवैव कथा प्रसंगं प्रवाह्यति । कथंचिद् कोऽपि भवभूतिः अत्र स्यात्तदावश्यमेव करुणरसपूरितं नाटचकाव्यमेकं सृजेत् ।

(द) कथायाः समापनावसरे यदा चत्वारि वर्षाणि यावत् कष्टमनुभूय नायिकानायकौ पुनरमिलताम् तयोर्हृदये तदा एकैकशः समागतं भावं व्यासः स्वयं नोपवर्ण्य तमनुभवितुं पाठकस्योपरि उपक्षिपति—

दमयन्त्यपि भर्तारमवाप्याप्यायिता भृशम् ।
अर्धसंजात सस्येव तोयं प्राप्य वसुन्धरा ॥
सैवं समेत्य व्यपनीत तन्द्री,
शान्तज्वराहर्षविवृद्ध सत्वा ।
रराज भैमी समवाप्तकामा,
शीतांशुना रात्रिरिवोदितेन ॥[1]

नलचरितस्यान्यदप्येकं वैशिष्टचमत्र परिलक्ष्यमस्ति यत् सर्वत्र कथानके कौतूहलसृष्टिः परिलक्ष्यते यस्य कौतूहलस्य निर्वाहः कथायाः परिसमाप्तिं यावत् जातोऽस्ति । अन्यथा तत्र रोचकतायाः औत्सुक्यस्य चाभावो भविष्यति । नलचरिते कर्कोटकस्य वृत्तान्तं कौतूहलमुत्पादयितुं बहूपकरोति । कर्कोटकेनदंशितो नलः नैजंरूपं विहाय कृष्ण वर्णो जात इति सहसा मनसि औत्सुक्यमुद्भावयति । न कोऽपि तं प्रत्यभिज्ञातुं शक्नोति । ऋतुपर्ण-जीवल-वार्ष्णेय-केशिनी पर्णादि-दमयन्तीत्यादि सर्वे जनाः तस्याभिज्ञानेऽक्षमाः भवन्ति । कथान्तं यावत् कौतूहलमिदं पाठकं प्रभावयति । अन्ते नलः कर्कोटकदत्तं वस्त्रयुगलं यदाधत्ते तदैव नैजं रूपं प्राप्य सर्वान् हर्षयति । अनेन कर्कोटक वृत्तांतेन यद्वैशिष्ट्यं परिकल्प्यते तत्काव्य प्रवाहस्य प्रमुखप्रेरकत्वेन कथाया केन्द्रविन्दूपलक्ष्यते ।

नल चरितस्य सौन्दर्यमुद्घाटयितुं तस्य काव्यशास्त्रीयं समीक्षणं परमावश्यकम् । काव्यतत्वानां विविधाः विधाः तल्लक्षणानि च नलचरिते लक्ष्ये केन रूपेण संगमनीयानि भवितुमर्हन्ति तथा लक्षणनिकषे नलचरितं कियदुत्कृष्टमिति सर्वमग्रे परीक्ष्यते—

## काव्यशास्त्रीय वस्तुतत्व दृष्टचा नल चरितस्य समीक्षा

इतिवृत्तस्य विषये प्रथमतया भरतमुनिकृते नाटच शास्त्र एव उल्लेख

---

1. वही, अ० ७५, श्लोक २६, २७ ।

आप्यते। यद्यपि तत्र कथावस्तु नाट्यकथा वस्तुन एवाभिज्ञायते तथापि इतिवृत्तस्य परीक्षणार्थं या शैली तत्र स्थापिता सा वस्तुत एव समेषां कथावस्तूनां कृते अवश्यमनुसरणीया। तेष्वेकस्यापि तत्त्व विशेषस्याभावे तस्मिन्नितिवृत्ते न्यूनत्वं संलक्ष्यते। अत एवास्माभिरपि नलचरितस्य परीक्षणमत्र क्रियते।

कथावस्तु वविध्येनोपवर्ण्यते आधिकारिकतया प्रासंगिकतया च—

**इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते।**
**आधिकारिकमेकं स्यात्प्रासंगिकमथापरम्॥**[1]

आधिकारिकमितिवृत्तं वस्तु वा तदेव भवति यन्नायकं फलागमस्याधिकारिणं करोति। नायकस्य फलागमेन सम्बद्धं मुख्य कथावस्तु एवाधिकारित्वेनोपकथ्यते यथा—

**अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः।**
**तस्येतिवृत्तं कविभिराधिकारिकमुच्यते॥**[2]

मुख्यमाधिकारिकं वा वस्तु यदुपकरोति, पोषयति, वस्तुनि यच्चमत्कारमुत्पादयितुं सन्निविष्टं भवति तत्प्रासंगिकमितिवृत्तं कथ्यते। इदमवान्तर कथा प्रसंगमपि वक्तुं शक्यते। अस्य विषये दर्पणकारः—

**अस्योपकरणार्थं तु प्रासंगिकमितीष्यते॥**[3]

इति प्रतिपादयति। अत्र "अस्येति" पदस्याधिकारिकस्येत्यर्थः अस्याधिकारिकस्योपकरणार्थं यदितिवृत्तं तत्प्रासंगिकं यथा रामचरिते सुग्रीवादिचरितम्।

अनेक प्रकारेणाधिकारिक प्रासंगिक भेदाभ्यां सह परितुलिते सति नलचरितेऽपि कथावस्तु द्वैविध्यं भजते। अत्र नलस्य कथा आधिकारिकत्वेनोपवर्णिता यतोहि चरितनायकेन नलेनैव फलागमे पुनः भार्याप्राप्तिः राज्यावाप्तिश्चानुभूयते। प्रासंगिकेतिवृत्तत्वेन कर्कोटक वृत्तान्तस्योल्लेखनं कर्तुं शक्यते। कर्कोटकस्य वृत्तान्तं यद्यपि मध्य एव परिसमाप्तं संलक्ष्यते तथापि येनकेन प्रकारेण नायकस्य पुना राज्य प्राप्तिपर्यन्तं गच्छत्येव नलदमयन्त्योः पुर्नामिलनावसरे नल; कर्कोटकेनैव प्रदत्तं वस्त्र युगलं धारयित्वा नैजंरूपं प्राप्नोति। अनेन प्रका-

---

१. साहित्य दर्पण-षष्ठ परिच्छेद, कारिका ४२।

२. वही, कारिका ४३।

३. वही, कारिका ४४।

रेण कर्कोटकस्य वृत्तान्तं मुख्यतया नलचरितस्य साहाय्यं करोति। इदमेव आधिकारिकेतिवृत्तेरुद्देश्यसंकथने सहधर्मितामादधाति। प्रासंगिकेतिवृत्तस्य विषयेऽभिनवभारतीकारस्यापि निरुक्तिः दृष्टव्या—

"प्रसक्तिर्हि प्रसंगः तत आगतं प्रासंगिकं, प्रसज्यते वा प्रधान फल निष्पत्तय इति प्रसंगस्ततआगतम्।"[1]

अभिनवभारतीकारस्याभिप्रायः स्फुटतया नाट्य दर्पणे निर्दिष्टः—

मुख्यमिष्टफलं वृतभंगं प्रासंगिकं क्वचित्। मुख्यं सर्व प्रबन्ध व्यापित्वात् प्रधानम्। इष्टं सर्वोत्कर्षेण कवेरभिप्रेतं फलं यस्य। वृत्तं चरितम्। अंगं मुख्य-वृत्तस्यानुयायित्वादवयवः। प्रसंगात् परकीययत्नादागतं प्रासंगिकम्। इह तावन्न निसर्गतः किंचिच्चरितं मुख्यमंगं वा किन्तु बहुष्वपि फलेषु कविर्यस्यात्यन्तमुत्कर्ष मभिप्रैति तत्फलमिष्टम्। अनेन च यद् फलवद् वृत्तं तदिह मुख्यम्। तदितर-दंगत्वात्प्रासंगिकम्। रामप्रबन्धेषु हि सुग्रीव मैत्री शरणागत विभीषणरक्षण-रावणवध सीता-प्रत्यानयनादिषु सीताप्रत्यानयनस्यैव प्राधान्यं कविनाप्रतिपा-दितम्। तत्संपादनाय तदितरेषु प्रवृत्तैः। अतएव तान्यंगानि। कविरपि न स्वेच्छया फलस्योत्कर्ष निबमद्धुर्हति। किन्त्वौचित्येन। यस्य धीरोद्धतादेर्यदेव फलमुचितं तस्यैवोत्कर्षो निबन्धनीयः। प्रासंगिकस्यापि च मुख्य वृत्तप्रयत्नेनैव निष्पत्तिर्विधेया। प्रयत्नान्तरे हि तदपि मुख्यं स्यात्।...........क्वचिदिति यत्रैव मुख्योनेता फलसिद्धौ सहायमपेक्षते तत्रैव प्रासंगिकं न सर्वत्र।[2]

इति नाट्य दर्पण कारेण वर्णित इतिवृत्तेर्भेदद्वयं नलचरिते यदि स्वीक्रियते तदा नल कथा आधिकारिकतया वर्तते। प्रासंगिकतया तु व्याधवृत्तान्तं, सार्थवाह वृत्तान्तं, कर्कोटक वृत्तान्तं च उदाहर्तु शक्यते। किन्तु मुख्यतया प्रासंगिक कथा रूपेण कर्कोटकवृत्तान्तमेव परिज्ञेयं ग्राह्यं च यतोहि तद्वृत्तान्तमेव आपरिस-माप्ते कथावस्तु अनुगच्छति। संस्कृत वाङ्मये प्रायः सर्वेष्वेव प्रवन्धेषु कथावस्तु रचनाविधानं सर्वत्राधिकारिकतया एवं च प्रासंगिकतया समायोजितमिति स्पष्ट-तया परिलक्ष्यते।

प्रकारद्वय सम्पन्ने कथावस्तुन्यर्थ प्रकृति, अवस्था, सन्धयोऽपि यथास्थाने वस्तुसंघटनार्थं स्वीक्रियन्ते। पंचार्थप्रकृतयः पंचावस्थाः पंचसन्धयश्चेति भेदाः स्वीकृताः। प्रथमं तावदर्थप्रकृति पंचकं वक्ष्ये। अर्थप्रकृति पंचके बीज-बिन्दु-

---

१. उद्धृत साहित्य दर्पण पृष्ठ ३८३ सम्पादक सत्यव्रत सिंह।

२. नाट्य दर्पण प्र [illegible] विवेक

पताका-प्रकरी-कार्यश्चेति पञ्चानां समाहारो भवति । इतिवृत्त एते पंच प्रयोजनीयाः । कथितमेव—

**बीजं बिन्दु पताका च प्रकरी कार्यमेव च ।**
**अर्थप्रकृतयः पंच ज्ञात्वा योज्या कथाविधिः ।।**[1]

अर्थ प्रकृतिशब्दस्यार्थः प्रयोजनस्य प्रकृतिरित्यस्ति । प्रकृतेरर्थः सिद्धि हेतुः साधकोपायः वा । अर्थप्रकृतिविषयेऽभिनवभारतीकारस्य मतं सुसमीचीनम्—

इतिवृत्त विषये कथा येन प्रकारेणाधिकारिकस्य खण्डन लक्षणेन पंचावस्था उक्तास्तेनैव प्रकारेणार्थ प्रकृतयोऽपि पंचैव पठ्यन्ते । तदनभिधाने उपायादिस्वरूपापरिज्ञानात् प्रारम्भाद्यवस्थानां परमार्थतो संवेदने आधिकारित्वमधिदितं स्यात् । यत्रार्थः फलं तस्य प्रकृतयः उपायाः फलहेतवइत्यर्थः । तत्र जड़चेतनतया द्विधाकरणम् । जडश्च मुख्य कारणभूतः गूढ़तरो वा आद्यं बीजं द्वितीयं कार्यं करणीयं प्रयोक्तव्यमित्यर्थे । चेतनोऽपिद्विधा मुख्य उपकरण भूतश्च; अन्त्योऽपिद्विधा स्वार्थ सिद्धिसहिततया परार्थ सिद्ध्या युक्तः शुद्ध्याऽपिच, तत्राद्यो बिन्दुः द्वितीया पताका तृतीयः प्रकरी । तदेतैः पंचभिरुपायैः पूर्णफलं निष्पाद्यते ।··· अन्येत्वाहुः अर्थस्य समस्तरूपक वाच्यस्य प्रकृतयः प्रकरणान्वयवार्थ खण्डा इत्यर्थं प्रकृतयः एतच्च व्याख्यानं नातीव प्रकृतं पोषयति । सन्ध्यादीनामपिचार्थ प्रकृतित्वमत्र व्याख्याने स्यात् । इतिवृत्तमेव च समुदाय रूपम् । अर्थ इतिवृत्ते प्रकृतय इति वक्तव्येऽर्थग्रहणमतिरिक्तं स्यात् । इत्यवस्थाभिश्च तुल्यतावर्णनमात्रं स्यादिति किमनेन ।[2]

अर्थप्रकृतेः पंचसु भेदेषु बीजस्य लक्षणमित्यं प्रोक्तम्—

**अल्पमात्र समुद्दिष्टं बहुधायद्विसर्पति ।**
**फलस्य प्रथमो हेतुबीजं तदभिधीयते ।।**[3]

स्वल्पत्वेनोपक्षिप्तं सत् वैविध्येन सम्वर्द्धयं यद्वस्तु बीजवत् फलत्वे परिणमति तत्काव्ये बीजमभिधीयते । इदं बीजं तदतिरिक्त अन्यार्थप्रकृतीनामवस्थानां सन्धीनां चानुकूल्येन प्रातिकूल्येन च पुष्यते क्षीयते च ।

नलचरिते बीजार्थ प्रकृतिः प्रस्तावनायामेव द्रष्टुं शक्यते द्यूतपराजितः धर्म-

---

१. साहित्य दर्पण षष्ठ परिच्छेद ।

२. अभिनव भारती तृतीय भाग पृष्ठ १२ ।

३. साहित्य दर्पण षष्ठ परिच्छेद का० ६५ ।

राजोयुधिष्ठिरः वनेन्यवसन्तेकदा वृहदश्वमवलोक्य कृत प्रणामांजलिः अचकथत्-न मत्तो दुःखिततरो अस्त्यासीद्वा कोऽपि राजा । वृहदश्वः तं सान्त्वयितुं जगाद-

श्रणुराजन्नवहितः　सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजासीत पृथिवीपते ।।
निषधेषु महीपालो　वीरसेन　इति श्रुतः ।
तस्यपुत्रो भवन्नाम्ना नलोधर्मार्थकोविदः ।।
सनिकृत्या जितोराजा पुष्करेणेति नः श्रुतम् ।
वनवासं सुदुःखार्त्तो　भार्ययान्यवसत्सह ।।
न तस्य दासा न रथो न भ्राता न च वान्धवाः ।
वने निवसतो राजन्छिष्यन्ते स्म कदाचन ।।
भवान हि संवृतो वीरैः भ्रातृभिर्देवसम्मितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ।।[1]

वृहदश्वस्य वचनमाकर्ण्य युधिष्ठिरः स्वकष्टं विस्मृत्योत्सुकतया नलस्य चरितं श्रोतुमिच्छति—

विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतांश्रेष्ठ　तन्ममाख्यातुमर्हषि ।।[2]

कष्टस्य समानामेव दशामनुभवतः युधिष्ठिरस्य नलचरितं प्रत्याकर्षणं-स्वाभाविकमेव । महर्षिणा वृहदश्वेनास्योत्तरे पुनः विस्तरेण नलचरितं श्रावितम् । अतोऽत्रैव वृहदश्वोक्तेषु श्लोकेषु नलचरितस्य बीजार्थ प्रकृतिः वर्तते । नाट्य दर्पणे बीजस्यबिषये यत्प्रपंचितम् तदित्थं—

स्वल्पोद्दिष्टः फलप्राप्तौ हेतुबीर्जं प्ररोहणात् ।

आदौगम्भीरत्वादल्पनिक्षिप्तो मुख्य फलावसानश्च यो हेतुर्मुख्यसाध्योपायः स धान्य बीजवद् बीजम् । प्ररोहणादुत्तरत्र शाखोपशाखादिभिर्विस्तरणात् ।[3]

नाटच दर्पणकारस्य मतमधिसमीक्ष्यापि नलचरितस्य बीजार्थप्रकृतिरत्रैव प्रस्तावनायां निश्चेतुं शक्यते नान्यत्र । अतः परं बीजस्य ये भेदाः प्राचीनैः प्रतिपादितास्ताननुसृत्य नलचरितस्य बीजमन्वेषणीयम् । प्राचीनास्तु—

---

१. म० मा० व० प० अ० ४६ श्लोक ३८ से४२ ।

२. अ० ४६ श्लोक ४३ ।

३. नाट्य दर्पण प्रथम विवेक ।

फले यस्य हि संहारः फलबीजं तु तद्भवेत ।
वस्तु बीजं कथाज्ञेया, अर्थबीजं तु नायकः ॥[1]

अनेनोद्धरणेन फलबीजं, वस्तुबीजं अर्थबीजं चेति बीजस्य प्रकार त्रयमिति नलचरिते त्रयाणामपि निदर्शनमित्थं कर्तु शक्यते -

१. **फलबीजं**—फलेयस्य हि संहारः फलबीजं तुतद्भवेदिति लक्षणानुसारं यद्बीजं फल एवं समुपसंहरिति तत्फलबीजंमित्यभिधीयते । यथापूर्व मुपक्षिप्तं बीजं—

दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्ध संजात सस्येव तोयं प्राप्य वसुन्धरा ॥
भैमीमपि नलो राजः भ्राजमानो यथा पुरा ।
सस्वजे स्व सुतौ चापि यथावत्प्रत्यनन्दत् ॥[2]

इति फलागमे संहृतं दृश्यते । अतोऽत्र फलबीजम् ।

२. **वस्तुबीजं**—वस्तुबीजस्य तात्पर्यार्थः वस्तु इतिवृत्तं तस्य बीजं वस्तुबीजं, यत्र आगामिनः कथावस्तुनो बीजरूपेण संकेतं स्यात् वस्तुबीजं । भविष्यमाणं घटनाक्रमं संक्षेपतो यत्रोपवर्ण्यते तत्रैव वस्तु बीजस्य स्थितिः ज्ञेया । आरम्भ एव यदि संकेतन घटनाक्रमो निर्दिश्यते चेत्तर्हि सामाजिकस्यान्तः करणे औत्सुक्यं सम्भवति । एतदर्थमेवास्य योजनावश्यकी । नलचरिते—

निषधेषु महीपालो वीरसेन इति श्रुतः ।
तत्पुत्रो भवन्नाम्ना नलो धर्मार्थकोविदः ॥
स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।
वनवासं सुदुःखार्तो भार्यया न्यवसत्सह ॥[3]

अस्मिनस्थले प्रस्तावनायामेव नलचरितस्य भाविघटनाचक्रं संक्षेपेण प्रस्तुतमस्ति । अत्रेदमूह्यते यदत्र वस्तुबीजं आधिकारिकस्यैवेति वृत्तस्य निदर्शनं समुपस्थाप्यते न तु प्रासंगिकस्य ।

३. **अर्थबीजं**—अर्थबीजस्य तात्पर्यमस्ति नायकस्य संकेतः । अत्र नायकस्य नामोल्लेखनमावश्यकम् । अतोऽत्र नलचरिते अर्थबीज द्रष्टुं शक्यते—

---

१. उद्धृत—साहित्य दर्पण षष्ठ परिच्छेद पृष्ठ ३९९ संपादक सत्यव्रत सिंह ।
२. म० भा० व० प० अ० ७५, श्लोक २६ एवं १९ ।
३. वही, अ० ४९, श्लोक ३९-४० ।

### बिन्दुः

अर्थप्रकृतेः द्वितीयो भेदः बिन्दुःवर्तते । बिन्दुं परिभाषयितुं प्रवृत्तोदर्पणकारः अवोचत ।

**अवान्तरार्थ विच्छेदे बिन्दुरच्छेद कारणम् ।**[1]

अस्यार्थो यत् यत्र अधिकारिक इतिवृत्तें विच्छेदस्य सम्भावना जायते तत्र तदितिवृत्तं येन सन्धीयते विच्छिन्नतया तद् विन्दुः । तात्पर्यमिदं यत् कदाऽपि क्वापि मूलकथानके एतादृशानि स्थलानि परापतन्ति यत्र कथा वस्तु समाप्ततया परिलक्ष्यते तत्र भावि कथावस्तु संयोजनार्थे येन पुनः संयुज्यते तदैव स्थलविशेष बिन्दुत्वेन स्वीक्रियते । अभिनवभारतीकारः बिन्दु विषये लिखितवान्—

प्रयुज्यते फलं यैरुपायानुष्ठानैः तेषामितिवृत्तवशादवश्यकर्तव्यतादिभिर्विच्छेदेऽपि सति यदनुसंधानात्मकं प्रधाननायकगतं सन्धिद्रव्य ज्ञानं बिन्दुः ज्ञान विचारणं फललाभोपायत्वात् । यावद् विच्छेदः प्रत्यनुसन्धानेन न कृतस्तावन्न किंचिदपि कार्यं निर्वहति । ननुबीजं तावत् फलान्तमास्ते बिन्दोस्तु कथं स्थितिरित्याह यावत् समाप्तिरिति। यावत्स्वस्यवध्यमानस्य फलस्य सम्यगाप्तिस्तावत् । एतदुक्तं भवति—सकलोपाय प्रति जागरण निमितं ह्यनुसन्धानं यावद्धि मुख्यनायकेन प्रत्यनुसंधानेन न क्रियते तावद् जड़जडरूपः सर्वोप्युपाय धर्मोऽनुपाय परमकारण स्वभावतैल बिन्दुवत् सर्व व्यापकत्वादपि बिन्दुः । बीजं च मुख सन्धेरेव प्रवर्त्यास्मानमुन्मेषयति बिन्दुस्तदनन्तरमिति विमर्शोऽनयोः, द्वे अपि तु समस्तेतिवृत्तव्यापके ।[2]

भरतमुनिनातु बिन्दुवर्णनमित्थं सम्पादितम्—

**प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।**
**यावत्समाप्तिर्बन्धस्य स बिन्दुः परिकीर्तितः ।।**[3]

अत्र बिन्दोः स्वरूपमवान्तरविच्छित्तेः प्रसंगानुसंधानद्वारा पूर्णकारकमित्यनेन प्रकारेण स्वीकृतम् । नलचरिते बिन्दोः प्रयोगस्तस्मिन्स्थले कृतः यत्र नलदमयन्त्यो र्विवाहोत्सवः समजायत । विवाहानन्तरं प्रहर्षिताः देवा अमरावतीं प्रति प्रस्थिताः

१. साहित्य दर्पण षष्ठ परिच्छेद का० ६६ ।

२. अभिनव भारती, तृतीय भाग, पेज १४ ।

३. उद्धृत साहित्य दर्पण पृष्ठ ३९९ सम्पादक सत्यव्रत सिंह ।

मार्ग आगच्छन्तौय कलिद्वापरौ दृष्टवा देवेन्द्रस्तावुवाच-कुत्र युवां गच्छथ इति । तावूचतुः यद्दमन्तीं परिणेतुमावां गच्छावः । देवेन्द्रः प्रहस्योवाच संवृत्तः स्वयंवरः । प्रतिनिवर्तस्व, अस्माकं समक्ष एव तया नलो वृतः क्रुद्धः कलिरवोचत् यत् देवान् विहाय सा मर्त्यं नलं वृतवती अतः सा दण्ड्या । न नलः सुखेन तया सह वत्स्यति । देवैः निवारितोऽपि सः स्वमित्रं पुष्करमादाय नैषधानगमत् । कालान्तरे द्यूतव्याजेन तयोर्वियोगं विदधे । कलिद्वापरयोः वृत्तान्त (१) मत्र बिन्दुतया स्वीकरणीयम् । कलिना द्वापरं प्रति यत्कथितम् ।

ततो गतेषु देवेषु कलिर्द्वापिरमब्रवीत् ।
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यसे ।
त्वमप्यक्षान् समाविश्य कर्तुं साहाय्यमर्हसि ॥[2]

अत्र कलिसम्बन्धि श्लोक द्वयमेव बिन्दुनोदाह्रियते । अभिनव भारती कारेण च यत्कथितं स्वयं च परम कारण स्वभावस्तैलबिन्दुवत् सर्व व्यापकत्वादपि बिन्दुः तदप्यस्मिन्नेव प्रसंगे संगतं प्रतिभाति । यतो हि कलेः कौटिल्यमेव भाविनो नायकनायिकयोः विप्रलम्भस्य हेतुभूतं सिद्ध्यति येन कथा सान्तराया सती प्रतीयते । फलागमात्पूर्वं यत्र नलः ऋतुपर्णादिक्षहृदयं जग्राह तत्र कलिः नलस्य शरीरान्निर्गत्य क्षमायाचनापूर्वकं गतवान् । अतः कलिद्वापर संवाद एव बिन्दुः ज्ञेयः ।

## पताका

व्यापि प्रासंगिकं वृत्तं पताकेत्यभिधीयते ।
पताका नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥[3]

उपर्युक्तेन लक्षणेन स्पष्टमेव प्रतीयते यत्प्रासंगिकमितिवृत्तमेव पताकेति नाम्ना व्यवह्रियते । किन्तु प्रासंगिकमिदमितिवृत्तं व्यापकत्वेनाधिकारिकेतिवृत्तं सूपकरोति । अस्येति वृतस्य न भवतिकिमप्यन्यरूपफलम्, यच्च फलं दृश्यते तद वस्तुतः नायकस्य कृते फलागमस्य सम्पादन एवोपरमते । पताका नायकस्य तु स्वतंत्रो फलागमः सहनायकत्वान्न गण्यते । यथा रामचरिते सुग्रीवादि वृत्तान्तम् ।

---

१. म० भा० व० प० अध्याय ५५ ।
२. वही, अध्याय ५५, श्लोक १२-१३ ।
३. साहित्य दर्पण ष० प० का० ६७ ।

नलचरितस्येतिवृत्ते व्यापकेतिवृत्ततया कर्कोटकवृत्तान्तं दृष्टुं शक्यते। कर्कोटकस्येतिवृत्तं मध्य एव समुद्भूय आफलागमं संचलति। कर्कोटकस्य नास्तिकिमपि नैजं फलम्। तस्य चरितार्थता तु नलस्य फलागम एव पर्यवसति। अतः कर्कोटकस्यैव वृत्तान्तं पताकारूपे स्वीकर्तु शक्यते। अत्रेदं ध्येयं यत् भरत मुनि वचनानुसारेण पताकायाः पर्यवसानं गर्भे विमर्शे वा सन्धावेव स्यात्। पताकानायक सम्बन्धि तत्सिद्धान्तं उपर्युक्त फलयोजनायः सिद्धान्तेन सह न वैपरीत्यं भजते यतो ह्यत्र पताकायाः अभिप्रायः पताकानायकगत फलाभिप्रायेणास्ति न तु पताकारूप प्रासंगिकेतिवृत्तेन। यतः प्रासंगिकमिदमितिवृतं क्वचित् निर्वहणसन्धिं यावत् संगच्छति—

**गर्भे सन्धौ विमर्शे वा निर्वाहस्तस्य जायते॥**[1]

अस्मिन् विषये अभिनव भारती कारस्यापीदमेव मतम्—

स्वफलसिद्धये यतमानस्य तत्र तत्रावश्यं पृथग् गणनाशंकेति, प्रत्प्रशमन प्रयोजनम् अस्मत् पक्षे कस्मिंर्त्तर्हि प्रधानसंधौ तस्यानुयायित्वमिति दर्शयितुमाह-आगर्भादाविमर्शाद्वेति प्रतिमुखे गर्भे यदि वा यमर्थं व्याप्य निवर्तते पताकेतिवृत्तं तावत्येव पताकानायकस्य स्वफलसिद्धि रूप निबन्धनीया, सिद्ध फलस्त्वसौ प्रधान फल एव व्याप्रियमाण आसीनोऽपि भूतपूर्वगत्या पताका शब्द वाच्यो य मुख्यत्वेन। अत्राह कस्माद् यस्मादिति। कस्मादस्याभिप्रायः, प्रधानवच्च कल्प्येतेत्युक्तत्वात् निर्वाहादपि किं तद्भवति, अत्रोत्तरं यस्मादिति निर्वहण पर्यन्ते तत्फले क्रियमाणे तुल्यकालेयोरूपकार्योपकारकत्वाभावात् तेन प्रधानोपकारभावो न भवेत्। अभिविधावाङ्। ये तु मर्यादायां तं व्याचक्षते ते न सम्यगमंस्त—।[2]

अनेन प्रकारेण नलचरिते पताकारूपेण वर्णितं कर्कोटक वृत्तान्तं यद्यपि प्रसंगतया मध्ये समुद्भूय तत्रैव लीयते किन्तु कर्कोटकेन प्रदत्तं वस्त्रयुगलमेव परिधाय नलः परिचीयते अतः निर्वहण सन्धि पर्यन्तमेतत् वृत्तातं दृश्यत इति।

## प्रकरी

**प्रासंगिकं प्रदेशस्थं चरितं प्रकरी मता।**[3]

आधिकारिकेतिवृत्ते नायकोपकरणार्थं यदितिवृत्तमुपनिबद्ध्यतेऽवान्तरकथाप्रसंगास्तएव प्रकरीति कथ्यन्ते। प्रकरी तु प्रसंगानुरोधवशात् कथायाः एकदेश

---

१. साहित्य दर्पण षष्ठ परिच्छेद का० ६७।

२. अभिनव भारती पेज १७—तृतीय भाग।

३. सा० द० षष्ठ परि०।

एव समुत्पन्ना सती तत्रैव स्वोद्देश्यं प्रदर्श्य विलीयते। न सा कथा अग्रे गच्छति। भरतेनोक्तं प्रकर्याः विषये—

**फलं प्रकल्प्यते यस्याः परार्थायैव केवलम्।**
**अनुबन्ध विहीनत्वात् प्रकरीति विनिर्दिशेत्॥[1]**

अतः प्रकरी स्वार्थ निरपेक्षत्वं वहति। नाट्य दर्पण कारोऽपि प्रकर्याः सुष्ठु विवेचनं प्रस्तौति—

**प्रकरी चेत् क्वचिद् भावो चेतनोऽन्य प्रयोजनः।**

क्वचिद् भावी वृत्तैकदेशव्यापी अन्यस्य मुख्यनायकस्यैव प्रयोजनं यस्य स चेतनः सहकारी प्रकर्षेण स्वार्थनिरपेक्षया करोतीति प्रकरी।——यथा रामप्रबन्धेषु जटायुः। चेदित्यनेन पताकावदनवश्यंभावित्वमाह। क्वचिद् भावित्वात् स्वार्थानिरपेक्षत्वाच्च पताकातो भेदः।[2]

सिद्धान्ततः प्रकरी तादृशमितिवृत्तं भवति यस्य स्वतंत्रं फलं न भवत्यथ च तदैकदेशि सत् विरमते। नलचरिते नैकानि प्रकरी वृत्तान्तानि सन्ति यथा-कामातुर व्याधादिवृतान्तम् दमयन्ती वने भ्रमन्ती एकदाजगरेण परिग्रस्ता प्राणरक्षायै आर्तभावेनोच्चैः करुणरवं करोति स्म तदा तत्रैकेन व्याधेन यदृच्छयागतेन सा रक्षिता। परं रक्षणानन्तरं स एक वस्त्रां तां दृष्टवा कामातुरो जातः। लोलुपस्य तस्य कुत्सितां भावनां परिज्ञाय परिव्रता दमयन्ती तं शशाप। तत्कालमेव सः व्याधः भस्मीभूतः।[3] व्याधवृत्तान्तमिव सार्थवाह वृत्तान्तमपि प्रकर्याः रूपेऽस्ति। यत्र व्याधवृत्तान्तानन्तरं कथमप्यात्मानं रक्षन्ती दमयन्ती एकस्मिन्नहनि वने गच्छन्तं सार्थ समूहमेकं दृष्ट्वा स्वपरिचयं च दत्वा तेनैव समूहेन सह चेदिदेशं गन्तुमियेष परं रात्रौ तत्राकस्मादेव मानुषं गन्धमाघ्राय वनकरिणः तं सार्थवाहं स्वैःपद्भिः भूमौ भ्रंशयामासुः। जीवत्राणार्थमितस्ततः पलायन्तस्ते सार्तनादं वने परिबभ्रमुः। नैके हताः, नैके कृतांगभंगाः अवशिष्टायुषोऽन्ये यथा तथा ये शिष्टास्ते विपत्तेरस्याः इयमेव कारणमिति विश्वसन्तः दमयन्तीमेव घातयितुं प्रवृत्ताः। दमयन्ती येन केन प्रकारेण लतागुल्मैराच्छाद्यात्मानं ररक्ष।[4] इमेद्वे कथे स्वतन्त्रतयेव नलचरिते प्रयुक्ते स्तः। प्रथमा तावत् वृत्तान्तफलरूपेण

---

१. नाट्यशास्त्र १६।२५।

२. नाट्यदर्पण प्रथम विवेक।

३. म० भा०, व० प० ६०।२०-३८।

४. म० भा०, व० प० अ० ६१ श्लो० १०६-१२५, अ० ६२ श्लो० १११।

नायिकायाः पातिव्रत्यं प्रमाणयति अपरा तु नायिकानुभूतं दैवदुर्विपाकरूपि फलं निर्दिशति । यद्यप्यनयोर्द्वयोरपि कथयोर्नायकौ क्रमशः व्याध सार्थवाहौ स्तः परं तयोरपि न स्वतंत्रं किमपि फलमतः प्रकरीस्वरूपे इमेद्वे कथे वर्तेते ।

**कार्यम्**

**अपेक्षितं यत्साध्यमारम्भो यन्निबन्धनः ।**
**समापनं तु यत्सिद्ध्यै तत्कार्यमिति संमतम् ॥**[1]

कार्यरूपार्थप्रकृतेरभिप्रायः प्रधानतयावस्थितेन साध्येन सहास्ति यस्योद्देश्येन नायकस्य कृत्यानि प्रारम्यन्तेऽथ च यस्य सिद्धे सति नायकस्य कृत्यानि विरमन्ति । भरतः स्वनाट्यशास्त्रे कार्यस्य विषय अवोचत्—

**यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।**
**तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ॥**[2]

कार्यार्थप्रकृतिलक्षणानुसारं नलचरिते यत्र नायकेन नलेन पुनः भार्या प्राप्ति राज्यावाप्ति रूप साध्यस्योपलब्धिः सम्पादिता तत्रैव कार्यम् ।

अत्र दशरूपककारेण कार्यस्य यल्लक्षणं विहितं तदभिनवभारतीकारस्य नाट्य दर्पणकारस्य च मतेन वैभिन्न्यमावहति । किन्तु धनञ्जयस्य मतमिदं सुग्राह्यमस्ति । दशरूपके कार्यस्य वि.षये कथितम्—

**तस्येति वृत्तस्य किं फलमि त्याह—**
**कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ।**

धर्मार्थकामाः फलं तस्य शुद्धमेकैकमेकानुबन्धं द्वित्र्यनुबन्धं वा । तत्साधन व्युत्पादयतिस्वल्पोद्दिष्टस्तु तद्धेतुबीजं विस्तार्यनेकधा ।

स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद् बीजम्———तच्च महाकार्यावान्तरकार्यहेतु भेदादनेक प्रकारकमिति ।[3]

उपर्युक्तेन मतेन स्पष्टमेव यत्कार्यस्याभिप्रायः धर्मार्थ कामरूप पुरुषार्थत्रये एकं द्वे त्रीणि वा प्राप्त्यर्थे नायकाः कार्यं समारभते । समारब्धस्य तस्य चरमपर्यवसानं हि कार्यमुच्यते । नलचरिते—

**स्वरूपिणं तमभर्ता दृष्टवा भीम सुता तदा ।**
**आक्रोशदुच्चैरालिंग्य पुण्यश्लोकमनिन्दिता ॥**

---

१. साहित्य दर्पण परिच्छेद का० ६९ ।

२. नाट्यशास्त्र १९।२६ ।

३. दशरूपक-धनन्जय ।

भैमीमपि नलो राजा भ्राजमानो यथा पुरा।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत् ॥[१]

अत्र पुनः भार्या प्राप्ति रूप फलागमेन कामरूप पुरुषार्थस्यावाप्तिस्तथा च—

आगतायां च वैदर्भ्यां सपुत्रायां नलो नृपः।
वर्तयामास मुदितो देवराडिव नन्दने ॥
तथा प्रकाशतां यातो जम्बूद्वीपेऽथ राजसु।
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ॥[२]

इत्यत्र पुनः राज्यावाप्तिरूपफलागमेनार्थपुरुषार्थस्य प्राप्तिस्तथा च—

ईजे च विविधैर्यज्ञैर्विधवत्स्वाप्तदक्षिणैः।[३]

इत्यत्र धर्मरूप पुरुषार्थस्योपलब्धिः प्रदर्शिता। अतोऽत्रैव नलचरिते कार्यार्थ-प्रकृतिः स्वीकरणीया।

दशरूपककारस्य मतं समीचीनतया स्वीकुर्वता भावप्रकाशनकारेण स्वग्रन्थे सुष्ठुनिरूपितम्—

बीजं बिन्दु पताका च प्रकरी कार्यमेव च।
अर्थप्रकृतयः पंच कथा भेदस्य हेतवः ॥
एते कथा शरीरस्य हेतवः परिकीर्तिकाः।
साधनत्वाद्धि बीजस्य प्रथमं तदुपक्षिपेत् ॥
साध्यत्वादेव कार्यस्य सर्वान्ते तत्प्रयोजयेत्।
अविच्छेदाय रचयेद् बिन्दुं मध्ये तयोरपि ॥
तत्र तत्र यथा योगं पताका प्रकरीन्न्यसेत्।
उक्ता ह्यर्थप्रकृतयस्तत् प्रवृत्तिश्चदर्शिता।[४]

भाव प्रकाशनकारस्यैव मतमत्राप्युपसंहारतया समीचीनम्।

अर्थप्रकृतेरनन्तरं कथावस्तुनि अवस्थानामुन्मेषोप्यवलोकनीयः अवस्थायाः पंच भेदाः काव्यशास्त्रे लक्षणकारैः स्वीकृताः। वस्तुनि पंचानामपि भेदानां सन्निवेशोऽपेक्ष्यते। काव्यशास्त्रे अवस्थायाः पंचभेदाः इत्थमुपवर्णिताः—

---

१. म० भा० व० प० अ० ७५, श्लोक १८-१९।

२. वही, अ० ७८, श्लोक ३-४।

३. वही, अ० ७७, श्लोक ५।

४. भाव प्रकाशन सप्तम अधिकार।

**अवस्था पंचकार्यस्य प्रारब्धस्य फलार्थिभिः ।**
**आरम्भयत्न प्राप्त्याशा नियताप्ति फलागमः ॥**[1]

फलप्राप्त्यर्थं प्रारब्धस्य कार्यविशेषस्य पंचावस्थाः भवन्ति याः क्रमशः आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमेति-नाम्ना विधीयन्ते। दशरूपककारोऽपि उपर्युक्तमेव लक्षणं स्वीचकार । अत्रेदं स्पष्टमेव यत् कार्यस्य इमाः पंचावस्थाः न खलु काव्यशास्त्रस्य पारिभाषिक पदत्वेन व्यवह्रियन्ते, अपितु कस्याऽपि व्यापार-विशेषस्य पंचावस्थाः एभिरेव द्योत्यन्ते । अवस्थापंचकस्य-विषयेऽभिनवभारतीकारस्य मतमिदं यन्नायकेन सहावस्थापंचकस्य सम्बन्धस्तु भवत्येव एतेन सहैव काव्यकर्त्रा सहापि तत्सम्बद्धं भवति । यथार्थे जीवने नायकादीनां व्यवहारस्य व्यापारस्य वाऽवस्थापंचकमेव काव्यप्रणेतुः कलाद्वारा काव्यस्यावस्थापंचकत्वे परिणमते । इतिवृत्तेरवस्थापंचकं नायकानां व्यक्तित्वस्य क्रमिक विकास-चित्रणं द्योतयति । एतदर्थमेव वस्तुविन्यासेऽस्य अवस्थापंचकस्यापेक्षा संजायते—

"अथ कविप्रयत्नेन साध्यो व्यापारपरिस्पन्दो यो वाङ्मनसगतस्तस्य या अवस्था आनुपूर्व्येति उद्देशक्रमेणैव प्रयोक्तृभिः कविभि निबन्धनीयतया ज्ञातव्यास्ता उद्दशति-प्रारम्भश्चेति । चकारैस्तथाशब्देन चावश्यं भाविक्रमत्वमासामुच्यते । नाहि प्रेक्षापूर्वकारिणोऽवस्थान्तरा संभावनायां प्रारम्भ उचितो भवति, तत्प्रारम्भश्चेदुत्तरोत्तरावस्थाप्रसर एव । पंचम इत्यनेन क्रमो विवक्षित इति दर्शयति । एताः क्रमेणदर्शयितुमाह—(औत्सुक्यमात्रबन्धस्त्विवति)—महतः प्रधान भूतस्य फलस्य युज्यमानस्य तत्तन्नायकोचितस्य यद् बीजमुपायसम्पद् तस्य यदौत्सुक्यमात्रं तद्विषयस्मरणोत्कण्ठानुरूपं अनेनोपायेनैतत् सिद्ध्यतीतिः तस्य बन्धो हृदये निरूढिः प्रारम्भः, सा च नायकस्यामात्यस्य नायिकायाः प्रतिनायकस्य दैवस्य वा तस्या हि तथैवानुमानाद् व्यवस्था ।"[2]

नलचरितस्य कथावस्तुनि प्रस्तुतस्यावस्थापंचकस्य समावेशः क्रमशः निम्नतया कर्तुशिक्तते—

**१. आरम्भ—** **भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ।**[3]

आरम्भस्तु फलस्य सावस्था वर्तते या मुख्यफल सिद्धौ औत्सुक्यं सम्पाद-

---

१. साहित्य दर्पण षष्ठ परिच्छेद का० ७० ।

२. अभिनव भारती : नाट्यशास्त्र १९:७:८ ।

३. साहित्य दर्पण षष्ठ परिच्छेद का० ७१ ।

यति। नलचरिते नायकनायिकयोः पूर्वरागवर्णने तथा च नल हंस संवादे आरम्भस्यावस्था दृश्यते—

तस्याः समीपे तु नलं प्रशंशसुः कुतूहलात्।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः॥
तयोरदृष्टकामो भूच्छृण्वतो सततं गुणान्।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः॥[1]
सददर्श तदा हंसान् जातरूपपरिच्छदान्।
वने विचरतो तेषामेकं जग्राह पक्षिणम्॥
ततोऽन्तरिक्षगो वाचं व्याजहार तदानलम्।
न हन्तव्योऽस्मि ते राजन् करिष्यामीह ते प्रियम्॥
दमयन्ती सकाशे त्वां कथयिष्यामि नैषध।
यथा त्वदन्यं पुरुषं न सामंस्यति कर्हिचित्॥[2]

उपर्युक्तेन स्थलेन स्पष्टतता प्रतीयते यदस्मिन्नेव स्थाने नलदमयन्त्योः पूर्वानुरागजनितमौत्सुक्यं एवं च हंसमुखेन नलस्यान्तःकरणे जनितौत्सुक्यं फलसिद्धये गतित्वरं वहेते।

२. यत्न — प्रयत्नस्तु फलावाप्तौ व्यापारोऽति त्वरान्वितः।[3]

फलप्राप्तये सत्वरमुद्योगः प्रयत्नम्। नलचरितस्य समीक्षणेन ज्ञायते यद् दमयन्त्या नलान्वेषणाय यानि यत्नानि पुनः स्वयंवरादीनि समाचरितानि तानि सर्वाण्येव यत्नत्वेन स्वीकर्तव्यानि।

३. प्राप्त्याशा— उपायापायशंकाभ्यां प्राप्त्याशा प्राप्तिसम्भवः।[4]

फलसिद्धयर्थं यत्रोपायापाययोर्द्वन्द्वे प्रच्छन्नतया फलागमस्य क्षीणतराऽऽशा सम्भवति सा प्राप्त्याशेति कथ्यते। नलचरिते यत्र दमयन्ती स्व पितृ गृहमागत्य नलान्वेषणार्थं दूतान् गाथासन्देशेन सह प्रेषितवती तदा कालान्तरे पर्णाद नामकः एको द्विजः प्रतिनिवृत्यावोचत्—यत्तव गाथाया[5] उत्तरं ऋतुपर्णस्य गेहे

---

१. म० भा०, व० प०, अ० ५० श्लो० १५-२६।
२. वही, श्लो० १८-१९-२०।
३. साहित्य, दर्पण षष्ठ परिच्छेद, का० ७२।
४. वही, (उत्तरार्द्ध)
५. क्व नु त्वं कितवच्छित्वा वस्त्रार्द्धं प्रस्थितो मम।
उत्सृज्य विपिने सुक्तामनुरक्तां प्रियां प्रिय॥
म० भा० व० प० अ० ६७, श्लोक० ९

अयोध्यायां निवसता केनापि बाहुकेति नाम्ना पुरुषेण इत्थं प्रदत्तम्—

**वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।**
**आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥"[१]**

गाथायाः प्रत्युत्तरं श्रुत्वा दमयन्त्याः मनसि पत्युः पुनर्मिलनस्याशा जागर्ति । पाठकस्यापि मनः दोलायितं सत् तयो पुनर्मिलनं सम्भावयति, अतोऽत्रैव प्राप्त्याशानुसंधेया ।

**४. नियताप्ति— अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।[२]**

समस्तविघ्नापोहनपूर्वकं यत्र फल प्राप्तिः निश्चीयते तत्र नियताप्तिर्भवति । नलचरिते नियताप्तिस्तदाऽनुभूयते यदा ऋतुपर्णेन सह नलः बाहुकस्य छद्म रूपे पुनः विदर्भराजधान्यां कुण्डिन्यां समागच्छति । दमयन्ती स्वदूतीं केशिनीं तस्यान्तिकं रहः प्रेषयित्वा नलं च बहुशः सम्परीक्ष्य स्वान्तःकरणे बाहुकमेव नलं निश्चिनोति –

**दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।**
**अमन्यत् नलं प्राप्तं कर्मचेष्टाभिसूचितम् ।[३]**

**५. फलागमः— सावस्था फलयोगः स्याद्यः समग्रफलोदयः ।[४]**

यत्र समग्रफललाभ उपजायते तत्र फलागमः । नलचरिते फलागमो यथा--

**दमयन्त्यपि भर्तारमवाप्याप्यायिताभृशम् ।**
**अर्ध संजातसस्येव तोयं प्राप्यवसुन्धरा ॥[५]**

**आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।**
**वर्तयामास मुदितो देवराडिव नन्दने ॥[६]**

अत्र स्पष्टमेव ।

अत्रैको हि विषयोऽवधेयो यदिदं नलचरितं पूर्वनलचरितमुत्तरनलचरितमिति खण्डद्वयेन मत्वा परवर्तिनो महाकवयः व्यवहृतवन्तः परं चात्र खण्डद्वय-

---

१. म० भा०, व० प०, अ० ६८, श्लोक ८ ।
२. साहित्य दर्पण षष्ठ परिच्छेद का० ७३ (पूर्वार्द्ध) ।
३. म० भा०, व० प०, अ० ७३, श्लोक १८ ।
४. साहित्य दर्पण षष्ठ परिच्छेद का० ७३ (उत्तरार्द्ध) ।
५. म० भा०, व० प०, अ० ७५, श्लो० २६ ।
६. वही, अ० ७६, श्लो० ३ ।

मेवावस्थार्थप्रकृतिसन्ध्यादीनां विषयवस्तु स्वीकृत्य तन्नलचरितं परीक्षितं जातम्।

अर्थप्रकृतेरवस्थायाश्चानन्तरं सन्धिपंचकस्यापि विवेचनं कथावस्तुनि सम-पेक्ष्यते। विस्तरभियाऽत्र संक्षेपेणैव सन्धयो विव्रियन्ते। सन्धिपंचकं त्वभियुक्तै-रित्थं प्रतिपादितम्—

**मुखं प्रतिमुखं गर्भो विमर्श उपसंहृति।**
**इति पंचास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते।**[1]

यथा क्रमेण मुख-प्रतिमुख-गर्भ-विमर्श-उपसंहारादयः पंच सन्धयः भवन्ति।

### मुखसन्धि

**यत्र बीज समुत्पत्ति नानार्थरससम्भवा।**
**प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम्॥**[2]

मुखसन्धिः इतिवृत्तस्य तेनांशेन सह वर्तते येन नायकस्यारम्भावस्था सम्बद्धा भवति, यत्र च बीजरूपार्थप्रकृतेर्योजना भवति, तथा च विभिन्नानां प्रदर्श्यमाणानां रसानामभिव्यंजनमपि संसूच्यते।

नलचरितस्य प्रथमेऽध्याय एव मुखसन्धेरनुसन्धानं शक्यम्। यत्र बीजं आरम्भस्तथा च नानारसानां समुद्भेदो दृश्यते। उदाहरणतया—

**आसीद्राजा नलोनाम वीरसेन सुतो बली।**[3] (बीज)
**तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात्॥**
**नैषधस्य समीपे तु दमयन्तीं पुनः पुनः॥**[4]
**स ददर्श तदा हंसान् जातरूपपरिच्छदान्।**
**वने विचरतां तेषामेकं जग्राह पक्षिणम्॥**
**ततोऽन्तरिक्षगो वाचं व्याजहार तदा नलम्।**
**न हन्तव्योऽस्मि ते राजन् करिष्यामि हि ते प्रियम्॥**
**दमयन्ती सकाशे त्वां कथयिष्यामि नैषध।**
**यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित्॥**[5]

---

१. साहित्य दर्पण षष्ठ परिच्छेद का० ७५।

२. वही, का० ७६।

३. म० भा०, व० प०, अ० ५०, श्लो० १।

४. वही, श्लो० १५।

५. वही, श्लोक १८, १९ २०।

प्रथम सर्गे दमयन्त्याः जन्म वृत्तान्ते वात्सल्य रसस्य, स्वर्णहंस दर्शनेनाद्भुत रसस्य, नल हंस संवादे औत्सुक्यस्य च समावेशात् मुखसन्धिरनुष्ठीयते ।

## प्रतिमुख

**फल प्रधानोपायस्य मुखसन्धि निवेशिनः ।**
**लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ।**[1]

यत्र मुखसन्धौ समुत्क्षिप्तस्य बीजस्य तथाविधमुद्भेदं दृश्यते यत्र च लक्ष्यमलक्ष्यं चोभयथा प्रतीयेते तत् प्रतिमुखं भवति । नलचरिते नलदमयन्त्यो-र्विवाहावसरपरिसमाप्तौ यदा कलिना प्रतिज्ञा विहिता—यदहं तयोर्वियोगं कारयिष्यामि तदा तत्रैव प्रतिमुख सन्धिः आकल्प्यते, यतोहि बीजस्य पूर्वानु-रागरूपांकुरणोद्भवे सति परिणय समाप्तावेव कलिवाक्यं पुनः नायकनायिकयो-र्विच्छेदस्य हेतुतया संलक्ष्यते । येन सामाजिकः भाविघटनाचक्रस्य विषय असामंजस्यमेवानुभवति । घटना चक्रं अवरुद्धमिवाभाति, फलश्रुतिश्च संकटा-पन्नेव प्रतीयते । अतः लक्ष्यालक्ष्यतया प्रतीयमानेन बीजेनात्रैव प्रतिमुखस्य स्थापनं वरम्—

**ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।**
**संहर्तुं नोत्सहे कोपं नलेवत्स्यामि द्वापर ॥**
**भ्रंशयिष्यामि तं राज्यान्नभैम्यासहरंस्यसे ।**
**त्वमप्यक्षान् समाविश्य कर्तुं साहाय्यमर्हसि ॥**[2]

## गर्भ

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन ।**
**गर्भो तत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ॥**[3]

गर्भ सन्धौ क्रमशः मुखप्रतिमुखयोः स्फुटितं प्रधानोपायरूपं बीजं ह्रास विका-साभ्यां सह संस्फुटीभवति । नलचरिते कलेर्वाक्यानन्तरं द्यूतक्रीडा, वनेवासः, दमयन्ती परित्यागः, दमयन्त्याः अजगर-व्याघ-सार्थ बाहेम्य भयं स्वप्राणरक्षणं च चेदिदेशे तस्याः गमनं, वनएव नल कर्कोटकयोर्मिलनं, कर्कोटकेन दंशनं, तेनवस्त्र प्रदानं, नलस्यायोध्यागमनं, तत्रर्तुपर्णस्य गेहे तस्य वासः इत्येतत्सर्वं वृत्तान्तं गर्भसन्धौ समावेष्टुं शक्यते । नायकनायिकयोः विप्रयोगानन्तरं सम्प्राप्तविपत्ती

---

१. सा० द० ष० परि० का० ७७ ।

२. म० भा० व० प० अ० ५५, श्लो० १२-१३ ।

३. साहित्य दर्पण षष्ठ परिच्छेद का० ७८ ।

नामवकलनेन ह्रासस्य, वनेदमयन्ती द्वारा इतस्ततः नलस्यान्वेषणावसरे समान्वेषणस्य, विकासस्य वा दर्शनात्, तथा च कथमपि द्वयोरपितयोर्भिन्नदेशयो भिन्नराजसदनयोश्च आश्रयत्वात् पुनस्तयोरम्युदयस्य पुर्नमिलस्य चात्यन्त क्षीणाशायाः संचारत्वाच्चात्रैव गर्भस्य समावेशो कार्यः ।

**विमर्श**

**यत्र मुख्यफलोपायः उद्भिन्नो गर्भतोऽधिकः ।**
**शापाद्यैः सान्तरायश्च सविमर्श इति स्मृतः ॥[1]**

गर्भे समुद्भिन्नं बीजं यत्राधिकतयोद्भिन्नं प्रतीयते तथा च बाह्य परिस्थिति जन्य (शापादि) विपत्तिभिः सह संघर्षश्चित्रितो दृश्यते तत्र विमर्शाख्या सन्धिः सम्भवति ।

नलचरिते दमयन्ती पितृगृहमागत्य नलस्यान्वेषणे प्रतीयते । गाथां श्रावयित्वा यदा सा ब्राह्मणान् प्रेषितवती तदा कालान्तरे पर्णादनामकेनैकेन विप्रेण गाथायाः उत्तरं समासादितम् । सा ऋतुपर्णस्यनगरे पुनः स्वयंवरस्य वार्तां प्रैषयत् । ऋतुपर्णः बाहुकेति छद्म नाम्ना वसता नलेन सह कुण्डिन्यां समागच्छत् । तत्र दमयन्ती पौनः पुन्येन केशिनीं सम्प्रेष्य बाहुकस्य बहुशः परीक्षणं करोति । बाहुक एव नलः इति मत्वाऽपि तस्य कृष्ण वर्णतां प्रति शंकाकुला जायते । अत्रैव विमर्शस्य स्थितिः परिज्ञेया । यद्यप्यत्र गर्भस्य बीजमधिकतया संस्फुटं प्रतिभाति परं नलस्य दंशजन्य वैरूप्यत्वात् नायिकायाः मनः शंकते फलतः सान्तरायत्वमप्युपकल्प्यते अतोऽस्मिन्नेवस्थले विमर्शानुसन्धानमुचितम् ।

**निर्वहण**

**बीजवन्तौ मुखाद्यर्था विप्रकीर्णा यथायथम् ।**
**एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥[2]**

निर्वहणं तु यत्र इतस्ततो विकीर्णाः बीजादिरूपाः इतिवृत्तांशाः प्रधान फलस्य निष्पादकत्वे सूपसंह्रियन्ते तत्रैव कल्पनीयम् । नलचरिते तु नायिकायाः दमयन्त्याः शीलं यत्र वायुना प्रमाणितं तस्मादेव स्थलान्निर्वहणस्य समारम्भः—

**तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।**
**देव दुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥**
**तदद्भुततमं दृष्टवा नलोराजाथ भारत ।**
**दमयन्त्यां विशंकां तां व्यपाकर्षदरिंदमः ॥**

---

१. साहित्य दर्पण, षष्ठ परिच्छेद का० ७९ ।

२. वही, का० ८० ।

ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजानं ततो लेभे वपुः स्वकम् ॥
स्वरूपिणं तु भर्तारं दृष्टवा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिंग्य पुण्यश्लोकमनिन्दिता ॥
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत् ॥[1]

प्रकारेणानेन नल चरिते यथास्थान एवार्थप्रकृत्यवस्था सन्धिपंचकानां प्रयोगो दृश्यते । अत्रैको हि विषयोऽवधेयो यदिदं नलचरितं पूर्वनलचरितमुत्तरनलचरितमिति खण्डद्वयेन मत्वा परवर्तिनो महाकवयः व्यष्टिशः व्यवहृतवन्तः अत्र तु सम्पूर्णं नलचरितमधिकृत्यैव सन्ध्यादयः समायोजिताः । विशेषेणास्मिन्नेवाध्यायस्योपसंहरणेऽस्य विवेचनं दृष्टव्यम् ।

प्रबन्ध नाटचकाव्ये वेतिवृत्तं वस्तुनेतारसस्तेषामिति निकषे परीक्षितुं शक्यते । अतएव वस्तुनोऽनन्तर नेतॄणां रसानां च काव्ये साधु विनियोगः कथं कीदृशो वाऽग्रे प्रतिपाद्यते ।

## नेता

चरितनायके नेतृगुणविशिष्टत्वं परमावश्यकम् । सहजरूपेण संस्क्रियमाणाः गुणा एव नायकमौदात्यकोटिं प्रापयन्ति ततश्च नायकः आलम्वनत्वेनाश्रयत्वेन च रसपरिपाके मूलं कारणं भवति, रसाविष्करणं रसपरिपाकं वा काव्यस्य जीवनं कथ्यतेऽतोऽपेक्ष्यमाणान् गुणान् विना नेता नेतृपदभाक् न भवति । "तमालम्ब्य रसोद्गमात्"[2] इत्यस्यायमेव तात्पर्यार्थः । रसोद्गमके नायकेऽपेक्षितान् गुणानाह—

त्यागी कृती कुलीनः सुश्रीको, रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्य शीलवान्नेता ॥[3]

उदात्तानां नायकानामेते गुणाः सिद्धान्त शास्त्रे परिगणनीयाः । अस्माकं चरितनायके नले तु उपर्युक्ता समस्ता एव गुणा चरमसीमानमुपगताः दृश्यन्ते । त्यागे असामान्यां क्षमतामाधत्ते अयं नलः स्वधर्मे स्वीकृतदेवदौत्ये रतः पूर्वानुरक्तस्य नैजस्य प्रणयस्थाने देवानां प्रणयं प्रार्थयन्—

---

१. म० भा०, व० प०, अ० ७५, श्लो० १५, १६, १७, १८, १९ ।

२. साहित्य दर्पण, तृतीय परिच्छेद, का० २९ ।

३. वही, का० ३० ।

नलं मां विद्धिकल्याणि देवदूतमिहागतम् ।
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोग्निर्वरुणो यमः ।।
तेषामन्यतमं देवं पति वरय शोभने ।।[1]

त्यागस्यापूर्वमादर्शं स्थापयति । कृतिनः स्वरूपे तु नलः परोपकार्थमात्मानमपि संकटे निपात्य दावानलात्कर्कोटकं नागराजमरक्षत् कुलीनत्वं तु वीरसेनसुत इति पदेनैवाभिव्यज्यते । सुश्रीकतायां क सन्देहः यः निषधेश्वरत्वं भजते तस्य कृते वैभवस्य न्यूनत्वमकल्पनीयम् रूपयौवनोत्साहीति गुण विषये भारतोक्तिः—

नलश्चनरशार्दूलो रूपेणाप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ।।[2]

दृष्टव्या । दाक्ष्ये, लोकानुरंजने, तेजसि, वैदग्ध्ये, शीले च नलोऽद्वितीयः प्रतिभाति "पुण्यश्लोक" इति पदेन व्यवाह्रमाणो नलः यदा भगवतो जनार्दनस्य कोटिं समधितिष्ठति तदा तस्य गुणशीलादिक विषये क्व सन्देह लवः ?

नायकानां चत्वारो भवन्ति भेदाः—

धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ।।[3]

नलस्त्वत्र धीरोदात्तः । धीरोदात्तस्य नायकस्य सर्वाण्यपिलक्षणानि महाभागस्य नलस्य जीवनेऽन्तर्हितानि प्राप्यन्ते—

अविकत्थनः क्षमावानतिगम्भीरो महासत्वः ।
स्थेयान्निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः ।।[4]

आत्मश्लाधातु रंचमात्रमपिनासीत्, एतादृशः क्षमावानभूत् यद् द्यूत व्याजेन सर्वस्वापहारिणं पुष्करमपि पुनः पराजित्य तस्य राज्यं तस्मै एव प्रत्यर्पयामास । गाम्भीर्यंतु समुद्र इवावर्तन्नलस्य प्राणप्रियायाः भार्यायाः विप्रयोगः, सन्ततेश्च विरहः, दारिद्रयस्य पराकाष्ठा, तथा च शारीरिकं कुरूपत्वमपि न तं विचालयितुं शशाक । धीरोदात्तोऽपि रामः विप्रयोग इतस्ततः परिभ्रमन् वृक्षैर्लताभिः हरिणादिभिश्च सह तादात्म्यं संस्थापयन् सीतायाः परिज्ञानार्थं वार्तां चकार येन तस्यास्थैर्यं प्रतीयते—

---

१. म० भा०, व० प०, अ० ५२, श्लो० २१-२२ ।
२. म० भा०, व० प०, अ० ५०, श्लो० १४ ।
३. साहित्य दर्पण, तृतीय परिच्छेद का० ३१ ।
४. वही, का० ३२ ।

अस्ति कच्चित्त्वया दृष्टा सा कदम्बप्रिया प्रिया ।
कदम्ब यदि जानीषे शंस सीतां शुभाननाम् ॥
अशोक शोकापनुद शोकोपहतचेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियासंदर्शनेनमाम् ।
अथवामृगशावाक्षीं मृगजानासि मैथिलीम् ॥
मृग विप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ।
हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुनः ।
इत्येवं विलपन् रामः परिधावन् वनाद्वनम् ॥[1]

परं नलः गाम्भीर्यत्वादेकमपिवारं स्फुटं न विललाप, एकान्त एव कथमपि शोकावेगं हृदये निरुद्ध्य स्वपरिजनान् संस्मृत्यैकामिमां गाथां गायतिस्म—

क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥[2]

शक्ति सम्पन्नस्तु नल आसीदेव । चतुर्वर्षानन्तरं पुनरागत्य स पुष्करं द्यूतार्थं द्वन्द्व युद्धार्थं वा आजुहाव तस्य मानसी शारीरिकी वा शक्तिः सर्वत्र दृष्टुं शक्यते । स्थैर्यं दृढ़व्रततायां चापि नलः असाधारणो वर्णितः ।

नायकस्य ये चत्वारो भेदाः दर्शितास्तेषामुपभेदा अपि चत्वार एव भवन्तिये क्रमशः दक्षिण-धृष्ट-अनुकूल-शठ भेदेन परिगण्यन्ते । नलोऽनुकूलनायकत्वमाव हति—"अनुकूल एक निरतः"[3] । एक पत्नीको वर्तते नलः अतएव सोऽनुकूल-धीरोदात्तत्वेन स्वीक्रियते । नायकानां भेदोपभेद वर्णनान्तरमेतेषां भेदोपभेदानामपि भवन्ति तिस्रः श्रेण्यः—दिव्यः, दिव्यादिव्यः, अदिव्यश्च । दिव्यनायकस्तु देवगुणैः सम्बद्धो भवति यथा कुमारसंभवे भगवान् शिवः, दिव्यादिव्य नायकः दैविकान् मर्त्यानपि च गुणान् समनुतिष्ठति । महाराजो नलः अस्यामेव श्रेण्यां कल्प्यते । यतः तस्य जीवने दैविकाः मर्त्याश्च गुणाः प्रतिष्ठिताः संलक्ष्यन्ते ।

उपर्युक्तेन विवेचनेन नलः धीरोदात्तः, अनुकूलः, दिव्यादिव्यश्च नायकोऽस्ति । चरितनायकमालम्ब्य काव्ये नितरां रसाविष्कर्तुं शक्यते । काव्यशास्त्रानुसारेण नेतुः नलस्य संक्षेपेण परिचयं विधाय संप्रति नायिका दमयन्ती लक्षणशास्त्रीये निकषे परीक्षणीयाऽस्ति यतः नायकनायिकयोर्द्वयोः काव्ये आश्रयालम्बनत्वाभ्यां समानं महत्वं भवति ।

---

१. वाल्मीकि रामायण, अरण्य का०, सर्ग ६०, श्लोक १२, १७, २३, ३५ ।
२. म० भा०, व० प०, ६४।१० ।
३. सा० द० तृ० परि० का० ३७ प्रथम चरण ।

नायिकायाः त्रयो भेदा भवन्ति—स्वीया-परकीया-सामान्या चेति। तत्र स्वीया –

विनयार्जवादि युक्ता गृह कर्म तत्परा पतिव्रता स्वीयेति।[1]

लक्षणेन लक्ष्यते। प्रस्तुते नलचरिते दमयन्ती एतैः सर्वैः गुणैः सम्पन्ना सती स्वीयात्वेनैव स्व चरित्रवैशद्यमाविष्करोति। अस्या आर्जवो गुणोऽत्र दृष्टुं शक्यते, अर्द्धांगिनी सत्यपि पति द्यूतदुर्व्यसनात् विमुखीकर्तु कान्ता सम्मितेनार्जवेन गुणेनैव न तु सामर्षतयोद्यतते—

**ततः सा वाष्प कलया वाचा दुःखेन कर्शिता।**
**उवाच नैषधं भैमी शोकोपहतचेतना॥**
**राजन् पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः।**
**मंत्रिभिः सहितः सर्वे राजभक्ति पुरस्कृतः॥**
**तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत।**[2]

एवमेव गृहकर्मण्यपि कुशलव्यापारवती प्रत्युत्पन्नमतित्वशालिनी सा प्रतिपदं परिलक्ष्यते। वनगमन समये पुत्रं पुत्रीं च विचिन्तयन्ती तौ कुण्डिनपुरीं स्व पितृगृहे प्रेषयति यतः स्वयं तु पत्युः साहचर्यं निर्वोढुं शक्या किन्तु सुकुमारौ बालकौ वन्यं कष्टं न सोढुं शक्येते अतः द्वयो बालकयोः सुरक्षणोपाये दत्तावधानतया तस्या गृहकर्म तत्परात्वमपि संसूच्यते—दमयन्ती सारथिं प्रार्थितवती—

**शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः।**
**न स मे शुद्धयते भावः कदाचित विनशेदपि॥**
**नलस्य दयितानश्वान् योजयित्वा महाबलान्।**
**इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि॥**[3]

दमयन्त्याः पातिव्रत्यं तु काव्यस्यादितोऽन्तं यावदिदव्य भावेन परिव्याप्तं वर्तते काव्यस्य सम्पूर्ण स्वारस्यं नलस्य धर्मव्रतत्वे दमयन्त्याश्च पातिव्रत्य एव प्रतिष्ठितं वर्तते। पातिव्रत्य प्रभावादेव सर्वत्र काव्यग्रन्थिः समुद्घटते। अस्या पातिव्रत्यं सर्वत्र व्यापिना वायुनाऽपि सत्याप्यते—

**एवमुक्तस्तथा वायुरन्तरिक्षावभाषत।**
**नैषा कृतवती पापं नल सत्यं ब्रवीमिते॥**

---

१. सा० द०, तृतीय परि० का० ५७।

२. म० भा० व० प०, अ० ५६, श्लोक १४-१५।

३. वही, अ० ५७ श्लोक १६-१७।

राजञ्छीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन् परिवत्सरान् ॥
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
बह्वोकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ॥
उपपन्ना त्वया भैमी त्वं च भैम्या महीयते ।
नात्र शंकात्वया कार्या संगच्छ सह भार्यया ।
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपातह ।
देव दुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥
तदद्भुत मयं दृष्ट्वा नलो राजा च भारत,
दमयन्त्यां विशंकां तामुपाकर्षदरिन्दमः ॥[1]

अनेन प्रकारेण लक्षणशास्त्ररीत्या दमयन्त्याः स्वरूपौदात्यं निकषायितं जातम् । अस्याः अन्यद्वैशिष्ट्यं सम्बन्धिन्यध्याये महाभारते विपुलतया परिद्रष्टुं शक्यते । अत्र तु केवलं प्रसङ्गानुरोधात् प्रकीर्णतयोदाहरणपूर्वकं नायिकायाः स्वीयात्वमाविष्कृतम् ।

## रस परिपाकः

वस्तुविकास चरित्रविकासयोरौदात्यमौचित्यं च संरक्षितुं प्रवृत्तानां तत्त्व घटकानां मध्ये काव्यस्यात्मस्थानीयं तत्त्वं रसो भवति । स तु स्वतंत्रतया, ध्वनि-गुणालङ्कारतया चौपनिषदिकं वाक्यं "रसौ वै सः" इतीदं सत्यापयति । यश्चा-मन्दाखण्डानन्दत्वं प्रति क्षणं विस्फूर्जयति स्फीतयति च । रस एव याथार्थ्यस्य स्तरीयं वैविध्यंमपाकृत्य काव्ये स्वारस्यमेक रसत्वं च समुद्भावयति । अस्मादेव कारणात्काव्यशरीरे स आत्मत्वेन समाम्नायते, प्राणत्वेन च व्यपदिश्यते । "वाक्यं रसात्मकं काव्यमि" त्युक्त्वा रस एव काव्यस्यात्माऽस्तीति प्रतिपादितम् । स रसः विभावानुभाव संचारिभावतया वर्ण्यमुपेत्य सहृदयसामाजिकस्यान्तः प्रदेशे सत्वोद्रेक पुरस्सरं चर्वितः सन्ननुभूयते । रजस्तमोऽभिभूय सत्वं मन एव विग-लितवैद्यान्तरत्वेन ब्रह्मानन्द सहोदरमिव काव्यरसानन्दमनुभवति ।

सत्वोद्रेकादखण्डस्व प्रकाशानन्द चिन्मयः ।
वैद्यान्तरस्पर्श शून्यो ब्रह्मास्वाद सहोदरः ॥
लोकोत्तर चमत्कार प्राणः कैश्चित् प्रमातृभिः ।
स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः ॥[2]

१. म० भा० व० प० अ० ७५ श्लोक ११-१६ ।
२. साहित्य दर्पण द्वितीय परि० का० २-३ ।

महाकाव्ये "श्रृंगारवीर शान्तानामेकोंऽङ्गीरस इष्यत" इति दिशा तेषामेकमेवाङ्गीरूपेणान्यांश्चांगरूपेण स्वीकृत्य कवयः रस परिपाके प्रवृत्ताः भवन्ति, परं त्रयाणामेतेषामतिरिक्तोऽप्येको रसः वर्तते यं काव्ये अङ्गीरूपेण संधाय तस्य पूर्णं परिपाकं कर्तुं शक्यते । स चास्ति करुणो रसः । सकल रस मौलिभूतत्वेनायं रसः न केवलं महर्षिणादि कविना बाल्मीकिना भवभूतिना चाकल्पितः प्रत्युत सहृदयैः भावकैरपि समनुभूयते । आदि काव्यस्य रामायणस्य तु अयमेव मौलिकः उत्सः । भवभूतिरपि उत्तर रामचरिते नाटकेऽमुमेव रसं अन्येषां रसानां मूलं कारणं स्वीकरोति—

**एको रसः करुण एव निमित्तभेदात् ।**
**भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।।**
**आवर्त बुद्बुदतरंगमयान् विकारा-**
**नम्भो यथा सलिलमेव तु तत्समग्रम् ।।**[1]

आदि कवि बाल्मीकिस्तु काव्यस्य परम्परामेव "शौकः श्लोकत्वमागतः" इतिदिशा प्रवर्तयति । सत्यपि शोके स्थायिभावे करुण रसः काव्ये दुःखं नजनयत्यपित्वानन्दानुभूतिमेव । करुण रसेनोत्प्रेरिता सामाजिकस्य मूल चेतना प्राणिमात्रमेव दयार्द्रत्वेन परिलक्ष्य सर्वेष्वेव निजतायां बोधं करोति भूमानन्दं चानुभवति । अतः काव्ये करुणरसस्यानुसन्धानमंगीरसत्वेन विधातव्यमुपजीव्य काव्यस्यमूलोत्सत्वात् भवभूतेः महता संरम्मेणोद्घोषणत्वात्सहृदयानुभवविषयत्वाच्च ।

**अश्रुपातावतस्तद्वद् द्रुतत्वाच्चेतसो मताः ।**[2]

नलचरिते करुण एव रसोंऽगीरूपतया स्वीकर्तुं शक्यते । यथा मूलं रसं करुणं स्वीकृतवतः भवभूतेः रामः पुटपाकप्रतीकाशैन शोकेनान्तर्दन्दह्यते श्रुति स्मृति सम्बलित धर्मपरायणत्वाल्लोकानुरंजनार्थं कृतप्रतिज्ञत्वाच्च तथैव नलोऽपि "स्वधर्मे निधनं श्रेयस्त्वादेकाकी एव दुःख समुच्चयेनान्तर्दह्यते यथा चानघा सीता रामेण परित्यक्ता सती अन्तर्वेदनामनुभवती घुणाक्षरन्यायेन बाल्मीकेराश्रमं प्राप्नुवन्ती पुत्रद्वयं पालयन्ती कालं यापयामास तथैव दमयन्ती अपि नलेन

---

१. उत्तर रामचरित भवभूति ।

२. साहित्य दर्पण द्वितीय परिच्छेद का० ८ ।

परित्यक्ता सती अन्तर्व्यथामनुभवन्ती आरण्यकं कष्टंसहन्ती पितृगृहमाश्रयन्ती बालकौ परिरक्षन्ती यथा तथा श्वसन्ती च नलन्वेषणे व्यापृतवती। अनेन प्रकारेण रामनलयोः सीतादमयन्त्योः तद्संबद्धयोः कथा वस्तुनोश्च चतुरस्र दिशा समसादृश्यत्वातुल्यमूल्यत्वाच्चात्रापि नलचरिते एको रस करुण एवेत्यस्य डिण्डिमो घोषः कर्तुं शक्यते किन्तु प्रथमं तावन्महाकाव्यस्य लक्षणे करुणो रसः अङ्गीरूपेण न स्वीकृतः अपरस्तु अत्र काव्ये करुण विप्रलम्भः अर्थात् श्रृंगारस्यैवापरो भेदः प्रवासहेतुकः शापहेतुकश्च विप्रलम्भः श्रृंगारः अङ्गीरसरूपेण परिपक्वो दृश्यते। प्रवासस्याभिप्रायं विवृण्वता केनचिदुक्तम्—

**पूर्वं सङ्गतयोर्यूनोर्भवेद् देशान्तरादिभिः।**
**चरणं व्यवधानं यत् स प्रवास इतीरितः॥**
**तज्जन्यो विप्रलम्भोऽपि प्रवासत्वेन सम्मतः।**[1]

उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञान द्वारा विप्रलम्भ प्रयोजकाविति नाव्याप्तिः प्रवास शब्देन ज्ञान लक्षणाद्वा। करुण श्रृंगारस्यापि विप्रलम्भे एवान्तर्भावः। करुण विप्रलम्भं लक्षयता विश्वनाथेन साहित्यदर्पणे एवमभाणि—

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।**
**विमनायते यदेकस्तदा भवेत्करुण विप्रलम्भः॥**[2]

ततश्च करुण करुणविप्रलम्भयो भेदोऽप्यकारि—

**शोकस्थायितया भिन्नो विप्रलम्भादयं रसः।**
**विप्रलम्भे रतिं स्थायी पुनः सम्भोगहेतुकः॥**[3]

अतः शोक स्थायिनि करुणे नष्टेष्टस्य प्राप्त्याशा न भवति विप्रलम्भे च पुनः प्राप्त्याशा जागर्ति। इत्यनयोर्भेदः। करुण करुणविप्रलम्भयोर्भेदं कुर्वता भरतेनापीत्थं प्रतिपादितम्—

करुणस्तु शापक्लेश विनिपतितेष्ट जन विभव नाश वध समुत्थो निरपेक्ष-भावः। औत्सुक्य चिन्ता समुत्थः सापेक्षभावो विप्रलम्भकृतः। एवमन्यः करुणो-ऽन्यश्च विप्रलम्भ इति।[4]

---

१. साहित्य दर्पण द्वितीय परिच्छेद का० ८।

२. वही।

३. वही पेज २५५।

४. नाट्य शास्त्र भरत ६।५१।

प्रस्तुते नलचरितेऽपि पूर्वमेकत्र सङ्गता नायक नायिका नलदमयन्ती परस्परं वियुज्य विभिन्नं देशान्तरं गता। नायिका दमयन्ती नलान्वेषणे समुद्यता सती प्राप्त्यांशां न जहाति नलोऽपि दमयन्ती नष्टेति न विश्वसिति। काव्यस्य फल श्रुतौ द्वयोः संयोगः संघटते, प्रवासातिरिक्तः मध्ये मध्ये शाप हेतुकोऽपि विप्रलम्भः संदृश्यत एव। एवंविधयाऽत्र करुण विप्रलम्भ एव परिपक्वः सन् काव्यरसिकै रास्वाद्यमानो भवति। रस परिपाक दिशायां द्वित्राणि स्थलानि समुद्धृत्य तत्रौ पपद्यमानानां विभावानुभाव व्यभिचारिभावानामभिव्यंजकत्वं यथा—

**पूर्णचन्द्रनिभां श्यामां चारूवृत्त पयोधराम्।**
**कुर्वन्ती प्रभया देवीं सर्वा वितिमिरा दिशः॥**
**विध्वस्त पर्णकमलां वित्रासित विहङ्गमाम्।**
**हस्तिहस्त परामृष्टां व्याकुलाभिव पद्मिनीम्॥**
**चन्द्रलेखाभिव नवां व्योम्नि नीलाभ्र संवृत्ताम्॥**[1]

अत्रालम्बनरूपो नलः आश्रयरूपा च दमयन्ती वर्ण्यते श्लथता कृशता विवर्णतादयोऽनुभावाः दैन्य चिन्ता त्रासादयश्च व्यभिचारिभावा सन्तीत्येतेषां समुदयात् पूर्ण करुणविप्रलम्भस्य परिपाकोऽभिजायते। कस्यचिद्केस्य द्वयोर्वाऽभावेऽन्य तमस्याक्षेप बलादेवान्तिकत्वेन रसोऽनुभूयते। दमयन्ती विषयकानुभावानामेव सौन्दर्यातिशय्यवलेन स्थलेऽस्मिन् रसः परिपच्यते तथा चोपमानोपमेय योजनया ऽभिव्यक्तैः ध्वनिभिः नायिकायाः विप्रलम्भजन्यामन्तर्वेदनामनुभूय तया सह तादात्म्यं स्थापयन् को हि रसिको न रोदिति। अस्य तुल्यमूल्यतामादधानः कालिदासस्यैकः श्लोकः तुलनीयो भवेच्चेतर्हि सहसा दमयन्त्या वास्तविको **रूपोऽनुभूयमानो भवति—**

**जातां मन्ये शिशिरमथितां पद्मिनीं वान्य रूपाम्।**[2]

अत्र यक्षिणी आधिदैविकप्रकोपात् मथिता कमलिनीव प्रतिभाति। आधि दैविके शिशिरे प्रतिवत्सरत्वादेकः क्रमोलक्ष्यते दिव्यादिव्य प्रकृतित्वापि संलक्ष्यते किन्त्वत्र दमयन्ती हस्ति हस्त परामृष्टा व्याकुलः कमलिनीवाभाति। हस्ति हस्त पदेनैवाधि भौतिकत्वं सूच्यते ततो क्रमतया निष्प्रतिद्वन्द्वतया स्वच्छन्दतया दुष्प्रधर्षतया चौन्मथनत्वं ततः व्याकुलत्वाच्च नायिकायाः अदिव्यत्वमपि प्रतीयते

१. मं० भा० व० प० अ० ६५ श्लोक १०, १४, १६।

२. उत्तर मेघदूत — कालिदास।

किन्तु यक्षिण्याः अपेक्षायां दमयन्त्याः विप्रलम्भजन्योऽनुभावोऽतिशयो मार्मिक इत्यप्रस्तुत विधानेन व्यज्यते । एवमेव—

**प्राची मूले तनुमिव कलामात्रशेषां हिमांशोः ।**

यक्षिणी हिमांशोः कलामात्रशेषां तनुमिवतनुं धारयतीत्यनेन केवलं तस्याः कार्श्यातिशयतया सौन्दर्यमेव परिलक्ष्यते न तु शापाद्यवबोधः परमत्र पूर्णचन्द्र-निभात्वेन चन्द्रमसः कलंकतया दमयन्त्याः विरह सौन्दर्ये शापाद्यवबोधोऽपि परि-स्फुरत्येव । विध्वस्त पर्ण कमलात्वेन तु न केवलं दमयन्त्याः चित्रमात्रं रूपा-यितं भवति प्रत्युन्नलस्याप्रवासान्मिलनं यावत् सम्पूर्ण विरह वैधुर्य रूप सौन्दर्य-मुन्मीलितं भवति । विध्वस्त पर्ण कमलाम् इत्यत्रापि विध्वस्त पदेन परितो विलुण्ठनं सर्वस्वापहरणं पर्णपदेन च प्रियधनजनादयः संसूच्यन्ते, फलितोऽर्थः यथेदानीं कार्यकारणवशादापाततो वा कमलं विध्वस्तपर्णं सत् भविष्यति काले पुनः पर्णादि सहितं सत् सुशोभते तथैवेदानी कलिद्वापरयोरदृष्टयोजनया शापाच्च विध्वस्त संयोग सुख समृद्धि रूपपर्णा सती दमयन्ती पुनः कालान्तरे प्रिय संयो-गादिरूपां सुखसमृद्धिमनुभविष्यतीति द्योत्यते । रामायणेऽपि बाल्मीकिनैतादृश्ये-वोपमानसंयोजना कृता या विरह विधुरायाः सीतायाः विप्रयोगे सहैतुक निःसारणत्वं पुनश्चः प्रियसंगमत्वं प्रतीयते दमन्यत्यपेक्षया तस्याः विरह दुःखं किंचित् क्षीणं ध्वन्यते । रामायणे यथा—

**उत्कृष्ट पर्ण कमलां, वित्रासित विहंगमाम् ।**
**हस्तिहस्त परामृष्टां, आकुलां पद्मिनीमिव ।।**[1]

संयोगिनो जीवनस्यानाकल्पितत्वात् यक्षिण्याः मार्मिको विरहो द्रुततरेण काव्यरसिकं न भावयति, सीतायाः अपि विरहः आरण्यकं धर्म्यं निर्वहन्त्याः तस्याः संयोगिनः सुखस्य केवलं वने वर्णनत्वाद्राजप्रासादे चावर्णनत्वाद् प्रोद्वेगेन चित्तद्रुतिं नोत्पादयति, किन्तु दमयन्त्याः विरह पूर्व संयोगिनो जीवनस्य नल-चरिते प्रचुरतया वर्णनत्वात् महतोद्रेकेण स्वप्रभावान्वितौ विगलितवेद्यान्तरत्वं जनयति चित्तं द्रवयति च अतएव द्वयोरपेक्षया दमयन्त्याः **करुणविप्रलम्भः** उत्कृष्टो बहुदिशीयो च ज्ञायते । एवमेव नलचरिते सर्वत्राथतोऽन्तं यावत् शृंगा-रस्य तत्रापि करुण विप्रलम्भ शृंगारस्य सान्द्र प्रवाहो यथा नदीप्रवाहः अंग-भूतेः समस्तैः क्षुद्रनदादिकैः विविधविधयातिपूरितः उच्चावचं स्थलं समीकुर्बन्

१. बाल्मीकि रामायण-सुन्दर काण्ड सर्ग १६, श्लोक १६ ।

शरदतौं निर्मलस्वान्ततया बिम्वग्राहित्वमुपगच्छन् शनैः-शनैः महासमुद्रेण सह तादात्म्यं स्थापयति तथैवायमप्यन्यैः संयोग शृंगार करुण रौद्र वीर भयानकाद्भुत शान्तैः अंगरसैः विविध काव्यीयविधयोद्वेलितः स्वप्रभावान्वितावेकोच्चावचं काव्यघटकतत्वं समीकुर्वन् प्रवन्धौचित्ये सान्द्रसंवेदनशीले स्थले विगलित वेद्यान्तरत्वात् विशुद्धसत्वसम्पन्नो लौकिकविभावादिमत्वादलौकिकत्वं भजमानश्च अखण्डामन्दानन्दपरिच्छिन्नेन चिद्रूपिणा परब्रह्मणा सह तादात्म्यं संस्थापयन् रसो वै सः इति श्रुति वचनं साधु संसाधयति।

अन्ये चांगभूता रसाः कुत्र केन प्रकारेणोपादेया इति प्रकीर्णतयोपपाद्यन्ते। नायकनायिकयोः प्रवासात्पूर्वे राजसौख्य संभारेषून्मुक्तया विधीयमानः संयोग शृंगारः तद्विधं च परिपक्वं मिथः प्रेम तथा च तद्गत परस्परामोद प्रमोद हास परिहास विलासादयौ विसम्वादिनि काले स्मर्यमाणाः सन्तः सहस्रमुखैः अंगिनं करुण विप्रलम्भं रसं दीपयन्तः पूर्णकामाः प्रतीयन्ते, यथाऽत्र—

**सा समीक्ष्य ततो देवान् पुण्य श्लोकं च भारत।**
**नैषधं वरयामास भैमी धर्मेण भारत॥**
**विलज्जमाना वस्त्रान्ते जग्राहायतलोचना।**
**स्कन्धदेशे सृजच्चास्य स्रजं परम शोभनाम्॥**[1]

\+ \+ \+ ×

**पुनश्च रमणीयेषु वनेसूपवनेषु च।**
**दमयन्त्या सह नलो विजहारामरोपमः॥**[2]

करुण विप्रलम्भस्तु केवलं पुनर्मिलन प्रत्याशात्वेन फलतो भिन्नस्थायिभावत्वेनाथ च करुण रसाद्भिन्नोऽङ्गीत्वेनावकल्पितोऽन्यथाऽत्रोपस्थापितसमग्रसामग्रीकत्वात् करुण एव विजृम्भते। इतस्तावन्नलो राजा ततस्तावन्महिषी दमयन्ती परस्परं वियुज्य हृत्कम्पिना दुरन्तशोकप्रवाहेणान्तरुन्मथिता रोदिति रोदयति च। अपिग्रावा रोदित्यपि दलति वज्रस्य हृदयमिति समनुभावयति। अयं करुणो रसः काव्यस्य मध्ये मध्ये नियताप्तिं यावत् नायकनायिकयो रंगतयैव करुणं विप्रलम्भं अधिकांशतोऽनुभावादिसाम्यात् सुबहूपकरोति। यथापक्रान्ते नले शोक विह्वला दमयन्ती विलपति—

---

१. म० भा०, व० प०, अ० ५४, श्लोक २५।

२. वही, श्लोक ३७।

हा नाथ हा महाराज हा स्वामिन् किं जहासि माम् ।
हा हतास्मि विनष्टाऽस्मि भीताऽस्मि विजने वने ।।[1]

\+ + + +

दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ।।[2]

\+ + + ×

ततः सा तीव्र शोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ।।
मुहुरुत्पतते बाला मुहुः पतति विह्‌वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ।।[3]

सर्वतो भावेन विद्यमानाः रसत्वेनास्वाद्यमानाः चतुर्विधाः वीराः दान धर्म दयाऽदयोऽप्येकतो नलचरिते विप्रलम्भ हेतु भूतं शापं प्रच्यावयितुमशक्ताः सन्तः तं शापं च दुरन्तं ज्ञापयन्तोंऽगिनं करुण विप्रलम्भमपि दुरन्त पर्यवसायिनं सिद्धयन्ति तथा चापरतो दान धर्मादीनां सुवहुशो वृत्त सन्धानात् स्थायित्वेन भाव्यमानः उत्साहः आलम्बनमाश्रयंचोज्जीवयन् पौनः पुन्येन विजृम्भितां घना-त्धनतरां विरहजन्यां रतिं निर्वाहयितुं समर्थयति । अन्ते चायमेव रसः तमे-वांगिनं रसं प्रति सर्मपितः सन्नवाप्तकामो भवति । उदाहरणानि—

अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन ।
सर्वं तत्तव विस्रब्धं कुरु प्रणयमीश्वर ।।[4]

\+ + + +

उत्सृज्य दमयन्तीं तु नलो राजा विशाम्पते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ।।
तत्र शुश्राव मध्येऽग्नौ शब्दं भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ।।

१. म० भा०, व० प०, अ० ६०, श्लोक ३ ।
२. वही, श्लोक ८ ।
३. वही, अ० ६०, श्लोक १२-१३ ।
४. वही, अ० ५३, श्लोक २ ।

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डली कृतम् ॥[1]

एवमेवाद्भुतोऽपि रसः काव्ये सुबहुशोऽभिव्यज्यमानः काव्यरसं विस्फूर्जयति, पात्राणां प्रभविष्णुगुण सम्पन्नत्वात् क्वचिन्मनुष्यवाचा हंसः क्वचिद्दिव्यवस्त्रप्रदादेन धृत मनुजरूपोऽजगरः क्वचिच्छापात् व्याधप्रज्वालनेन दमयन्ती क्वचिन्नलरूपधारणेन देवाः क्वचिच्च सूर्येन्धनैः शाकपाकादिनिर्माणेन नलः सर्वान्विस्मापयन् एकतो वाह्य दृष्ट्या सम्वादिन्यां बिसम्बादिन्यां च दिशायां कथाक्रमं संघटयन् विघटयन्निव प्रतिभाति, अपरतो रस पारिपाक दिशायां रसोऽयमद्भुतोऽन्तः सलिलायाः सरस्वत्याः प्रवाह इवाभ्यन्तरतो विरह वेदनां विच्छुरयन् स्वतोऽपि परिपच्यमानः मूलरसं परिपुष्णाति—

सा तानद्भुतरूपान वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगणांस्त्वरमाणोपचक्रमे ॥[2]

\+ + + +

दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥[3]

\+ + + +

प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन् ॥
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोऽयं देवो नु यक्षो नु गन्धर्वो नु भविष्यति ॥[4]

\+ + + +

एवमुक्त्वा स नागेन्द्रो बभूवांगुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायादुद्देशं दाव वर्जितम् ॥
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत ॥

---

१. म० भा०, व० प०, अ० ६३ श्लोक १, २, ३ ।
२. वही, अ० ५०, श्लोक २३ ।
३. वही, अ० ५०, श्लोक २५ ।
४. वही, अ० ५२, श्लोक १५-१६ ।

पदानि गणयन् गच्छ स्वानि नैषध कानिचित् ।
तत्र तेऽहं महाराज श्रेयो धास्यामि यत्परम् ॥
ततः संख्यातुमारब्धमदशत् दशमे पदे ।
तस्य दष्टस्य तद् रूपं क्षिप्रमन्तरधीयत ॥
स दृष्ट्वा विस्मितस्थावात्मानं विकृतं नलः ।
स्वरूप धारिणं नागं ददर्श च महीपतिः ॥[1]

+ + + +

प्रेषितं तत्र राज्ञा च मांसं सुबहु पाशवम् ।
तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः ॥
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत्तदा ।
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ॥
तृणमुष्टिं समादाय आविध्यैनं समादधत् ।
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ॥[2]

एवमन्येऽप्यूहनीयाः ।

काव्यानामुच्चैः निकषत्वेन वस्तुनेतारसस्तेषां भेदक इति शास्त्रकारैः स्वीकृतः । एवं विधया नलचरिते यद्यपिवस्तु संघटन दृष्ट्यार्थप्रकृतयोऽवस्थाः सन्धयश्च पूर्णरूपेण संयोजिताः न दृश्यन्ते, यथा तथैवेत आकलपनीयाः फलविषयकाऽनुसन्धान दुरुहत्वादाख्यानप्रधानत्वाच्च, तथाप्यन्यानि काव्यघटकोपादानानि पूर्णतयोपपादितानि समवाप्यन्ते । नायको नलः नायिका च दमयन्ती स्वकीयावदात चरित्र वैशद्येन पुण्यश्लोक वैभवेन च विश्वविश्रुता जाता । अनयोश्चरित्रं ध्रुवमेवास्मिन् कलियुगे स्पृहणीयं सल्लोकान्नोदयति समुपदिशति च । नायकनायिकयोः सत्व गुणेन परिबृद्धानि शक्ति शील सौन्दर्याण्यथ च प्रेम त्याग तपांसि एव समधिकृत्य रसाः स्व स्व सत्वोद्रेकेण परिपच्यन्ते । यद्यपि नायके नले पुनर्मिलनस्याशासंचारादर्शनात् करुणोऽपि रसः प्रधानतयेवास्वाद्यते तथापि नलचरिते वियुक्तनायकनायिकयोः पुनर्मिलन प्रसंगात् करुण विप्रलम्भ एवाङ्गीत्वेन स्वीकरणीयः । वस्तुतोऽत्र राजानुगत विवाह प्रवृत्तभृत्यवत् द्वावेव रसौ तुल्यबलौ प्रतीयेते । अन्येऽङ्गभूताः रसाः स्थलीयवस्तुसौन्दर्यमनुभावयन्तोऽङ्गीरसस्य परिपाकं पूर्णकामाः प्रभवन्ति, फलतो हि नल चरितं काव्यसीमनि कालजयित्वमुपयाति ।

१. म० भा०, व० प० अ०, ६३, श्लोक ८, ९; १०, ११, १२ ।
२. वही, अ० ७५, श्लोक १०, ११, १२ ।

चतुर्थोऽध्यायः

# जैन वाङ्मये नलचरितम्

महाभारत कालानन्तरं शनैः शनैः सनातन वैदिक धर्मस्य ह्रासः तथा च तस्य स्थाने जैन धर्मस्य प्रचारः प्रसारश्च समभूत् । तदुत्तरवर्तिनिकाले च बौद्ध धर्मस्यापि भारतेऽस्मिन्देशे प्रचुर प्रचारः समजायत । वैदिक वाङ्मयस्यार्थ गतं क्लिष्टत्वमथ च कलौमनुष्याणां क्षीणायुष्यत्वं च परिलक्ष्य महर्षिः व्यासः आदि कविः वाल्मीकिश्च जनमनोमोदाय तेभ्यश्च सांस्कृतिकीं परम्परां दातुं लौकिक संस्कृत वाङ्मयस्याविर्भावं चक्रे । साऽपि लौकिकी संस्कृत भाषा कालान्तर एव जन सामान्ये प्रयोजनीयाऽभूत् । सामान्य जन मध्ये तद्भव भाषा रूपेण प्राकृतस्य, पालेः, अपभ्रंशस्य च प्रचलनं समवर्तत । संस्कृत वाङ्मयस्य नाट्य काव्यानामनुशीलनेन सुस्पष्टं भाति यत्तात्कालिके समाजे सभ्यानां सुशिष्टानां च पुरुषाणां, यथा—नायक अमात्य, पुरोहितादीनां भाषा संस्कृत भाषैवासीदथ च सामान्य जनानां विदूषक चेट विट भृत्यादीनां प्राकृत भाषासीत् ।

वैदिक वाङ्मये कर्मकाण्डस्य प्राधान्यं, तत्र च हिंसा बहुलयज्ञानां समावेशत्वमथ च यज्ञादिकर्मणामत्यधिक व्ययसाध्यत्वं च संलक्ष्य जनसामान्ये धर्मं प्रत्यनास्थायाः भावना स्फुरिता जाता । जैन सम्प्रदाय प्रवर्त्तकेन, तीर्थं करेण, भगवता महावीरेण वैदिकीं परम्परां विहायैकं नूतनं मतं संस्थापितम् । तस्यासीत् सिद्धान्तवाक्यं—'प्राणिमात्रस्य कृते कारुण्यम् ।" अहिंसा परमो धर्मः इत्येतस्य डिण्डिमं घोषं कुर्वन् सः स्वसाम्प्रदायिकानां सिद्धान्तानां लोकमानसे सन्निवेशनार्थं लोकभाषामेव शिश्रिये । लोक भाषामाध्यमेन प्रवृत्ते सत्युपदेशे शीघ्र एव जैन मतं व्यापकं संजातम् । तथ्यमिदं सर्वस्वीकृतं यत्किमपि साहित्यं लोकमानसे संश्लिष्टं सदेव जीवितु जीवयितुं च शक्नोति, नान्यथा । अतः परवर्तिनः सर्वेऽपि कवितल्लजाः प्राकृतं पालिं चैव स्वीकृत्य स्व स्व ग्रन्थान् प्रणिनिन्युः । मत विस्तारं जैनानामामासील्लक्ष्यमत एव ते सर्व एव जैन मनी-

षिणः भारतीय समाजे जन जीवनेन सुसंश्लिष्टां धार्मिकीमास्थां, तया च सम्बद्धं लोक कथा साहित्यं पौराणिकाख्यानं च स्वदृष्ट्या समालोचयन्। नैकेषु पुराणेतिहासयोरुपनिबद्धेषु चरितेषूपाख्यानेषु च स्वमतानुरूपान् संपोषण सहायकान् सन्दर्भानवलोक्य तान्युपाख्यानानि चरितानि च स्व स्व काव्येषु वर्ण्यतया स्वीकृतवन्तः।

अस्मिन्ननुहरण क्रमे पौराणिकेष्वैतिहासिकेषु चेतिवृत्तेषु यत्र यत्र ते निजसिद्धान्तवैपरीत्यं दृष्टवन्तः तत्र तत्र ते स्वंमतानुरूपमेव परिवर्तनमपि कृतवन्तः। कतिपयानि परिवर्तनानि कवि कल्पना सौघायितान्यन्यान्यपि परिवर्तनानि दरीदृश्यन्ते। अनेनैव प्रकारेण पौराणिकान्याख्यानानि जैन वाङ्मयस्यालंकरणे सम्प्रयुक्तानि। लोक भाषा समाश्रयणेन बौद्धानामथ च जैनानां प्रचुरः प्रचारोऽभूत्। द्वयोरप्येतयोः सम्प्रदाययोः सुप्रभूतं विशालकायं वाङ्मयं संलक्ष्यैवेदं तर्कयितुं शक्यते यत्कस्मिन्नपि समये एतयोरासीत् पुष्कलः प्रचारः। पिटक ग्रन्थानां जातक ग्रन्थानां च विनेयोपदेश शैली, तथा च नैतिकः सन्दर्भः वस्तुत एव श्लाघ्यः।

प्रस्तुतेऽध्याये जैन वाङ्मयस्य केषु केषु ग्रन्थेषु नलचरितस्य समुल्लेखनमभूदथ च कवि समुदायेन कुत्र कुत्र कीदृक् च परिवर्तनं परिवर्द्धनं च वस्तुविन्यासे समुद्भावितमिति विविच्यते।

"सर्वेषां प्राणिनां कृते कारुण्य" मिति सिद्धान्तं प्रख्यापितवतां जैनाचार्य्याणां नलचरितं प्रति चित्ताकर्षणं स्वाभाविकमेव यतो ह्यत्र सम्पूर्ण एव कथा वस्तुनि करुण विप्रलम्भ एवांगीरसत्वेन सम्प्रवाहितो भवति। अत्रत्यं कारुण्यं विप्रलम्भश्च चंचलायाः लक्ष्म्याः नश्वरत्वं, प्रारब्धस्य विकटत्वं, जीवित संघर्षाणां च स्वाभाविकं चित्रणं स्पष्टतयानुवर्णयति। अतएव वैदिक कालादेव बहुचर्चितामिमां नलकथां संस्कृते, पौराणिके, ऐतिहासिके च वाङ्मये समादृतां निरीक्ष्य तथा च सर्व जन मनोहारिणीं चावलोक्य जैन कवयः पौनः पुन्येन वाणी विलासवैदग्ध्यं संदर्शयितुकामाः स्वीयेषु काव्य प्रबन्धेषु समुदाहृतवन्तः। शतपथे ब्राह्मणे "नलौ नैषधः" इति पदरूपेण समुत्क्षिप्तं बीजं[१] भारते नवांकुर प्ररोह पूर्वकं बाल वृक्षं संजातं, तत्पश्चादेव जैन

---

१. "The word Naishidha accures in the Shatpatha Brahmin (ii-2.4-1-2) as an adjective of Nada (Nala) a King of Nishidha Country in south, Nala Naishidha seems to be a

कविभिः सम्पोषितमिदं वृक्षं स्वशाखिशाखप्रभेदेन समुन्मीलितम् ।

नलचरितस्येतिवृत्तं घटनाक्रम सन्दर्भ साम्येन यथावदेव जैन वाङ्मये समुपवर्णितम् क्रमशः गुणविजयगणि कृते नेमिनाथ चरिते नलचरितम्[1], देवविजय गणि रचिते पाण्डव चरिते नलचरितम्[2], हेम चन्द्राचार्य विरचितं नलचरितम्[3] धर्मसेनगणि कृतं नलचरितम्[4], रामचन्द्रसूरि रचितं नलविलास नाटकम्[5] माणिक्य चन्द्र सूरि विरचितं कुबेर पुराणाख्यं नलायनमहाकाव्यम्[6], देव प्रभसूरि कृतं नलोपाख्यानम्[7], जैन सागर सूरि प्रणीता देवदन्ती कथा[8], सोम

---

letter replacement of the original "Nada Naishidha". (A. N. Jani-A Critical Addition of Naishidhiya Charita, Chapter II, para I Note 2, page 13)

१. नलचरितम् (नैमिनाथचरित में) गद्य रचना ले० गुण विजयगणि सम्पादक—पं० अमृतलाल (ए० एम० एण्ड कं०)

२. नलचरितम्—(पाण्डवचरित में) देव विजय गणि कृत । सम्पा० यशोविजय जैन ग्रंथ माला एवम् आतमानन्द सभा अम्बाला ।

३, नलचरितम् (त्रिषष्टि शालक पुराण चरित में( VIII-3 हेम कन्द्राचार्य कृत सम्पा० जैन धर्म प्रकाश सभा भावनगर ।

४. नलचरितम्—(प्राकृत में) गद्य काव्य वासुदेव हिन्दी का मध्यम खण्ड—धर्मसेन गणि कृत । सं—मुनिराज श्री हंस विजय वरोडा, कनकवतीलम्बक, पी० पी०—१२५-१४९ गुजराती अनुचाद डा० बी० जे० सन्देशरा, जैन आतमानन्द सभा भावनगर (गुजरात) ।

५. नलविलास नाटकम्—सप्त अंकीय नाटक रामचन्द्र सूरि (१२वीं शताब्दी) सम्पा० जी० के० श्री गोन्डेकर एवम् एल० बी० गान्धी गायकवाड ओरियण्टल संस्कृत इन्स्टीट्यूट XXIx 1926.

६. नलायन—(कुबेर पुराण) १०० सर्ग एवं १० स्कन्ध में वर्णित विशालकाय महाकाव्य, मानिक्य चन्द्र सूरिकृत (१२वीं शताब्दी) जैसलमेर ४९ पीटर्सन II 357

७. नलोपाख्यानम्—(पाण्डवचरित में) देव प्रभसूरि कृत सं० निर्णय सागर प्रेस बोम्बे

प्रभाचार्य रचितं देवदन्ती चरितम्[९], जैन ग्रन्थावल्याम् संकलितौ दमयन्ती प्रबन्धः[१०]; विनयचन्द्र सूरि वर्णितं देवदन्ती चरितम्[११], शुभशीलगणिकृता दमयन्ती कथा[१२], जैन नैषधीय चरितम्[१३], कथाकोशः[१४], कथावलिः[१५], कनकवती[१६] तथा च सोमलितकसूरि विरचितं देवदन्ती कथेत्यादि[१७] जैन ग्रन्थेषु नलचरितं विस्तरेणोल्लिखितम् । एतेषामतिरिक्तं चरितमिदं, ऋषिवर्द्धन (V. S. 1512), मुनिमेघराज (V. S. 1664), नयसुन्दर (V. S. 1665), समय सुन्दर (V. S. 1673), ज्ञान सागरा (V. S, 1720), दिभिः जैन कविभिः स्व स्व काव्येषु प्राणायि ।

कथा प्रसंगस्य विषये जैन नल साहित्य एकं विशिष्टं तथ्यं दृश्यतेऽनुभूयते च यत् संस्कृत वाङ्मये अर्वाचीनाः श्रीहर्ष त्रिविक्रमादयः नलकथायाः प्रमुखाः प्रणेतारः स्वीयेषु काव्य प्रबन्धेषु पूर्व नलचरितं नायक नायिकयोर्विवाहावसरपर्यन्तमेवावर्णयन्, किन्तु जैने साहित्ये प्रायशः सर्वैरेव सम्पूर्ण नलचरितस्येतिवृत्तमुपनिबद्धम् । अधिकांशेतु पूर्णं, शेषे चोत्तर नलचरितमेव वर्ण्यत्वेन सम्प्रयुक्तम् । अन्यच्च नलदमयन्त्योर्विवाहानन्तरं यदितिवृत्तं दृश्यते तदैव

---

८. देवदन्ती कथा – जैन सागर सूरिकृत, कर्पूर प्रकारातिक सम्पा०—जैन धर्म प्रकाश सभा भाव नगर

९. देवदन्ती चरितम्—सोम प्रभाचार्य (कुमार पाल प्रति बोध) सम्पा०—गा० ओ० सं० सी० XIV p. p. 47-76

१०. दमयन्ती प्रबन्धक जैन ग्रन्थावली

११. देवदन्ती चरितम्—विनय चन्द्र सूरि कृत (मल्लिनाथ महाकाव्य) सम्पा० यशोविजय जैन ग्रंथ माला एवं आत्मानन्द सभा अम्बाला

१२. दमयन्ती कथा—शुभशील गणि विरचित, गुजराती अनुवाद) जैन विद्याशाला, अहमदाबाद

१३. जैन नैषधीय चरितम्—A Critical Adition of N. C. by A. N. Jain (Appendix 3 page ४-13)

१४. कथा कोश

१५. कथावली वही

१६. कनकवली वही

१७. देवदन्ती कथा—सोमतिलक सूरिकृत, टीका शीलोपदेश मालावृत्ति सम्पा० पं० हीरा लाल जामनगर

घटना वैविध्येन करुणार्द्रतायाः दृष्टिकोणेन चास्वादनीयं वर्णनीयं चास्ति । अतएव जैन वाङ्मये अस्यैवेतिवृत्तांशस्याधिकमुपयोगः संलक्ष्यते ।

जैनागमे समुपवर्णितानां नलचरितसम्बन्धिग्रन्थानां मध्ये धर्मसेन गणि विरचितं नलचरितमथ च राम चन्द्र सूरि प्रणीतं नल विलास नाटकं तथा च माणिक्य चन्द्र सूरि रचितं नलायन महाकाव्यं विशेषत उल्लेखनीयम् । त्रिष्वेव ग्रन्थेषूपनिबद्धं नलचरितं स्वीयया स्वाभाविकया गतिशीलतया सहैव कवि-कौशलजन्यं वैशिष्ट्यं सम्यग्रूपेण प्रदर्शयितुं समर्थम् । भारतीयेन नलकथा प्रसंगेन साम्य दृष्ट्या तु न किंचिदपि नूतनं घटना चक्रमत्रोपवर्णितम् । परं "निरंकुशाः कवयः" इत्युक्त्यनुसारं यत्र तत्र ग्रन्थ प्रणेतृभिः परिवर्तनं विधायेति-वृते चमत्कारत्वं प्रादर्शि । तमिल भाषायामुल्लिखिते "चिलप्पति कारम्" नामके ग्रन्थे जैन साहित्योपवर्णितस्य नलचरितस्य प्रकरणप्रसंग निर्देश पुरःसरं वर्णनं प्राप्यते[1] । जैनागमे वर्णितस्य नलचरितस्यानुशीलनेनेदमपि ज्ञातुं शक्यते यदिदं जैन कथा साहित्यं महाभारतयापेक्षया अर्वाचीनत्वं भजत इति[2] ।

नलविलास नाटकं नलचरितं च प्रकाशितं ग्रन्थद्वयम् । परं शत सर्गात्मकं नलायन महाकाव्यमधुनापि ग्रन्थाकारतया न प्रकाशितं जातम् । अस्य विषये या काचित् सूचना प्राप्ता सा शोध प्रबन्धे अष्टमेऽध्याये द्रष्टव्या । अतोऽत्र प्रसंगप्राप्ततया जैनागमे वर्णितस्य नलचरितस्य मौलिकेन भारतीयेन नलचरितेन सह यद्यत्र च वैभिन्यं वर्तते तत्सर्वं वर्ण्यते—

१. महाभारते नलस्य पितृनाम "वीरसेन" इत्याख्यतम्—

**"निषधेषु महीपालो वीरसेन इति स्म ह ।**
**तस्य पुत्रो भवन्नाम्ना नलो धर्मार्थ दर्शिवान् ।।"**[3]

---

१. "The Jaina Tradition which shows notable deviations in some aspect of the story seems to have been much earlier then the Sanskritic sources "Dr. N. P. Unni-Nala Episode in Sanskritic Literature"—page 15 Last para.

२. The Tamil Epic "Chiilappatikaram" (Circa 2nd Century A. D.) Ouoted from—Nala Episode in Sanskritic Lit. N. P, Unni p-16.

३. म० भा० व० प० अ० ४६ श्लो० ३६

वीरसेनः महाभारते क्वचिदपि 'निषध' नाम्ना नोपसम्बुद्धः। निषध देशस्याधिपत्येनैव नलो नैषध इति कथ्यते स्म न तु निषधस्य पुत्रत्वेन। जैन वाङ्मये नलस्य पितुर्नाम वीरसेनेत्यनुल्लिख्य तत्स्थाने "निषध" इति व्यपदिष्टम्। नल विलासे रामचन्द्र सूरिणापि तस्य नाम निषधेति पदैनेवोपवर्णितम्।[1]

२. राम चन्द्र सूरिः धर्मसेन गणिश्च द्वावपि नलस्य भ्रातुः नाम स्व स्व काव्ययोः "राज कुमार कुवेर" इति वर्णितवन्तौ अन्येष्वपि सर्वेषु काव्येषु प्रायश इदमेव नाम समुद्दिष्टम्।[2]

परं भारतानुसारं नलस्य भ्रातुर्नाम "पुष्कर" इत्यासीत्—

**"आसाद्य तु नलं वीरं पुष्करः परवीरहा।**
**दीव्यावेत्यब्रवीद् भ्राता वृषेणेति मुहुर्मुहुः॥"[3]**

एतदतिरिक्त मन्यत्रापि—

**'ततः पुष्करमासाद्य वीरसेनसुतो नलः।**
**उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम्॥"[4]**

३. संस्कृत वाङ्मये नलस्य राजधानी निषिधापुरीति समाख्याता। निषधदेशस्य राजाऽसीन्नलः। वैदिक कालादेव निश्चप्रचतया नलस्य निषधदेशस्य च नामनी सह भावेनैव समुपवर्णिते जाते। नात्र किमपि सन्देह कणं यन्निषधा नलस्य राजधानी नासीत्। भारते नैक बारं निषधस्य नामोल्लेखनं प्राप्यते। दमयन्त्याः सकाशं गतः हंसः सन्देशवाहकत्वं निर्वहन् तस्याः समक्षे नलस्य वर्णनमित्थं प्रस्तौति—

**"दमयन्ति नलोनाम निषधेषु महीपतिः।**
**अश्विनोः सदृशो रूपे न समास्तस्यमानुषाः॥"[5]**

अपरत्रापि स्वयंवरार्थे प्रस्थिताः देवाः मार्गे नलं दृष्ट्वाऽवोचन्—

**"भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान्।**
**अस्माकं कुरु साहाय्यं दूतोभव नरोत्तम॥"[6]**

---

१. नलः एपीसोड इन संस्कृत लिट्रेचर—एन० पी० उन्नी पेज १६
२. नलः एपीसोड इन संस्कृत लिट्रेचर—एन० पी० उन्नी पेज १६
३. म० भा० व० प० अ० ५६ श्लोक ७
४. म० भा० व० प० अ० ७७ श्लोक ४
५. म० भा० व० प० अ० ५० श्लो० २७
६. म० भा० व० प० अ० ५१ श्लो० २९

परं जैन कवयः निषधां नलस्य क्रीडास्थलीं राजभूमिं च न स्वीकृत्य तत्स्थाने "कौशल देश" मन्यन्ते[१]। अस्य निगमनस्य संकल्पना जैन वाङ्मये कुतः समायाता तदुद्गमस्यानुसन्धानं न क्वापि सम्प्राप्तम्।

४. नायिकायाः नामोल्लेखेनविषयेऽपि वर्तते मतवैपरीत्यं जैनागमे भारते च। जैन साहित्ये तस्याः नाम "देवदन्ती" तथा च 'दमयन्ती' इत्याख्यया सम्बोधितम्।[२] दमयन्ती तु प्राकृतेऽपभ्रंशत्वात् दमयन्तीत्यस्येव रूपान्तरणमस्ति किन्तु "देवदन्तीति" पदेन सह दमयन्तीति नाम्नः सादृश्यं कथमपि न संगच्छते। अत्र कथं संगतिराविष्करणीयेति क्लिष्ट कल्पनाप्रसंगः। जैन वाङ्मये नायिका प्रधानत्वेन व्यपदिष्टानां काव्यानां परिकरे "देवदन्ती चरितम्" एवं च "देवदन्ती कथा" इत्यभिधानौ क्रमशः द्वौ द्वौ ग्रन्थौ प्राप्येते। महाभारते तु नायिकायाः दमयन्तीति नाम सुविख्यातमेव—

**"दमयन्ती तु रूपेण तेजसा यशसा श्रिया।**
**सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा॥"[३]**

अन्यत्रापि—

**"दमयन्ती ततो रंगं प्रविवेश शुभानना।**
**मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च॥"[४]**

५. भारतीये नलचरिते कथावस्तुनः संश्लिष्टतायाः प्रवाहमयतायाश्च रक्षणार्थं यथा सम्भवं महर्षिः व्यासदेव, आवश्यकानामेव पात्राणां समावेशोऽकरोत्। अतिरिक्तानां पात्राणां वर्णनेन शैथिल्यमवश्यम्भावि। दमयन्त्याः परिचयं प्रस्तुवन् महर्षिः व्यासः दमयन्त्याः पितुः "भीमस्य" परिचयं पाठकानां पुरतः प्रस्तौति। पितृमूलक परम्पराया परिपालनानुरूपमेव नायिकायाः पितृनाम तु तेनोल्लेखितं परं नासीत्काप्याबश्यकता तस्याः मातुर्नामोल्लेखनस्यातः तस्या नाम नोट्टंकितंमप्रासंगिकत्वात्।

जैनाचार्य्यैः धर्मसेन गणि प्रमुखैः तत्र दमयन्त्याः मातुर्नामापि समुद्घाटितं वर्तते। तैः तस्याः नामनिर्वचनं 'पुष्पदन्तीति" कृतम्। नल विलासस्य

---

१. नल एपी० पेज १६
२. नल एपी० पेज १६
३. म० भा० व० प० अ० ५० श्लो० १०
४. म० भा० अ० प० अ० ५४ श्लो० ८

प्रणेता रामचन्द्र सूरि महाभागः तस्यानाम "पुष्पवतीति" प्रत्याख्यापयत्[1]। यदभूत्, तदभूत्, जैन सम्प्रदायेनात्रैकमतिरिक्तं नामोट्टंकितम्।

६. नलचरिते नलस्य दैवदौत्यवृत्तान्तं नायकस्य चरिते औदात्यं, सत्य प्रतिज्ञत्वमथ च धर्म शीलत्वं नितरां सम्पादयति। नलस्य सर्वोत्कृष्टमुदाहरणमिदम्। त्रिविक्रम भट्ट श्री हर्षादि महाकवयः अस्मादेव कारणात् नलचरितं नल दमयन्त्योर्विवाह पर्यन्तमेव वर्णयित्वा नायकस्योत्कर्षं च सम्पाद्यैव स्वलेखनीं चरितार्थां मेनिरे। भारतानुसारं दमयन्ती स्वयंवरस्य वार्तां पर्वतनारदौ स्वर्गे लोके नीतवन्तौ—

**"एतस्मिन्नेव काले तु पुराणावृषि सत्तमौ।**
**अटमानौ महात्मानाविन्द्रलोकमितो गतौ॥**
**नारदः पर्वतश्चैव महात्मानौ महाव्रतौ।**
**देवराजस्य भवनं विविशाते सुपूजितौ॥"[2]**

प्रसंगादस्मादारभ्य नारद देवसंवादं, स्वयंवरे देवानां शुभागमनं, मार्गे नल देव मिलनं, नलदेव संवादं, नलद्वारा देवदौत्य स्वीकरणम्, नलस्य दमयन्त्याः हर्म्येऽदृश्य रूपेण प्रवेशनं, नलदमयन्त्यो वार्तां, ततः नलस्य प्रत्यावर्तगम्, नल द्वारा देवाय संसूचनं यत्दमयन्ती भवतां वरणं न स्वीचक्रे सा तु मामेव वरयिष्यतीति सर्व वृत्तान्तं—

**"त्वं चैवहि नरश्रेष्ठः देवाश्चाग्नि पुरोगमाः।**
**आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः॥**
**ततोऽहं लोक पालानां सन्निधौ त्वां नरेश्वर।**
**वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति॥"[3]**

देवानश्रावयत्। नलस्य सत्यवादितामवलोक्य प्रहर्षिताः देवाः ततः परं स्वयंवरे समाजग्मुः। तत्र नलस्यैव रूपे चत्वार एव इन्द्राग्नि वरुण यमाः सन्निविष्टाः अभूवन्। इत्येतत्सर्वं वृत्तं वर्णितं भारते। पंचनली वर्णनं तु स्वोपचितसामर्थ्येनार्वाचीनैः कविवर्य्यैः विलक्षणकल्पनापूर्वकमुपवर्णितं समादृतं च।

---

१. नल एपी० एन० पी० उन्नि पेज १६
२. म० भा० व० प० अ० ५१ श्लो० ११-१२
३. म० भा० व० प० अ० ५३, श्लो० १०-११

परं कतिपय जैन कवयः स्वकाव्येषूपर्युक्तं कथांशं न संघटितवन्तः[१]। किमर्थमितिवृत्तमिदं तैः परित्यक्तमिति विषये ऊह्यते यत् सम्भवतः अत्र वैदिकानामिन्द्राग्निवरुण यमादि देवानामुल्लेखो वर्तते, जैनमतं बहुदेववादस्य परिकल्पनां सगुणेश्वराराधनं च न स्वीकरोति। नास्तिकदर्शनान्तर्गतमेव जैनानां परिगणनम्। वैदिकमतवादेन सह विरोधात् जैन कवयः देव वर्णनसम्बन्धि वृत्तमिदं स्वकाव्ये न प्रायुंजन्।

७. मनोहरमृदुकल्पना प्रचुरेषु कविचित्रेषु हंसस्य समुपवर्णनं प्रायशः सर्वैरेव कविभिः कृतम्। हंसस्तु कवीनां प्रियतमोविहंगः। कालिदासस्य यक्षोऽपि सन्देश प्रेषण कर्मणि मेघं नियोज्य तस्य साहचर्यार्थे हंसान् निर्दिशति—

**"मन्दं मन्दं नुदति पवनश्चानुकूलो यथात्वम्।**
**वामश्चायं नदतिमधुरो चातकस्ते सगन्धः॥**
**गर्भाधान क्षणपरिचयान्नूनमाबद्धमालाः।**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः॥"[२]**

प्रेम पूरितै वर्णनैः सह हंसः सर्वत्र वर्णितः। वस्तुतस्तु मरालस्यैतस्य श्वेतवर्णं तस्य सत्वगुण प्रधानतायाः, चंचु प्रदेशस्य लालिमाऽनुरक्त हृदयस्य तथा च तस्यरुद्वाक् वाग्वैदग्ध्यस्य, परिचायिका भवति। तस्य आर्जवादिगुणं प्रियायाः पार्श्वे सन्देश प्रेषणार्थमौचित्यं साधयति। अत्र महाभारतीयो हंसस्तु आदिकवेः वाल्मीकेः स्वर्ण मृग[3] इवाद्भुत एवास्ति। सोऽपि स्वर्णच्छदैरावृतः-

---

१. नल एपी० पृष्ठ १६

२. कालिदास—मेघदूत (पूर्व मेघ)

३. सरावणवचः श्रुत्वा मारीचो राक्षसस्तदा।
मृगो भूत्वाश्रम द्वारि रामस्य विचचार ह॥
स तु रूपं समास्थाय महद्दभुत दर्शनम्।
मणि प्रबर श्रृंगाग्रः सितासितमुखाकृतिः॥
रक्त पद्मोत्पलमुख इन्द्र नीलोत्पल श्रवाः।
किंचिदभ्युन्नतग्रीव इन्द्रनीलनिभोदरः॥
मधूक निभि पार्श्वंश्च कंज किंजल्क संन्निभः।
वैदूर्य संकाशखुरस्तनुजंघः सुसंहतः॥
इन्द्रायुघ सवर्णेन पुच्छेनौर्ध्वं विराजितः।
मनोहर स्निग्ध वर्णो रत्नैर्नाना विधैर्वृतः॥
क्षणेन राक्षसो जातो मृगः परम शोभनः।
(बाल्मीकि रामायण, अरण्य काण्ड, सर्ग ४२, श्लोक १४-१९)

**"स ददर्श तदा हंसान् जातरूप परिच्छदान् ।**
**वने विचरतां तेषामेकं जग्राह पक्षिणम् ।।"[1]**

अत्रत्येवर्णने हंसस्यनाम क्वापि नापतितम् । हंसएव नलस्योपकरणार्यं दमयन्त्याः सकाशे गतवानसीदिति ख्यापितम् ।

परं नलविलास नाटके रामचन्द्र सूरिः हंसं सन्देशवाहकं न स्वीकृत्य तस्य स्थाने नलस्यैकं मित्रं समायोजयति । यस्य नाम 'कलहंसक' इत्यासीत् ।[2] कलहंसक शब्दो हंस वाचीति पुरुष विशेषस्य विशेषणत्वेनास्य प्रयोगात् स्पष्टमिदं भाति यन्महाभारतीय नलचरितेन सहात्र वैभिन्न्यमस्ति ।

८. नलविलासस्य प्रणेता सुन्दरतरमेकं परिवर्तनं नाट्यगुणानुरूपं नलचरितस्येतिवृत्तेऽनैषीत् यत् नलदमयन्त्योर्विप्रलम्भे कलिं हेतुतया नोपवर्ण्य तस्य स्थाने एकमन्यं राजानमेव स्वीचकार । अस्यनाम 'चित्रसेन' आसीत् । कलचुर्रिवंशोद्भवोऽयम् । चेदिदेशे चास्याधिपत्यमासीत्[3] ।

महाभारतेतु नायक नायिकयोर्विवाहनन्तरं त्वरितया गत्या समागच्छन्तौ कलि द्वापरौ दृष्ट्वा इन्द्रादयोदेवास्तौ समाचष्टुः-वृत्त स्वयंवर इति । दमयन्ती च सर्वान् विहाय नलं वृतवतीति । दुष्टः कलिः क्रुद्धतया प्रतिज्ञातवान् यदहं तयोर्वियोगं कारयिष्यामि । अपकार्येऽस्मिन् स द्वापरस्य साहाय्यं स्वीकरोति —

**"ततो गतेषु देवेषु कलिर्द्वापरेमब्रवीत् ।**
**संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥**
**भ्रंशयिष्यामितं राज्यान्न भैम्या सह रंस्यते ।**
**त्वमप्यक्षान् समाविश्य कर्तुं साहाय्यमर्हसि ॥"[4]**

द्वापरः अक्षेषूपविष्टो जातः । अन्ततः द्यूतव्याजेन नलदमयन्त्यो र्भावी विप्रयोगः प्रारभत् ।

प्रसंगेऽस्मिन् जैनवाङ्मयस्य कल्पनाऽतीव प्रभावोत्पादिका । चेदिराजो चित्रसेनः नायक नायिकयोः वियोगं संसाधयति । अस्मिन् खलु कार्ये स एकस्य कापालिकस्य साहाय्यं गृहणाति ।[5] अत्र कापालिकस्य कल्पनमत्यन्तोद्वेगजनक-

१. म० भा० व० प० अ० ५० श्लोक २८
२. नल एपी० पृष्ठ १६
३. नल एपी० पृष्ठ १६
४. म० भा० व० प० अ० ५५ श्लोक १२-१३
५. नल एपी० पृष्ठ १६

त्वमुत्तेजकत्वं च साधयति। खलत्ववर्णने भवभूतिरपि कापालिकस्य प्रयोगमकरोत् कुशलतया।[१] नल विलासस्य कापालिकोऽयं महाभारतीय नलचरिते समुपवर्णितस्य कलेर्मित्रस्य द्वापरस्य स्थाने संगृहीतः।

६. नलस्य पुत्रस्य 'इन्द्रसेन', तथा च पुत्र्याः 'इन्द्रसेना' इतिनामासीत्। यथा चौक्तं महाभारते—

**"जनयामास च ततो दमयन्त्यां महामनाः।**
**इन्द्रसेन सुतं चापि इन्द्रसेनां च कन्यकाम्॥"[२]**

यदा दमयन्त्या पुना रचितेन स्वयंवर व्याजेन ऋतुपर्णेन सह बाहुकस्य रूपे आच्छन्नो नलः विदर्भेषु समागच्छत्तदा दमयन्ती बाहुकस्याभिज्ञानार्थं तस्य बहुशः परीक्षणं स्वदूत्याः केशिन्याः सहयोगेन चकार। परीक्षणक्रमेऽस्मिन् सा केशिन्या सह स्वदारकौ बाहुकस्य समीपे प्रेषयत्। अत्र 'इन्द्रसेनायाः' नामोच्चारणं भारते मिलति—

**"मिथुनं प्रेषयामास केशिन्या सह भारत।**
**इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः॥"[३]**

जैन कवि समुदाये केचित् कवयः तयोर्नाम निर्वचनं क्रमशः 'पुष्कर' 'पुष्कला' इत्यभिधानेन कुर्वन्ति।[४]

१०. भारतीय नलचरितानुरूपेणैव यदा नलः वने साध्वीं दमयन्तीमेकाकिनी मेव परित्यज्य यावन्निर्गतः तावदेव कर्कोटकेनाकारितः सः तस्य रक्षणं चक्रे। पदगणनायां 'दश' इति पदस्योच्चारण काल एव कर्कोटकः तमदशत्। परं वस्त्रं प्रदाय नलं समाश्वासयामास तथा च नलमकथयत् यत्वं साम्प्रतमयोध्यां गच्छ। तत्रर्तुपर्णस्य राज्ञः सकाशे 'बाहुके' ति छद्म संज्ञकः सूतकर्मणि नियुक्तो भव—

**"गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन्।**
**समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम्॥**

---

२. भवभूति—मालती माधव

३. म० भा० व० प० अ० ५७ श्लो० ४६ (गीता प्रेस संस्करण से)

४. म० भा० व० प० अ० ७३ श्लो० २३

५. नल एपी० पृष्ठ १७

**अयोध्यां नगरीं रम्यामद्यैव निषधेश्वर।"**[1]

नलः तथैव समनुष्ठिवान्। ऋतुपर्णस्य गेहे सूतत्वेन न्यवसत्—

**"एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः।**

**ऋतुपर्णस्य नगरे सह वार्ष्णेय जीवलः॥"**[2]

जैनवाङ्मयस्य परम्परानुरोधेन वर्णनमिदमाप्यते यन्नलः यस्य राज्ञः सकाशमगमत् स 'दधिपर्ण' इत्याख्य आसीत् न तु ऋतुपर्णः। 'दधिपर्णोऽयं 'शिशुमारपुर' 'शिशुमारपुर' बा राज्यं प्रशासति स्म।[3]

११. महाभारत कृत नलचरितानुरोधात् कथावस्तुनः क्रमे नलाद् वियुक्तासती दमयन्ती भयानके वने नैकान् कष्टान् सहन्ती तथा चाजगर-व्याघ-सार्थवाहादिभिः विपन्ना सती कथं कथमपि स्वप्राणान् रक्षन्ती हस्ति सम्मर्दनेनावशिष्ट ब्राह्मण परिकरेण सह चेदिराजस्य सुबाहोः देशं समासादितवती। सुबाहोः माताऽसीत्तस्याः मातृष्वसा। यद्यपि दमयन्ती तथ्यमिदं न जानातिस्म। यदा सुदेव नामकेनैकेन ब्राह्मणेन तत्र साऽभिशापिता तदा राजमाता तामब्रवीत्-

**"पिप्लुं दृष्टवा सुनन्दा च राजमाता च भारत।**

**रुदन्त्यौ तां परिष्वज्य मुहूर्त्तमिव तस्थतुः॥**

**उत्सृज्यवाष्पं शनकैं राजमातेदमब्रवीत्।**

**भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता॥**

**सुते दशार्णाधिपतेः सुदाम्नश्चारु दर्शने।**

**अहं च तव माता च राजन्यस्य महात्मनः॥**[4]

उपर्युक्तेन वर्णनेनेदमपि प्रतिभाति यद् सुबाहोः पितृनाम 'बीरबाहु' रित्यासीत्। दशार्णदेशाधिपतेः राज्ञः 'सुदामा' इत्यभिधानस्य द्वे पुत्र्यावास्ताम्। ययोः प्रथमा विदर्भराजेन भीमेन परिणीता या च दमयन्त्याः माताऽसीत्, अपरा च चेदिराजस्य 'वीरबाहोः' पत्नी जाता दमयन्त्याः अस्याः मातृष्वसायाः नामोल्लेखनं भारते क्वापि न संलक्ष्यते।

जैनास्तु स्थलेऽस्मिन् कथां परिवर्त्य प्रायुंजन्। घर्मसेन गणि स्व काव्ये

---

१. म० भा० व० प० अ० ६३ श्लो० १९

२. म० भा० व० प० अ० ६४ श्लो० ८

३. नल एपी० पृष्ठ १७

४. म० भा० व० प० अ० ६६ श्लो० ११-१२-१३।

कथामित्थं प्रस्तौति । नल विप्रयुक्ता दमयन्ती 'रिपुशत्रु' इति नामकस्य राज्ञा गेहे न्यवसत् । अयं रिपुशत्रुः अचलपुराधीश्वरेत्युपाधिना प्रख्यात आसीत् । अस्मिन्नेवाचल पुरे दमयन्ती कालमत्यवाहयादिति रामचन्द्र सूरिणापि स्वीये नलविलासे वर्णितं किन्तु तेनाचल पुराधीश्वरस्य नाम (ऋतुपर्ण) इत्येव कृतम् । कथमीदृशं वर्णितं तैरिदमनुसन्धेयम् । केऽपि जैन कवयोऽत्रऋतुपर्णस्य धर्मपत्न्याः अपि चर्चामकुर्वन् तस्या नाम 'चन्द्रयशा' इत्यासीत् । इयं चन्द्रयशा दमयन्त्या मातृष्वसा वभूव ।[1]

नलः ऋतुपर्ण समाशिश्रिय इतितु श्रुतं किन्तु दमयन्ती भार्गस्वरिं ऋतुपर्ण समाश्रितवतीति न कुत्रापि संस्कृत वाङ्मये संप्राप्नोति । न च पुनः ऋतुपर्णस्य भार्यायाः चन्द्रयशायाः नामापि प्राप्यते । साकथं दमयन्त्याः मातृष्वसा जातेत्य-पि-न ज्ञातम् ।

१२. कर्कोटक वृत्तान्तं नलचरितेऽत्यन्त मनोरंजकतयोपवर्णितम् । कौतूहलाविष्कारकेऽस्मिन्नुपाख्याने यदा कर्कोटकः नलमदशत् तदा स विरूपः कृष्ण वर्णश्च जातः । ततश्च कर्कोटकः अद्भुततमं वस्त्रयुगलं समर्प्य, ऋतुपर्णस्य गेहे सूतत्वेन निवासार्थं तमादिशन् सान्त्वयामास—

**"समेष्यसि च दारैस्त्वं मास्म शोके मनः कृथाः ।**
**राज्येन तनयाभ्यां च सत्यमेतद् ब्रवीमि ते ॥"**[2]

इत्युक्त्वा तत्रैव वनप्रान्ते कर्कोटकः विलीनोऽभूत—

**"एवं नलं समादिश्य वासो दत्वा च कौरव ।**
**नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥"**[3]

कर्कोटकस्य विषयेऽधिकांशः जैन कावयः मन्यन्ते यत् कर्कोटकः नलस्य पिता 'निषध' एवाऽऽसीत् । स एव वनेऽवसत्, स्वपुत्रं नलं कष्टायितं दृष्ट्वा सर्परूपे समागत्य स्वपुत्रस्य रक्षायै तमदशत्, तस्य साहाय्यं च समाचरत् । स नलं सान्त्वयामास-द्वादशवर्षानन्तरं त्वं पुनः स्वपरिजनं द्रक्ष्यसि, प्रियायाश्च पुनर्मिलनं समनुभविष्यसि ।[4]

---

१. नल एपी० पृष्ठ १७
२. म० भा० व० प० अ० ६३ श्लो० २१
३. म० भा० व० प० अ० श्लो०
४. नल एपी० पृष्ठ १७

अत्र नलदमयन्त्योर्वियोगावधिः द्वादशवर्षपरिमिता समाख्याता। महाभारते तु चतुर्वर्षानन्तरमेव तयोः पुर्नमिलनं संजातम्—

**"स चतुर्थे ततो वर्षे संगम्यसह भार्यया।**
**सर्वं कामैः सुसिद्धार्थो लब्धवान् परमां मुदम्॥"[1]**

१३. मौलिके नलचरिते नलः ऋतुपर्णस्य गृहे 'बाहुके' ति छद्म नाम्मा न्यवसदिति—

**"स राजानमुपातिष्ठत् बाहुकोऽहमिति ब्रुवन्।**
**अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः॥"[2]**

बाहुकशब्दयस्य कोशगतोऽप्यर्थः सारथिः वाहनचालकश्चैवास्ति। अत्र केचिज्जैन कवयः बाहुकस्य स्थाने 'हुन्डिके' ति नामानं नलमवर्णयन्।[3]

ऋतुपर्णस्यैकोऽन्योऽपि सूत आसीद्यस्य नाम 'जीवल' इत्यासीत्। अयं जीवलोऽपि जैन कविभिः 'मंगल' इति नाम्ना प्रतिपादितः।[4]

१४. दमयन्त्याः पुनः स्वयंवरस्य वार्तां श्रुत्वा ऋतुपर्णः बाहुकेन सह विदर्भानगच्छत्। एकैनेवाह्ना स अयोध्यातः विदर्भान् यावत् बाहुकस्याश्व संचालन दक्षतया प्राप्तः। सायंकाले ऋतुपर्ण बाहुकौ कुण्डिनपुर्यां समाजग्मतुरिति भारते प्रतिपादितम्—

**"ततोविदर्भान्सम्प्राप्तं सायाह्ने सत्यविक्रमम्।**
**ऋतुपर्णं जनाराज्ञे भीमाय प्रत्यवेदयन्॥"[5]**

परं जैनावाङ्मये प्रातः काले अपरेद्यूः तयोरागमनं विदर्भेऽभूदिति समुपवर्णितम्।[6]

१५. जैनकविभिरेकमन्यदपि वृत्तं परिवर्तितम्। महाभारते वर्णितं-यदृतुपर्णेन सह बाहुकवेषेणागतो नलः यदाऽतिथिशलायां महानसे भोजनं पाचयतिस्मतदा दमयन्ती स्वदूतीं पौनः पुन्येन तस्य समीपे परीक्षणार्थं

---

१. म० भा० व० प० अ० ७५ श्लो० २५
२. म० मा० व० प० अ० ६४ श्लो० २
३. नल एपी० पृष्ठ १७
४. नल एपी० पृष्ठ १७
५. म० भा० व० प० अ० ७१ श्लो० १
६. नल एपी० पृष्ठ १८

प्रेषितवती। बहुशः परीक्षणे संजाते सति शंकामपाकर्तु दमयन्ती केशिनी ममोचत् यत्वं बाहुकेनोपसंस्कृतं मांसमानय। केशिनी तथैवाकरोत्। मांसं प्राशय मा निश्चिकाय यद् बाहुक एव नलः—

**"पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम्।**
**महानसाच्छृतं मांसं सम्पादायैहि भामिनि॥**
**सागत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च।**
**अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी॥**
**दमयन्त्यै ततः प्रादात् केशिनी कुरुनन्दन।**
**सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा॥**
**प्राश्य मत्वा नलं सूदं प्राक्रोशद् भृशदुःखिता।**
**वैक्लव्यं च परं गत्वा प्रक्षाल्य च मुखं ततः॥"[1]**

जैन कवयोऽस्मिन् विषये समुद्भावयन्ति यद् दमयन्ती नलेन सौरऊर्जया परिपक्वमन्नं भुक्त्वा स्वादेन नलं ज्ञातवती[2]। जैनदर्शनानुरोधात्परिवर्तनमिदमुचितमेव। 'अहिंसा परमोधर्मः' इति ख्यापकानां जैनाचार्य्याणां वाङ्मये नायकद्वारा नायिका द्वारा वा मांसभक्षणस्य वर्णनं जैन सिद्धान्तविरुद्धमस्ति।

उपर्युक्तानां वैभिन्यानामतिरिक्तं रामचन्द्र सूरेः नल विलास नामके नाटके नलचरितस्यान्तिमो भागः नाट्यरूपान्तरणे चमत्कृत्यौत्सुक्य नाटकीयतायाश्च दृष्ट्या परिवर्तितः। तदनुसारेण यदा दमयन्ती बाहुकस्य विषये इदमश्रावयत्सः सौर ऊर्जया अन्नं पाचयति तदा साऽश्चर्यायिता सती चिन्तयामास तथा च नल एवासीदयं गुण इति निश्चितवती तत् कथमयं गुणो बाहुके सम्भाव्यते। तस्य परीक्षणमावश्यकमितिमत्वा दमयन्ती दूतमुखेन तस्य नगरे पुनः स्वयंवरस्य समाचारं प्रैषयत्। तद् व्याजेन बाहुकः तत्रागतः। परं दमयन्ती श्रुतवती यन्नलः परलोकं गतः बाहुकस्तु पुनरन्य एव पुरुषस्तदा दुःखातिशयेन पतिव्रता सा अग्नौ प्रवेष्टुमिच्छति। यदा सा प्रज्वलिते हुताशने निपतितुं प्रवृत्ता तदैव आगत्य नलस्तां ररक्ष। नलः सर्वमिदं वृत्तान्तं स्वपितुः 'निषधस्य' यः कर्कोटकस्य रूपे आसीत् मुखाद् ज्ञातवान्। अतएव समये आगत्य दमयन्ती' ररक्ष।[3]

१. म० भा० व० प० अ० ७३ श्लो० २०-२१-२२-२३
२. नल एपी० पृष्ठ १८
३. नल एपी० पृष्ठ १८

नलविलासस्यायं नाटकीयः पटाक्षेपोऽत्यन्तमेव प्रभावपूर्णः । संघर्षस्य चरमं सीमानं प्रादर्शयदत्रकविः । प्रज्वलितायाः चितायाः समक्षे दमयन्तीमानीय तत्समये नायक द्वारा तस्याः रक्षणस्य परिकल्पनं नाट्य दृष्ट्या सटीकतां, सुखान्ततां, कौतूहलयुतां प्रसन्नतां च युगपदेव द्योतयति । अत्रविहितं यत्परिवर्तनं तत्कविकौशलकृतं न च सम्प्रदायानुरोधि ।

विवेचनयानया तथ्यमिदं स्पष्टं प्रतीयते यन्नल चरितस्य प्रयोगो जैन वाङ्मये प्रभूततयोपलभ्यते । नल चरितस्य मौलिकमितिवृत्तं तस्मिन्नेव रूपेऽत्रापिसंकलितम् । परन्तु यत्र तत्र कविकृत परिवर्तनानि तथा च स्वसम्प्रदायनुरोधि परिवर्तनानि दृष्टिपथ आयान्ति । परिवर्तनस्येदं प्रक्रिया क्वचित् साधूचिता, क्वचिच्च सामान्यत्वेनैव प्रतिभाति । स्वमतं प्रस्थापयितुं परिपोषयितुं परिपोषयितुं च कविपरिकरः इतिवृत्तेऽपेक्षितं परिवर्तनं करोत्येव । उदाहरणतया नागानन्दस्य बौद्धग्रन्थोद्भवत्वं यद्यपि सर्वं स्वीकृतं तथापि जैनाचार्यैः श्री हर्षेण च साकथास्व मताविरोधेनैव स्वकृतिषु प्रयुक्ता । अनेनैव प्रकारेण जैनाचार्य्योः नलचरितमपि स्वेच्छया परिवर्त्य प्रायुंजन् ।

एकमन्यदपि तथ्यं ज्ञायते यन्नलचरितमत्यन्त प्राचीनकालादेव जनमानसे संश्लिष्टमासीत् । जैन वाङ्मयेन लोक कथा रूपेऽस्य चरितस्य प्रचारः प्रसारः साटोपं सम्पादितः । उत्तरे भारतेऽद्यापि नलचरितोपाख्यानं लोकगीतेषु श्रोतुं शक्यते यत्र ग्रामीणाः कथावाचकाः नलदमन्त्योर्विप्रलम्भं "ढोला" नामके गीते भाव प्रवणतया तथाविधमेव प्रस्तुवन्ति यं श्रुत्वाद्यपि ग्राम्याः अश्रुपूर्णचक्षुष्का भवन्ति । पुराणसाहित्यस्यैतिहासिकसाहित्यस्य चार्णं सर्वे एव स्वीकुर्वन्ति । जैन वाङ्मयोऽपि पौराणिकाख्यानानामघमर्णत्वं समुपयाति । पुर्नजन्मनः परलोकस्य च सिद्धान्तं जैन सम्प्रदाये स्वीकृतं न वेति न जाने किन्तु कलि विनाशोपयोगाय "पुण्यश्लोकस्य" नलस्य चरितं सर्वैः वर्णितम् । जैनाः अपि कलिजन्य दोष परिहारार्थे चरितमिदं स्वीचक्रुः—

**"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।**
**ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ।।"**[1]

---

१. म० भा० व० प० अ० ७९ श्लो० १० (गीता प्रेस संस्करण से)

## पंचमोऽध्यायः

लौकिक संस्कृत वाङ्मयस्य परम्परायाः प्रवर्तकस्य महर्षेः बाल्मीकेः ऋतम्भरया प्रज्ञया प्रसूतमादिकाव्यं रावण वधमित्यपरनामधेयं रामायणं महाकाव्यं सर्वोत्कृष्टं सर्वातिशायीत्यस्मिन्विषये नकोऽपि विवादः । क्रौंचपक्षिणः आर्तपरिदेवनं श्रुत्वा दयार्द्रेनान्तः करणेन कारुणरसपूरितं रामायणं महाकाव्यं परवर्तिनां कवीनां समुदायस्य काव्यप्रतिभा प्रदर्शने अक्षयं भाण्डारमिव सुशोभितं जातम् । लौकिक संस्कृत वाङ्मये रामायणात्प्राचीनः न हि कोऽपि ग्रंथः । अस्मिन्विषये विदुषामैकमत्यं वर्तते । मर्हषिः वाल्मीकिः रामचरितं यस्यां भाव भूमौ संस्थापितवान् साऽन्येन केनापि नाधिगता । महर्षिः व्यासः अष्टादश पुराणानां महाभारतस्य च रचनां कृत्वा अन्येषामुदारचरितानामार्याणां चरित्रमुत्कृष्टरूपेण लोकोपयोगार्थमुद्घाटितवान् । किन्तु श्रीकृष्ण चरितं नलचरितं च विहाय अन्यस्मिन् कस्मिन्नपिचरिते अपेक्षितताया भव्यतायाः समावेशो नाभूत् । महाभारते व्यासः संक्षेपेण रामचरितमप्यवर्णयत् । अस्मादेवकारणात् महाभारतस्य वर्तमाने स्वरूपे अर्वाचीनतायाः रामायणस्य च प्राचीनतायाः भावः स्पष्टं परिलक्ष्यते । नलचरिते वाल्मीकि रामायणस्य अनेकानि पद्यानि व्यासेन प्रयोगवादितामवलम्ब्य किंचित् परिवर्तनं विधाय योजयित्वा च नलचरितस्य श्रियो वृद्धिः अकारि । सनातनानि मूल्यानि प्रतिष्ठापयन्तौ वाल्मीकि व्यासौ यत्साहित्यं रचयामासतुः तत्सर्वं परवर्तिनः काव्यजगतोऽक्षयं वस्तु-भाण्डागारम् । संस्कृत बाङ्मये यानि महाकाव्यानि गद्यकाव्यानि चम्पू काव्यानि नाटकादीनि चाधुना संलक्ष्यन्ते तानि सर्वाण्येव प्रायशो महाभारतं रामायणं वा समाश्रित्यैवोपजीवन्ति ।

महाभारतस्य रामायणस्य च कथा वस्तुनि पश्चात्तनानां कवीनां जीवातुनी विराजेते । अत्र मौलिकं कारणं भगवता व्यासेन मर्हषिणा वाल्मीकिना च स्व स्व नायकानां धीरोदात्ततां सम्यक् प्रकाशयितुमनुगुणं वातावरणं सृष्टम् ।

"एको रसः करुण एव निमित्त भेदात्"[1] इत्यादि भवभूति श्लोकेन सर्वेषां रसानामुपजीव्यत्वं यत् करुण रसस्य प्रपंचितम्, तत्रायमेवाशयः यत् यावत् पर्यन्तं जीवित संघर्षाणां निकषोपले कस्यचिन्नायकस्य पुरुषकारः न संशोधितो भवति यावच्च दुःख दारिद्रयादीनां सन्दर्भाणां पुरतः कश्चिन्नायकः स्वकीयमात्मविश्वासं धर्म निष्ठाँ धीरोदात्तत्वं ल न प्रदर्शयति तावत् तस्य कथा रथ्यापुरुषकथाप्राया एव ।

एतादृशाणां संघर्षाणामयमस्ति योग्यता यन्नायकस्य सर्वतोमुत्तीं क्षोद् क्षमतां बहिरानेतुं प्रकाशयितुं च अवसरो दीयते । यदि नाभविष्यत् मन्थरानाम काचित् परोन्नत्या असहिष्णुः रामस्य रामत्वमेव न प्रकाशमगमिष्यत्—

**"कृतांजलिस्तत्र यदम्ब सत्यात्,**
**नाभ्रश्यत् स्वर्ग फलात् गुरुर्नः ।**
**तच्चिन्त्यमानं सुकृतं तवेति,**
**जहार लज्जां भरतस्य मातुः ॥"[2]**

इति रघुवंशे वर्णितं महाकविना कालिदासेन ।

**"वनभुवितन्मात्र त्राण आज्ञापितं मे,**
**सकलभुवनभारः स्थापितोवत्समूर्ध्नि ।**
**इति च सुकरतायामावयोस्तर्कितायाम्,**
**मयि पतति गरीयानम्ब ते पक्षपातः ॥"[3]**

इत्यादि भोज चम्पू रामायणे च यादृशं रामस्य औदार्यं प्रदर्शितं ततो ज्ञायते यत् संघर्षैरेव कस्यचिदपि पुरुषस्य पूर्णता प्रकाशमेष्यति—

**"विकार हेतौ सति विक्रियन्ते ।**
**येषां न चेतांसि त एव धीराः ॥"[4]**

इति विक्रिया हेतुषु सत्स्वपि ते धैर्यमवलम्बन्ते ये च स्वाभाविकीमौदार्यतां न त्यजन्ति ते खलु धीरोदात्ताः ।

तादृशं नायकं स्वकाव्ये कथानके वा संनिवेश्य तस्य पूर्ण महिमानमाविष्कर्तुं

---

१. उत्तर रामचरित भवभूति
२. रघुवंश सर्ग १४ श्लोक १६
३. भोज चम्पू रामायणे अयोध्या काण्ड
४. कुमारसम्भव कालिदास

स्वशेमुषीमुपयुंजति कविः । बनवासः, भार्या वियोगः, दारिद्रयं चेत्यादि जीवित् सन्दर्भाणां पुरतः कथं वर्तितव्यं व्यवहर्तव्यं वा नायकेन इति बृहदश्व द्वारा बनवास दुखमनुभवतां पाण्डवानामुद्बोधनाय नलचरितस्य सन्निवेशः कृतः। बनवासेऽपि पांचाल्या सह एव वर्तन्ते पाण्डवाः । तत्र च धौम्यादयौ धर्मशीला ब्राह्मणवर्यापि तेषां सहचराः सहायकाश्च वर्तन्ते । समये समये भगवान कृष्णश्च तान् आश्वासयितुं पुरतो अविर्भवति ।

श्रीमद्रामायणे धर्मपत्न्याः विरहोऽपि भ्रातृमात्रद्वितीयस्य रामस्य बनवास दुःखं द्विगुणीकरोति । तत्र स्व सहायार्थमात्मानपि आहुती कृतवतः गृध्रराजस्य जटायुषः कृते रामस्य न केवलं कृतज्ञता किन्तु सर्वत्र गुण ग्राहकत्वमपि प्रकटी कृतम् यथाहि—

**"पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्चमे ।**
**गृध्रराज्यं परित्यज्य पितृ पैतामहंमहत् ।।**
**ममहेतोरयं प्राणान् मुमोच पतगेश्वरः ।**
**सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।।**
**शूराः शरण्याः सौमित्रे तिर्यग्योनि गतेष्वपि ।**
**सीता हरणजं दुःखं न मे सौम्य तथागतम् ।।**
**यथा विनाशे गृध्रस्य मत्कृते च परंतप ।"[१]**

"आत्मानं मानुषं मन्ये" इत्यत्र वदता श्री रामेण स्वकीयं मानुष वेषच्छन्न-त्वमपि विस्मृत्य अपरावर्तिनी गतिं दातुं सन्नद्धोऽस्मि गृध्रराजस्य कृत इति स्वकार्यं सर्वशक्तिमत्वमैश्वर्यं च प्रदर्शितं दुःखस्यैव हेतुना ।

एवं स्वस्य पूर्णत्वं परेषु च ये सन्ति विभूत्यंशास्तानपि वीक्षितुं प्रभवति नायकः दुःखातिरेकेणैव ।

नलचरिते तु बनवासः पतिव्रताः पत्नी वियोगश्च वर्तते किन्तु भ्रातृ द्वितीयत्वं नास्ति । नास्ति कश्चिज्जटायुरपि अतः दुःखस्य परां काष्ठामनुभवतो तदापि स्व मर्यादामनुल्लंध्य नलस्य चरितं धर्म पुत्रादीनामपि आदर्शत्वेन स्वी-कृतम् ।

रामायणस्य महाभारतात् पूर्वकालीनत्वं प्रायशोऽभ्युपगम्यते । अस्त्येव विप्रतिपत्ति--

---

१. बाल्मीकि रामायण अरण्य काण्ड अध्याय ३८, श्लोक २२-२३-२४-२५

**"अष्टौ श्लोक सहस्त्राणि, अष्टौ श्लोक शतानि च ।**
**अहं वेद्मि शुको वेत्ति, संजयो वेत्ति वा न वा ।।"**

इति श्लोक सन्दर्भमनुसृत्य यन्मूलभूता महाभारतकथा अष्ट शतोत्तर अष्ट सहस्त्रात्मिका प्रागासीदिति विषये ।

किन्तु तस्यां कथायां मूलभूते इतिहासे नल चरितस्य प्रवेशो न सम्भाव्यः । अतः महाभारतस्य उपाख्यानैः सह यावत् उपबृंहणं समभूत् तावत् रामायणस्य प्रचुर प्रचारोऽवश्यमभूत् । अनया दृष्ट्या रामायणे ये श्लोकाः नलचरितस्य श्लोकानां सारूप्यं वहन्ति अथवा छायात्वेन दरी दृश्यन्ते तेषां श्लोकानां संकलनम् तुलना च सन्दर्भ साम्यात् श्लोक साम्याच्च गवेषकाणामुपकाराय भवेत् ।

रामायणीयानि महाभारतीयानि चैतानि श्लोक युग्मानि उपरिष्टाद्धि सम्यगनुकृतानीव प्रतिभान्ति, समग्राणि काव्य सम्भाराणि विशेष्य विशेषण दलानि सादृश्यविधानानि, सुप्तिङ् सर्वनामादीनि पदानि, वाक्य संरचनानि दशाविशेषणि च प्रायशः समानानि परिदृश्यन्ते परन्तु सूक्ष्मानुसन्धानधियाऽवलोकनेन स्फुटतया प्रतीयते यन्महर्षी वाल्मीकि व्यासौ सीता दमयन्त्योः प्रकृतित्वं समनुभूय शैलीयोपकरणैः चयनाभियोजन विचलनैः पदपूर्वार्द्धपदपरार्द्धवक्रताविच्छित्तिभिश्च द्वयो तादवस्थ्यं सौन्दर्यं विभिन्न दिशायामुन्मीलितवन्तौ । रामायण महाभारतयोः साम्यमावहत्प्रथमं श्लोक युग्मं यथा—

**"पिनद्धां धूमजालेन शिखामिव विभावसोः ।"[१]**
**"पिनद्धां धूमजालेन प्रभामिव विभावसोः ।"[२]**

इमौ श्लौकौ चतुरस्त्र विधया नितरां तुल्यमूल्यवन्तौ प्रतीयेते । यथा सीताया विरहजनितः प्रभावः तथैव दमयन्त्यामपि प्रभवति, द्व एव धूमजालेन पिनद्धा विभावसौः शिखा विमेव च मोहजालेन समावृते स्तः, किन्तु सीता परमदिव्या अयोनिजा भूमिजा सती अस्ति अतएव सा विभावसौः शिखयोपमीयते, शिखायाः शून्याकाशैकलक्ष्यतया चिद्रूपायाः सीतायाः ब्रह्मरामैकलक्ष्यता सूच्यते एवमेवान्यधर्मतया निर्वात निष्कम्पतया तस्याः धीरता, गम्भीरता, अन्तरेवान्तः प्रज्वलनतया तीव्रानुतापस्यान्तर्वेधता, धूमादनुमितसद्योऽप्लुष्ट-

---

१. वाल्मीकि रामायण सुन्दर काण्ड – सर्ग १५, श्लोक २८

२. म० भा० व० प० अध्याय ६५, श्लोक ७

तयाऽपूर्व क्षमता शिखात्व समग्रतया च तस्याः सीताया एकवृत्तिता कैवल्य निष्ठता व्यापकता, पवित्रता तपस्तप्तता च द्योत्यते । एतेनोपमागतसाधर्म्य सम्बन्धेन वैदेह्याः सीतायाः अपूर्वमनिर्वचनीयं च शक्ति शील सौन्दर्यमनुभूयते।

किन्त्वत्र महाभारते दमयन्ती विभावसोः प्रभयोपमीयते, उपमान पदस्य प्रकृति परिवर्तनेनोपसर्गाभियोजनेन च साऽन्यथा प्रतिपाद्यते । विरहस्य प्रभावोऽन्यो दिशीयः क्रियते । विभावसोः प्रभायाः परितोऽल्प विसारिणीत्वात् भैम्याः दमयन्त्याः तस्याः विरहस्य च अनतिगामिता, प्रकृष्टार्थोपादक प्रोपसर्गेण दीप्त्यर्थोपपादकमाधातुना च प्रतीयमान सद्योविप्लुष्ट साधनत्वात् ससीम सहिष्णुता क्षमता, आत्मसहकृत वहिर्मुखता, आकाशापेक्षयाऽधिकभौमधमिता अथ च प्रमात्व सामग्र्या दीषद्दिव्यता ईषच्चादिव्यता संसूच्यते । एतेनोपमागत साधर्म्य सम्बन्धेन महिष्याः दमयन्त्याः शक्तिशील सौन्दर्यं मानवीयं लौकिकं चावधार्यते ।

द्वितीयं श्लोकयुग्मम्—

**"पूर्ण चन्द्राननां शुभ्रां चारुवृत्तपयोधराम् ।**
**कुर्वतीं प्रभया देवी सर्वाः वितिमिराः दिशः ॥"**[1]

+ + + +

**पूर्णं चन्द्राननां श्यामां चारुवृत्तपयोधराम् ।**
**कुर्वन्ती प्रभया देवी सर्वाः वितिमिराः दिशः ।।**[2]

अत्रापि द्व एव पूर्णचन्द्रानने चारुवृत्तपयोधरे देव्यौ प्रभया सर्वा दिशः वितिमिराः कुर्वन्त्यौ समानधर्मिण्यो दृश्येते, सर्वं विशेषणं, वाक्य संघटनं सुवन्तं तिङन्तं च पदं सादृश्य विधानं छन्दोविधानञ्च द्वयोः श्लोकयोः समानं परिलक्ष्यते किन्तु व्यासः तद्भिन्नमेकमेव पदमवचय्य तत्संघटय्य च दमयन्ती मन्यथाकरोति । वाल्मीकेः सीता समस्त विशेषणविशिष्टा शुभ्रास्ति या शुभ्रता सीतायाः सत्वं वैशिष्ट्यं व्यापकत्वं भुवनव्यापि यशस्त्वं लोकाह्लादकत्वं च प्रोद्भावयति तथा च सा शुभ्रता सम्पूर्ण सीतात्वे परिकल्पयितुं शक्यते, आह्लादनादि गुण विशिष्ट चन्द्रत्वं तु केवलमानन एव परिकल्पितमस्ति एवम्भूतेन

---

१. बालमीकि रामायण—सुन्दर काण्ड—सर्ग १५, श्लोक २८ का उत्तरार्द्ध एवम् २९ का पूर्वार्द्ध

२. म० भा० व० प० अध्याय ६५, श्लोक १०

पूर्ण चन्द्राननत्वेन शुभ्रत्वेन च सीता दिशः तिमिरकुलानि संहर्तुं नैसर्गिक भावेन समर्थेति द्योत्यते अत्र हि सीता लुप्तवाचकतया पूर्णचन्द्रस्योपमानस्य नेदीयसी उपमेयभूता कल्प्यते।

व्यासस्य दमयन्ती समस्त विशेषणैः विशिष्टा सती श्यामाऽस्ति यच्छ्यामात्वं स्वसीमन्येव तां विशिनष्टि,, इदं श्यामात्वमपि संपूर्णे दमयन्तीत्वे प्रतिभाति, इदं श्यामात्वं वर्णत्वेन स्वीकर्तु न युज्यते, वर्णत्वेन स्वीकृते सति तिमिरापहरणेन सह विरोधोऽभिजायते। अतः काव्य शास्त्रे नायिका भेदे परिभाषितं श्यामात्वमेवोपग्राह्यं यद्धि तां लक्षणशास्त्रीय नायिकाभेदानामेकामेव कोटिमधिष्ठापयति। एवमेव व्यासः सत्स्वप्यपरपर्यायेषु श्यामेति पदमवचय्य तदभियोज्य च दमयन्त्याः तत्सौन्दर्यं साधु सम्पादयति।

तृतीयं श्लोकयुग्मम्—

**"सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा।**
**इष्टां सर्वस्य जगतः पूर्ण चन्द्र प्रभामिव॥"**[1]

× × × ×

**"चारु पद्म पलाशाक्षीं मन्मथस्य रतीमिव।**
**इष्टां सर्वस्य जगतः पूर्णचन्द्र प्रभामिव॥"**[2]

इह खलु रामायणस्य महाभारतस्य च द्वयोः श्लोकयोः तृताय चतुर्थ चरणाभ्यां सीता दमयन्ती च समानरूपेण निरूपिता परन्तु प्रथम द्वितीय चरणयोः व्यासः पदं वाक्यं च परिवर्त्य सीता सौन्दर्यात् दमयन्ती सौन्दर्यं विश्लथयन्नन्यथा करोति। वाल्मीकिः एकतः सीतेति विशेष्य पदं नियोज्य तस्याः औत्पत्तिकालौकिकत्वं संसूचयति अपरतः विशेषणं विनेव पद्म पलाशस्य सन्निधानेन पद्म सामान्यस्य समग्र सुन्दरतया अक्षिपर्युपमाति। एवमेव द्वितीय चरणे यथेति सादृश्य वाचकं विनियोज्य उपमानस्य सौन्दर्येण सहोपमेयस्य सौन्दर्यं श्रुतिमात्रतो बोधयति। व्यासस्तु प्रथम चरणे विशेष्यतामपवार्य पद्मपलाशस्य कृते 'चारु' इति विशेषणपदमभियोज्य कस्यचित् विशिष्ट पद्मपलाशस्य सौन्दर्येणाक्षि तुलयति येन दमयन्ती तस्या अक्षि च विशिष्टमथ च सीमितं सौन्दर्यमादधत् प्रतीयते। सर्वस्य जगतः कृते सीता स्वयं सीतात्वेनाऽ-

---

१. वाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १५, श्लोक ३०
२. म० भा० व० प० अध्याय ६५ श्लोक ११

पीष्टा किन्तु दमयन्ती दमयन्तीत्वेन जगतः कृते कथमीष्टा भवितुमर्हति अतएव तत्र विशेष्यस्य स्थाने 'चारु' पदस्य संश्लेषणं समीचीनम् ।

चतुर्थ श्लोकयुग्मम् —

**"मलमण्डलनिदिग्धाङ्गीं मण्डनार्हाममण्डनाम् ।**
**मृणालीपंकदिग्धेव विभाति न विभाति च ।।"[1]**
**"विदर्भसरसस्तस्मात् दैव दोषादिवोद्धृताम् ।**
**मल पंकानुलिप्तांगी मृणालीमिव तां भृशम् ।।"[2]**

अत्रोभयोः यत्किंचिदेव साम्यं दरीदृश्यते । रामायणे सीतायाः कृते मलमेवमण्डनं भवति तेनैवांगानि सर्वाणि दिग्धानि वर्ण्यन्ते, सीतायाः स्पर्शमात्रेण भौमं वस्तु अथ चादिव्यमस्पृष्टं वस्तु सहसा अभौमं दिव्यं स्पर्शयोग्यं भवति, यद्यपि, सा मण्डनार्हा किन्तु मण्डनविहीनाऽस्ति रामरूप मण्डन वियोगत्वात् यतः प्रियेषु सौभाग्य फला हि चारुता भवति, आभ्यां विशेषणाभ्यां भविष्यमाणः संयोगस्तथा च मेध्यता पवित्रता वा द्योत्यते । पंकदिग्धा मृणालीव विभाति न विभाति चेत्यनेन सीतायाः कृशता, शुचिता, सुकुमारता, दृश्यता चोन्मीलिता भवति । एवमेव वाल्मीकिना सीता लोकातिशायिनीत्वेन नित्य सुन्दरींत्वेन चोद्घाटिता ।

इदं गुह्यमवकल्प्य व्यासः सर्वं वर्ण्यं वस्तु अतथीकृत्य दमयन्त्याः सौन्दर्यं लोकसामान्यी करोति । प्रथमं तावत् रूपक माध्यमेन विरहजं प्रभावं तद्धेतुकं संकेतात्मकमितिवृत्तं च समुद्घाट्य समस्तं पर्यावरणं लोक भूमिमुपनयति, नात्र मलं मण्डनयोग्यं न चात्र दमयन्ती मण्डनार्हा सती अमण्डना वर्ण्यते प्रत्युन्मृणाल्या सह मलस्यालकार्यालंकारभावसम्बन्धं संयोग सम्बन्धं वा सम्प्रदर्श्य तथां च तेन सह दैव दोषाद् विदर्भ सरस उद्धृतायाः दमयन्त्याः उपमानोपमेयभावं सन्धाय व्यासः लोकदृष्टं लोकश्रुतं च भावजातं समनुभावयितुं प्रयतते ।

पंचमं श्लोकयुग्मम्—

**"उत्कृष्ट पर्ण कमलां वित्रासित विहंगमाम् ।**
**हस्ति हस्त परामृष्टां आकुलां पद्मिनीमिव ।।"[3]**

---

१. वाल्मीकि रासायण-सुन्दर काण्ड-सर्ग १९ श्लोक ६
२. म० भा० व० प९ अ० ६५, श्लोक १२
३. बाल्मीकि रामायण—सुन्दर काण्ड—सर्ग १९, श्लोक १७

× × × ×

"विध्वस्त पर्ण कमलां वित्रासित विहंगमाम् ।
हस्तिहस्त तरिक्लिष्टां व्याकुलामिव पद्मिनीम् ।।"[1]

बाल्मीकि रामायणे सीता उत्कृष्ट पर्ण कमलात्वेनोपमीयते, उत्कृष्ट पदेन सविघसंवेदनपूर्वकावचयनं द्योत्यते, पर्ण पदेन च प्रिय घनजनादयः संसूच्यन्ते, अयं फलितोऽर्थः, कार्यकारणवशादापाततो वा कमलं चयनविधिनोत्कृष्ट पर्ण सत् यथा भविष्यति काले पुनः पर्णादिसहितं सुशोभते तथैव धर्मप्राणा सीताऽपि स्वधर्मे निधनं श्रेयस्त्वात् ससम्वेदनोत्कृष्ट भौतिक सौख्यादि रूपपर्णा सती पुनः कालान्तरे चिरस्थायि सहज सौख्यं समवाप्स्यतीति द्योत्यते किन्तु महाभारते दमयन्ती निरूपणे व्यासः किंचित्परिबर्तनं विघाय तां विविनक्ति । अत्रोत्कृष्ट पदस्य स्थाने विध्वस्त पदस्य नियोजनं साधु समीचीनं यतो हि विध्वस्त पदेन परितोविलुण्ठनं सर्वस्वापहरणं पर्ण पदेन च प्रियवनजनादयः प्रतीयन्ते । निष्कर्षतः यथा कार्यकारण वशादापाततो वा कमलं निर्ममतया विध्वस्त पर्ण सत् कदापि काले पुनः पर्णादियोजनया सुशोभते तथैवेदानीं दमयन्तीकलिद्वाप रयोरदृष्ट योजनया शापाच्च निर्ममतया विध्वस्त संयोगसौख्य समृद्धि रूपपर्णा सती नियतकाले पुनः तत्सौख्यमनुभविष्यतीति द्योत्यते ।

महाभारतकारः वस्तुस्थितिं परिज्ञापनार्थमुपमानविशेषण मन्यदिशीयं करोति यतः सीतायाः विरहजन्यानुतापमन्यद्दमयन्त्याश्च विरह जन्यमनुताप मन्यत्, तत्र विधिविधान मत्र च कलि विधानं, सीता भौमशक्तिशील सौन्दर्य प्रधाना दमयन्ती च भौम प्रघाना । अतः पदपरिवृत्तिः स्थाने ।

षष्ठं श्लोक युग्मम् यथा—

"सुकुमारीं सुजातांगी रत्नगर्भं गृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ।।"[2]

× × × ×

"सुकुमारीं सुजातांगी रत्नगर्भ गृहोचिताम् ।
दह्यमानामिवोष्णेन मृणालीमचिरोत्तृताम् ।।"[3]

---

१. म० भ० व० प० अ० ६५, श्लोक १४

२. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक १८

३. म० भा० व० प० अ० ६५, श्लोक १५

रामायणस्य महाभारतस्य चेमावपि श्लौको सहसा सीता दमयन्त्योः सौन्दर्योन्मीलने गुणालंकाररसरीत्या वृत्या च परस्परं बिम्बत्वं प्रतिबिम्बत्वं चोपगच्छन्तो प्रतिविधानतया प्रतीयेते । पदपूर्वार्द्धे वक्रतयाऽर्थात् तप्यमानामित्यस्य स्थाने प्रकृति परिवर्त्य दह्यमानामिति संप्रयुज्य व्यासः सीतापेक्षया दमयन्त्याः क्षमतामितरथां विदधाति । रामायणे परमसुकुमारी सीताऽचिरोद्धतोष्णेन तप्यमाना मृणालीव केवलं तप्यते न तु दह्यते वपुषः कांचनपद्म धर्मित्वात् पार्वतीवत्[1] अनेन तप्यमानेतिपदेन सीतायाः शक्तिः लोकातिगा परा च त्रायते । किन्तु महाभारते परम सुकुमारी दमयन्ती अचिरोद्धृता उष्णेन दह्यमाना मृणालीव दह्यते न च सा किंचिदप्युष्णं सोढमर्हति यतो हि सा मानवीय शक्ति सम्पन्नः लौकिकी राज्ञी अस्ति । इयं राज्ञी दमयन्ती लौकिके सीमन्येव स्वीयमनुतापं समनुभावयेदितिधिया महाभारतकारो व्यासः दह्यमानामिति पदं प्रयुनक्ति । एवं प्रयोगधर्मिता कालिदासस्य काव्ये तुबहुशः प्राप्नोति । कालिदास कृत कुमारसम्भवस्य रघुवंशस्य च पार्वतीन्दुमती च चतुरस्त्र दिशा समान धर्मिण्यो सत्यावपि पदवाक्यप्रयोगवक्रतया विभिन्न दिशायां विभ्राजेते—

**"तदीषदार्द्रारुणगण्डलेख-**
**मुच्छ्वासि कालाजन रागमक्ष्णोः ।**
**वधूमुखं क्लान्त यवावतंस-**
**माचारधूम ग्रहणाद् बभूव ॥"[2]**
**"तवन्जनक्लेद समाकुलाक्षं-**
**प्रम्लान वीजांकुर कर्णपूरम् ।**
**वधूमुखं पाटल गण्डलेख-**
**काचारधूमग्रहणाद् बभूव ॥"[3]**

अत्राचार प्राप्तस्य धूमग्रहणस्य प्रभावः पार्वतीन्दुमत्योरुपरि भिन्नो भिन्नः परिलक्ष्यते । तीक्ष्णं कषायं च धूम कुलं पार्वत्याः अक्ष्णोः कालाञ्जनं केवलं समुच्छ्

१. कुमारसम्भव सर्ग ५ श्लोक १९
२. कुमारसम्भव सर्ग ७ श्लोक ८२
३. रघुवंश सर्ग ७ श्लोक २७

वसिति गण्डलेखा च ईषदार्द्रारुणा लक्ष्यते, कर्णालंकृतं यवांकुरं केवलं म्लमते यतो हि पार्वती पूर्वानुभूत परमतपः क्लमा पराशक्ति स्वरूपा दिव्या नायिकास्ति तत्कृते धूमग्रहणं उच्छ्वासजनकमेव भवितुं शक्नोति न क्लेशकरं, गण्डलेखा किंचिदद्ररुणा च भवितुं शक्नोति न तु पाटला यवावर्तंसं च क्लान्तमेव भवितुं क्षमते न तु प्रम्लानं भवितुं क्षमते।

किन्तु तस्मादेव धूमग्रहणात् इन्दुमत्याः अक्षिणी समाकुलिते भवतः, गण्डलेखा पाटला, बीजांकुरं च (न तु यवांकुरं) प्रकृष्टतया म्लानत्वं भजते— इन्दुमत्याः तस्याः क्षमतायाश्च पार्थिवत्वात्लौकिकत्वाच्च।

सप्तमं श्लोक युग्मम्—

**मल पकं धरां दीनां मण्डनार्हाममण्डिताम्।**
**प्रभां नक्षत्र राजस्य कालमेघैरिवावृताम्॥[1]**

\+ \+ \+ \+

**रूपोदार्य गुणोपेतां मण्डनार्हाममण्डिताम्।**
**चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम्॥[2]**

अत्रैषदर्श एव साम्यं वर्तते। सीता-दमयन्त्यौ मण्डनार्हे सत्यावमण्डिते स्तः। अन्यत्र सर्वांशे वैषम्यं वर्तते। इह शिल्पे दृश्यमाणं वैषम्यमेव द्वै द्वयोश्च सौन्दर्यं विभजते। सीता मलपंकधरा सत्यपि दीना च सत्यपि न तु रूपौदार्य गुणोपेतापि कालमेघैः न तु नीलाभ्रैः आवृता न तु संवृता नक्षत्रराजस्य न तु चन्द्रस्य प्रभेव न तु लेखेव सुशोभते यतः सा प्रकाशरूपाऽह्लादिनीशक्तिरस्ति। न्नासादासीन्नोसदासीत्तम एकासीद्यावृत्तम् इति श्रुतिवचनात् स्वीयैरेवाद्यवर्णैः कालैः कालमेघैर्वा वृताऽपि शुभ्रत्वं सत्वमयत्वं पालयितृत्वं वाऽवभासयति, नक्षत्रराजस्येति पदस्यापि चरितार्थताऽस्मिन्नेवाऽस्ति। स्वतंत्रतया समस्ततया वा प्रयुक्तेन कालमेघैरिति पदेनापि एवमेव संसूच्यते। महाभारते दमयन्ती रूपोदार्यगुणोपेता सत्यपि नीलाभ्रपदार्थेनापि, तस्य पूर्व पदत्वेन गौणत्वेनापि च नक्षत्र राजस्य प्रभात्वं नावधारयितुं प्रभवति केवलं गौणत्वेन प्रयुक्तस्य पूर्वपदरूपस्य चन्द्रस्य लेखेवैव प्रस्फुटति, नीलाभ्रे नीलत्वं तावत्कालवर्णस्य विवर्त्तत्वं तत्वेन

---

१. बाल्मीक रामायण—सुन्दर काण्ड—सर्ग १५ श्लोक ३७।
२. म० भ० व० प० अ० ६५, श्लोक १६।

च लघुत्वं द्योत्यते, अनेन नीलत्वेन समवेतैरभ्रैरभ्रस्य विरलत्वमघनीभूतत्वं च सूच्यते तथापि तत्संवृता दमयन्ती केवलं चन्द्ररेखैव शोभते न तु नक्षत्रराजस्य प्रभेव। रेखात्वेन तस्याः क्षीणता मानवीयाकृतिमात्रता तया च विरहानुतापं सोढुमशक्यता सूच्यते। अतएव व्यासः दमयन्त्याः लोकसाधारणवं मनसि संसाध्य शिल्पपरिवर्तनैः सौन्दर्यस्यान्यथा करणं करोति।

अष्टमं श्लोकयुग्मम्—

**कामभोगैः परित्यक्ता हीना बन्धुजनेन च।**
**वारयत्यात्मनो देहं तत्समागमकांक्षिणी॥**[1]

\+ + + +

**कामभोगैः प्रियै हीनां हीनां बन्धु जनेन च।**
**देहं धारयतीं दीनां भर्तृदर्शन कांक्षया॥**[2]

रामायणीयममुं श्लोकमवलोक्य प्रतीयते यत्सीता कामभोगैः परित्यक्ता अस्ति न च तस्यां तस्य कामभोगस्य प्रियता वर्तते। दमयन्ती अपि कामभोगैः हीनाऽस्ति किन्तु तस्यां प्रियेरितिविशेषणत्वेन कामभोगस्य प्रियता स्फुटं परिलक्ष्यते, सीता तत्समागमकांक्षिणी अस्ति तदिति सर्वनाम पदमत्र तत्तत्समस्तगुण विशिष्टेन रामेण किम्बा तदिति पदं ब्रह्म रूप रामेण सह परामृशति तस्या गमन मात्रेण तस्याः परिखेदं साधु दूरी भविष्यति खलु, इति विश्वासभावेन तत्समागमकांक्षता सीतायां शीलत्वेन स्वभावत्वेन च प्रतिभाति तत्सभागमाकांक्षा शीलमस्या इति व्युत्पत्तिलभ्यार्थत्वात्। अतएवात्मनो देहं धारयति। महाभारते दमयन्ती केवलं भर्तृत्वगुणविशिष्टस्य नलस्य चक्षुरीन्द्रियविषयी करणकांक्षया देहं धारयति। स्पष्टतः द्वयोरिन्द्रिय व्यापारः विविक्ततयाऽव भासते, महाभारतकारस्य ऋतस्विनी मतिः दमयन्त्याः विरहसौन्दर्यं लोकभूमावतार्यानुभावयति।

नवमं श्लोकयुग्मम्—

**भर्ता नाम परं नार्या भूषणं भूषणादपि।**
**एषा विरहिता तेन भूषणार्हा न शोभते॥**[3]

---

१. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक २४।

२. म० भा० व० प० अ० ६५ श्लोक १७।

३. बाल्मीकि रामायण—सुन्दर काण्ड-सर्ग १६ श्लोक २६।

+ + +

**भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।**

**एषा विरहिता तेन शोभनापि न शोभते ।।[१]**

इहापि सत्यामपि समानतायामीषच्छिलप विच्छित्या भाव सौन्दर्यमितरत इतरं क्रियते । द्वयोः श्लोकयोः सामान्य वाक्येन विशेष वाक्यस्य समर्थनत्वादर्थान्तरन्यासोऽलंकारः प्रस्फुटः । किन्तु रामायणे सामान्ये वाक्ये भूषणादपि भूषणमिति वाक्यविशेषणविन्यासात् भर्ता उत्तरोत्तरोत्कर्षशालिन परम भूषणत्वेनाख्याप्यते । येन विना भूषणार्हासीता न शोभते, भूषणार्हात्वेन सीतायाः भूषणयोग्यत्वं सूच्यते, यच्चभूषणं स्वस्वामिभावसम्बन्धात्प्रकाश्यप्रकाशकभावसम्बन्धादलंकार्यालंकारकभावसम्बन्धात्साहचर्यभावसम्बन्धात् वा महाभूषणेन विना यथा न शोभतेऽथ चाकिंचित्करं भवति तथैव सीता एतेभ्य एव सम्बन्धेभ्यः: परभूषणेन रामेण बिना न शोभते सर्वथाऽकिंचित्करा वर्तते ।

परमत्र महाभारते सामान्ये वाक्ये भूषणैर्विना भूषणमित्येतेन भूषण परम भूषणयौः विनेतिपदयोगात् कोऽप्युपर्युक्तः सम्वन्धः न संगच्छते एवं भूषणस्याश्यथाकरणेन भर्तुः परमभूषणत्वभावः श्लथते तेन च विरहिता दमयन्ती शोभनापि न शोभते । तत्र सीता भूषणार्हा रामश्च परमभूषणमित्यनयोः साक्षात्भूष्य भूषणभावः सम्बन्धः अत्र च दमयन्ती शोभना नलश्च अन्यथाभूतपरमभूषणमित्यनयोश्च साजात्य सादृश्य सम्बन्ध फलतः तत्र सम्बन्धे प्रकृतिपुरुषत्वं जड़चेतनत्वं द्योत्यते अत्र सम्बन्धे च प्रत्येकपर्याप्ततद्विशिष्ट धर्मत्वं द्योत्यते । अनेन शोभनपरमभूषणयोः प्रत्येक पर्याप्ततद्विशिष्ट धर्मत्वेनाहंवादिनो देहाभिमानिनो जीवस्य धर्म उद्बुद्ध्यते । अतः पदपरिवृत्ति वलेन व्यासः दमयन्त्याः विरहसौन्दर्यं तत्वतो निरूपयितुं प्रयत्नवान् ।

दशमं श्लोकयुग्मम्—

**दुष्करं कुरुते रामो हीनो यदनया प्रभुः ।**

**धारयत्यात्मनो देहं न दुःखेनावसीदति ।।[१]**

— — — —

**दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः ।**

**धारयत्यात्मनो देहं न शोकेनावसीदति ।।[२]**

---

२. म० भा० व० प० अ० ६५, श्लोक १८ ।

१. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक २७ ।

२. म० भा० व० प० अ० ६५ श्लोक १९ ।

नायकयोः रामनलयोरपि सौन्दर्य विश्लेषेण श्लोकावेतौ समानौ प्रतीयते । भावयोजना, वाक्य योजना, विरहजास्थितिश्चोपरिष्टात् अनुविधीयमानेव प्रतिभाति किन्तु व्यासेनोन्नीयमानं भावकल्पनं पदपरिवर्तनदिशा तत्संश्लेषणं च नूनमेव कर्त्तृत्व सामर्थ्यं विश्लेषयति येन नलः सहज भावेन लोकानुभूयमानो भवति । रामोऽपि नलश्चापि सीतया दमयन्त्या च विना आत्मनो देहं धारयति किन्तु रामः सर्वसामर्थ्यद्योतक प्रभू विशेषण विशिष्टतवात् दुखेःनापि नावसीदति अत एव दुष्करं कुरुते परन्तु नलः शोकेनैव न तु दुःखेन नावसी दति अतएव न केवलं दुष्करं प्रत्युत् अत्यर्थं दुष्करं कुरुते, अलौकिक सामर्थ्य रहितत्वात् । अत्र व्यासः कर्त्तत्व वैशिष्ट्यं प्रभुरिति पदं समुत्सार्य तत्स्थाने क्रियात्व वैशिष्ट्यम् "अत्यर्थमिति" पदेन संस्फोटयति येन समर्थकर्त्तृत्वभावे क्रियाविशेषणसद्भावे च नलस्य दुष्करत्वमतिशयेन प्रत्ययायितं सत् रामात् तद्दुष्करणाच्च स्वकं नलं च विभजते तथा च लोकभावं समुत्सृजति । तत्र प्रतिकूल वेदनीयं दुःखभिति लक्षणत्वात् दुःखेनेति पदेन सामान्य दुःखत्वं संसूच्यते येन रामस्य कृते प्रयुक्तं विशेषण "प्रभुरिति पदं" सार्थकं सिद्ध्यति, अत्र शोकेनेति पदेन तद्दुःखसामान्यांशत्वं द्योत्यते येन नलस्य कृते प्रभ्वादिविशेषणरहितत्वमथ च दुष्करमित्यस्य अत्यर्थमिति विशेषणं मानवीय सम्वेदनं स्फीतयितुं साधु समुपपादितम् ।

एकादशकं श्लोकयुग्मम्—

**इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ।**
**सुखार्हां दुःखितां दृष्ट्या ममापिव्यथितं मनः ।।**[1]

— — — —

**इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।**
**सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ।।**[2]

बालमीकेः सीता व्यासस्य च दमयन्ती द्व एवासितकेशान्ते स्तः, असितत्वं संयोगयोग्यत्वं केशान्तत्वं च प्रोषित भर्तृकात्वं सूचयति यतः केशस्यासितो धर्मः यौवनस्य प्रतीकोऽस्ति तथा च तस्य केशस्यान्तत्वमुन्मुक्ततया दृश्यमानतया च प्रोषितपतिकात्व धर्मस्य प्रतीकमस्ति । द्व एव सुखार्हे दुःखिते च वर्ण्यैते, सुखार्हात्वेनागमिष्यमाण सुखत्वं द्योत्यते । एवं प्रकारेण सीता दमयन्त्यौ समान

---

१. बालमीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक २८ ।

२. म० भा० व० प० अ० ६५, श्लोक २० ।

धर्मिण्यौ प्रतीयेते किन्तु रामायणे सीता शतपत्रनिभेक्षणा वर्तते । सीतायां ईक्षणोपमेयस्य कृते शतपत्रोपमाननैकतो भ्रू सौन्दर्यमपरतो न केवलमायतत्वमपितु समस्ताह्लादनविलसनादि धर्म सौन्दर्यमुद्घाटयति येन तस्याः सहिष्णुताशक्तिः दिव्या प्रतिमा च सिद्ध्यति एवं च व्यथितमिति पदस्य सेट् क्तान्तत्वेन तस्य व्यथनस्य भूतकालिकत्वं द्योत्यते ।

महाभारते च दमयन्ती शतपत्रायतेक्षणाऽस्ति, अत्रापि शतपत्रमेवोपमानं किन्तु आयातधर्मस्य स्फुटकथनात् उपमेयस्येक्षणस्य केवलमायताकृतिरेवोपमीयते न तु श्लक्षणताह्लादक विलसनादिधर्मः येन दुःसहविरह सन्तापतीव्रतया तस्याः आयताकृतावेवेक्षणमवशिष्टमित्यभिव्यज्यते । एवं चाग्रे वर्तमानकालिक व्यथत इति पदेन व्यथनस्य नैरन्तर्यात् दमयन्ती तस्याश्च द्रष्टा द्वावेवान्येषु धर्मेषु दिव्यौ सन्तावपि अत्रादिव्यावेव परिलक्ष्येते ।

द्वादशकं श्लोकयुग्मम् ।

**अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ।**
**राजा राज्यात् परिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥**[1]

— — — —

**अस्या नूनं पुनर्लाभात् नैषधः प्रीतिमेष्यति ।**
**राजा राज्य परिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥**[2]

अनयोर्द्वयोः प्रभूतं साम्यं दरी दृश्यते न किमपि वैषम्यं प्रतिभाति पुनरपि परिवृत्तद्वित्रैः पदैः ईषद्वैषम्यं समुन्मीलयितुं शक्यते यथा बाल्मीकि रामायणे राघवत्वेन वंशीयो गौरवः रघोः पराक्रमाद्यश्चोदबुध्यते येन "मेदिनीं प्राप्ये" तस्मिन् प्रकर्षार्थक प्रोपसर्गोपि चरितार्थो दृश्यते । महाभारते नैषधत्वेन निषधदेशीयो गौरवोऽवबुध्यते यस्य कृते केवलं लब्ध्वेति पदेन मेदिनी लाभ एव वरं पर्याप्तमिति प्रतीयते, द्वयोरेकस्मिन् पराक्रम मोहः अपरस्मिन् च देशमोहः राघवत्वान्नैषधत्वाच्च प्रतीयते ।

त्रयोदशकं श्लोकयुग्मम्—

**तुल्यशील वयो वृत्तां तुल्याभिजन लक्षणाम् ।**
**राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥**

---

१. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक २३ ।

२. म० भा० व० प० अ० ६५ श्लोक २३ ।

३. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग १६, श्लोक ५ ।

**तुल्य शील वयो युक्तां तुल्याभिजन संयुताम् ।**
**नैषधोऽर्हति वैदर्भी तं चेयमसितेक्षणा ।।**[1]

अत्रापि वैदेही राघवयौः वैदर्भिनलयोश्चोभयोः युगलयोः समस्त शिल्प दृष्ट्या विम्बानुबिम्वत्वं प्रतिभाति किन्तु व्यासेन कृतं यत्किंचित्परिवर्तनं ध्रुवमेव दमयन्ती नलौ भिन्न कोटिकौ विदधाति येनैतौ द्वौ पार्थिव गरिम्णाऽनुभूयमानौ सुशोभेते । वैदेही राघवौ शीले तुल्यो बयस् इति पदेन सौन्दर्यमभिव्यज्यते अतः सौन्दर्य तुल्यो वृत्त इति पदेन चरित्र सौन्दर्ये ततो च शक्ति सौन्दर्यमुज्जृम्भते अतः शक्तौ तुल्यौ दृश्येते न केवलमेतेष्वेवाभिजात्येलक्षणेऽपि द्वो तुल्यौ वर्तेते ।

महाभारते दमयन्ती नलौ शीले वयसि च तुल्यो किन्तु शक्त्यर्थक वृत्तपदोपेक्षणात् तयोः शक्ति रूपेक्षिता द्योत्यते, एवमेव तयोः शास्त्रीयमाभिजात्यं मिलतीति लक्षणपदेनाभिव्यज्यते । एतयोस्तु सामान्यं लक्षणपदाभावात् । रामायणे महाभारते च कर्त्तत्व कर्मत्वयोरपि प्रकृति परिवर्तनदिशा सौन्दर्यस्यान्यथाकरणं सुपुष्कलं दृश्यते तत्र रामायणे राघवत्वेन वंशीयो गौरवः रघोः पराक्रमश्चोपजन्यते वैदेही त्वेन चापि वंशीयो गौरवः विदेहस्यालोकसामान्यं तस्य च जीवन्मुक्तधर्मत्वं तथा च देहाभिमानरहितत्वमथ च सीतायाः भूमिजात्वमयोनिजात्वं चैतत्सर्वं भावजातमेकैकशः पुरोऽभिधावति । महाभारते नैषधत्वेन निषध देशीयो गौरवः तात्कालिकी परम्परा सीता च द्योत्यते । वैदर्भीत्वेनापि तदेव गौरवत्वं तद्देशविशिष्टस्य तात्कालिकी सीमा परम्परा च द्योत्यते । एवं सूक्ष्म विचारणायां सीतारामावलोकसामान्यौ चरित नायकौ सिद्ध्यतः अत एव विरह दशायाः प्रभाव ईषद्रूपेणैव दृश्यते दमयन्ती नलौ च लोक सामान्यौ चरित नायकौ स्तः फलतः विरहजन्यानुतापस्य प्रभावः अतिशयेन द्योत्यते ।

चतुर्दशकं श्लोकयुग्मम्—

**ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च राघवः ।**
**सद्वृत्तो निरनुक्रोशः शंके मद्भाग्य संक्षयात् ।।**[2]

× × × ×

---

१. म० भा० व० प० अ० ६५ श्लोक २३ ।

२. बाल्मीकि रामायण-सुन्दर काण्ड-सर्ग २६, श्लोक १३ ।

**ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा ॥**
**संवृत्तो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् ।**[1]

अत्र सर्वं वाक्य विशेषणं शिल्पं च समानं परिलक्ष्यते केवलं पुरुष वक्रतयैव व्यासः दमयन्तीं नलं चान्यथा करोति । अन्य पुरुषे राघव पदस्य प्रयोगेण राघवस्यानुक्रोशादिषु गुणेषु सामान्यत्वं तथा चाद्य दूरी भूतत्वं सूच्यते, अथ च मध्यमपुरुषे त्वमिति पदप्रयोगेण नलस्यानुक्रोशादिगुणे वैशिष्ट्यं व्यक्तिपरकं तथा चाद्यापि सान्निध्यं द्योत्यते । दूरीभूतराघवस्य कल्पने सीता तथैव शोभते यथा दमयन्ती मध्यमत्वेन संनिहित नल कल्पने । राघवस्यान्यपुरुषत्वेन तस्य सानुक्रोशत्वं निरनुक्रोशत्वं च व्यापि सामान्यं च प्रतीयते नलस्य मध्यम पुरुषत्वेन तस्यानुक्रोशत्वं निरनुक्रोशत्वमव्यापि विशिष्टं च संलक्ष्यते विशुद्धदिव्यदिव्यादिव्य प्रकृतित्वात् ।

एवं विधया साम्यभावहतो चतुर्दशयुग्मश्लोकान् सूक्ष्म विचारणाया भवलोक्य प्रतीयते यद्दमयन्ती सीमायाः तुल्यमूल्यतामादधती नलश्च रामस्य तुल्य मूल्यतामादधन्नपि व्यासस्य शैली वक्रतयाऽतथा भूतोऽनुभूयते किन्तु अनेनानुविधानेन नूनमेव व्यासः जनार्दनस्य रामस्येव नलस्य पुण्यश्लोकत्वं जगज्जनन्याः सीताया इव दमयन्त्याः पातिव्रत्यं च समुद्घोष्य तौ दमयन्ती नलौ प्रातः स्मरणीयो विदधाति ।

अस्तु रामायण महाभारतयोः साधु परिशीलनेन वाल्मीकेः व्यासस्य च वस्तून्मुखो भावः संस्पृश्यते, अयं च भाव संस्पर्शः पद संघटनात्मिकया रीत्या उद्धा पद पूर्वार्द्ध पद परार्द्ध वक्रतया प्रकरणप्रबन्धवक्रतयोपचारादिवक्रतया च संनिहित पदानां गरिमाणं परिज्ञाय कर्तुं शक्यते, या हि प्रयोगधर्मिता संप्रति शैली (स्टाइल) विज्ञानेनानुभूयमाना सती प्रयोगवादं सृजति सैव प्रयोगधर्मिता अनयोः बाल्मीकि व्यासयोरपि रामायणे महाभारते च सम्यगाप्नोति । तस्याश्च समाश्रयणेनैव द्वयोः ग्रन्थयोः साम्यं वैषम्यं च परिनिर्दिष्टं जातम् फलतः महाभारतस्य दमयन्ती नलौ रामायणस्य सीतारामयोः नेदिष्ठौ प्रतिभातः केवल मुभयोः प्रकृतिजन्यमेवान्तरं दृष्टिगोचरं भवति, अत एव रामवदेव नलोऽपि कलिजन्य दुरितोपशमने समर्थः सन् पुण्यश्लोकत्वं भजमानः समाम्नायते ।

---

१. म० भा० व० प० अ० ६७ श्लोक १४ ।

## षष्ठोऽध्यायः

# कथा ग्रन्थेषु नल चरितम्

सृष्टेरनन्तरं यावता कालेन मानवाः समुदायरूपेण जीवितुं प्रारब्धवन्तः तावता कालेनैव कथायाः प्रादुर्भावः समजायत । जीवनस्य सुदुःसहं संघर्षं कटु-तयानुभवतां मानवानां मनः पूर्णं दिनं यावत् कठिन परिश्रमानन्तरं आत्मरञ्ज-नमपेक्षते । यदा हि जनाः सायंकाले समवायत्वेनैकत्रोपविश्य सुखं कामयन्ते स्म तदा व्यतीतां घटनामेव परस्परमुक्त्वा श्रुत्वा दिनं च यापयन्ति स्म । सुखानु-धावनं मनसः सहजा प्रकृतिरस्ति, येन यत्र यावच्च सा प्रकृति सुखमाकल्पयति तेन तत्र तावच्च तमनुसन्दधाति । इयं सुखानुभूतिः कथने श्रवणे चापि भवति । कथायाः तत्तत्घटकावयवैः देशकाल पात्रैः विभिन्नकटुमधुरचरित्रैश्च सह ताद-वस्थ्यमुपगताः मानवानां मानसा कथामयाः सन्तः आत्मानं परिष्कुर्वन्ति कथायाः प्रवाहे देहं गेहं चापि विस्मरन्ति । कथायाः अस्मिन् श्रवणे कथने चान्तःकरणस्य कौतूहलात्मिका वृत्तिः जागर्ति या हि कथायाः मूलं तत्वं वर्तते । कथायाः कला-याश्च मनोरंजनं जिज्ञासाशमनञ्चेमेद्वे प्रमुखे प्रयोजने स्तः ।

कथा साहित्यं नूनमेवेम एव द्वे प्रयोजने संलक्ष्य शनै-शनै भिन्नया स्वतंत्र धारया प्रवाहितं जातम् । वैदिकेष्वाख्यानेष्वपि कथा साहित्यस्य सूक्ष्मं रूपं परिलक्ष्यते । नचिकेतोपाख्यानं यमयमीसंवादस्तथा चान्यानि स्थलानि वैदिक-वाङ्मये समुपलब्धानि यानि कथायाः आद्यस्वरूपाणि वक्तुं शक्यन्ते । इमान्येव कालान्तरे क्रमशः इतिहासपुराणयोः रूपे वृहत्तराणि जातानि । पौराणिकंऐति-हासिकं चोपाख्यानं समाजे विशेषेण समादृतमभवत्---यतोहि तस्य समुद्देशः न केवलं मनोरंजनमेव प्रत्युत् जीवनस्य जिज्ञासाभूतानां पुरुषार्थ चतुष्टयानां धर्मार्थ काममोक्षाणां सरलोपायेन संप्राप्तिरप्यासीत् फलतो जनाः स्वस्वरूपोपलाभं स्व जिज्ञासोपशमनं मत्वा तत्रैव मोदन्ते स्म । पौराणिकाख्यानानन्तरं यदा जैनधर्मः बौद्धधर्मश्च प्रादुरभूतां तदा तयोरपि प्रवर्तकाः तदनुवर्तिनश्च जनमनांसि समा-न्दोलयन्तीं एनामेवसरणिमनुभूय कथा प्रबन्धं प्रणीतवन्तः । पिटकेषु जातकेषु च कथानामुदात्तानि चरित्राणि बहुलतया विद्यन्ते । अनयोः ग्रन्थयोः नैतिकः संदर्भो-ऽद्यावधि अक्षुण्ण एव ।

संसृतेः न काप्येतादृशी जातिः न च कोऽप्येतादृशो देशः यस्य कथाः न सम्भवन्ति। प्रत्येके जनाः कथा माध्यमेनैव स्वकमतीतं स्वकां कल्पनां स्वकं दर्शनं च स्थिरीकुर्वन्ति। सिन्धुवादस्य यात्रावृत्तान्तानां रोचकं विवरणं; मिस्रस्य सम्राजां कथाः, रोमदेशस्य यूनानदेशस्य च प्राचीना गौरव शालिन्यः गाथाश्चाधुनाऽपि समाजे तयैवोत्सुकतया तल्लीनतया च प्रस्तूयन्ते कथ्यन्ते श्रूयन्ते च यथा पूर्वमकल्पयन्।

विश्वस्य प्राचीनतमायाः संस्कृतेरधिष्ठानस्य भारतवर्षस्य आदि संस्कृत वाङ्मयेऽपि कथायाः सुविपुलं भाण्डारमापूर्णं वर्तते। वैदिक वाङ्मयादारभ्यार्वाचीनं कालं यावद्वयं कथा भाण्डारमिदं स्वीकर्तुं शक्नुमः वैदिक वाङ्मयानन्तरं पौराणिकैतिहासिक युगे कथा बाहुल्यमासीत् किन्नु तां कथाः शास्त्रीयत्वात् वैदिकतत्त्वोपबृंहणत्वाच्च जनसाधारणाय दुरूढ़ाः संजाताः। ततो जैन बौद्धयोः मतानुवादेन सम्बद्धानां कथा साहित्यानां समुद्भवोजातः। पालिप्राकृतासु जनभाषासु वर्णितत्वादिमाः कथाः बहुर्चचिताः समभूवन्। व्यापकतया प्रचार प्रसारत्वाज्जैनधर्मस्य बौद्धधर्मस्य च विजय वैजयन्ती सुदूरान्देशान्यावदुद्धूयते स्म। कथा साहित्यमिदं साम्प्रदायिकस्य धर्मस्य प्रचारार्थमेव समुद्दिष्टं जातम्। कथा तु मनोरंजनमेव साधयति। मनोरंजन दृष्ट्या सूपनिबद्धं कथा साहित्यं परवर्तिनि काल एवोपवर्णितम्। उपलब्धस्य कथा साहित्यस्याधारेणेदं द्विधया लिखितं दृश्यते, प्रथमं तावत्ते कथा ग्रन्थाः येषु नैकाः मनोहराः कथाः सन्निविष्टाः आसन् द्वितीयं तावत्ते येषु काचिदेकैव कथा विस्तरेणोपवर्णितासीत्। एतयोः द्वितीयः कथा प्रबंधः वाणभट्टस्य कादम्बरीव सुबन्धोः वासवदत्तेव पं० अम्बिकादत्त व्यासस्य च शिवराज विजय इवोपन्यासेन संज्ञायते। कथा साहित्येन संपृक्तामिमां विधां न मन्येत चेत्तर्हि प्रथमप्रकारको ग्रन्थ एव कथा साहित्येन गृह्यते।

साहित्यस्यास्मिन् क्षेत्रेऽपि संस्कृतो वाङ्मयः सुसमृद्धायाः परम्परायाः प्रधानो वाहकोऽस्ति। अनेके सिद्धहस्ताः कथाकाराः स्वकीयाभिः रचनाभिः भारतीभण्डारं संवर्धयामासुः। कथासाहित्ये सर्वोत्कृष्ट ग्रन्थप्रसंगे सर्व ऐकमत्येन महाकवि गुणाढ्य कृतां वृहत्कथां मुक्त कण्ठतया प्रशंसन्ति। दौर्भाग्यवशात् वृहत्कथायाः कोऽप्यंशोऽद्य नोपलभ्यते। परवर्तिनः सर्वे कथा संग्रहकाराः गुणाढ्य कृत वृहत्कथायाः अधमर्णत्वं स्वीकुर्वन्ति। एकया किम्बदन्त्या गुणाढ्यः राज्ञः

हालस्य (शालिवाहन) मंत्री आसीत्, राजा संस्कृत व्याकरणस्य पण्डितो भवितुं वांछतिस्म, गुणाढ्यः चत्वारि वर्षाणि यावच्छ्रमपूर्वकं पठनार्थं तमवोचत् किन्तु कश्चिन्मात्सर्य दोषयुक्तो मंत्री षण्मासाभ्यन्तर एव तं पण्डितं कर्तुं वचनं प्रादात् । स्वकुलदेव्याः सरस्वत्याः कृपयाः सो मंत्री राजानं पण्डितं कृतवान् । परिणामतो गुणाढ्यः तस्मादेव दिनात् संस्कृतं वक्तुमत्यजत् वनं गत्वा कोल-भिल्लकिरातैः सह न्यवसत्, तत्रैव सः पैशाचीं भाषा ज्ञातवान् । पैशाचीभाषायामेव गुणाढ्यः "बड्डकहा" इति कथां विरचितवान् सप्तखण्डेषु विभक्ते तस्मिन् विपुलकाये ग्रन्थे लक्षाधिकाः कथाः संगृहीताः आसन् । प्रणयनान्तरं सः तं ग्रन्थं राज्ञः पार्श्वे प्रेषयामास किन्तु पैशाची भाषात्वात् सोऽनादृतः प्रत्यावर्तितश्च । निरतिशयो दुःखी गुणाढ्यः वन एवाग्निं प्रज्ज्वाल्य प्रतिपृष्ठं पठन्नग्नये प्रायच्छत् । अन्ते यदा कश्चिदेव भागोऽवशिष्टो जातस्तदा राजा समागत्य गोपयामास ।

गुणाढ्यस्य वृहत्कथायाः सोऽपि भागोऽद्य लुप्तप्रायोऽस्ति किन्तु वृहत्कथामेवोपजीव्यां मत्वा रचिताः अनेके ग्रन्थाः अधुनाप्युपलभ्यन्ते येषु क्षेमेन्द्र कृता वृहत्कथा मंजरी, सोमदेव कृत कथासरित्सागरः बुधस्वामिविरचितो वृहत्कथा श्लोक संग्रहश्चास्ति । गुणाढ्यस्य चर्चा त्रिविक्रमेण स्व नल चम्प्वां कृताऽस्ति । कथा साहित्येऽन्ये क्षेमेन्द्रस्य भारतमञ्जरी दण्डिनो दशरूपकं एवमेव बेताल कथेत्यादयो ग्रन्थाः प्राप्नुवन्ति ।

कथा साहित्ये प्रधानतया चर्चितौ द्वावेव ग्रन्थौ वर्तेते—वृहत्कथामंजरी, कथासरित्सागरश्च । वृहत्कथाश्लोक संग्रहोऽपि क्रमेऽस्मिन्नेवानेतुं शक्यते किन्तु अनयोर्द्वयोर्तुलनायां तस्याख्यापनं नाभवत् फलतो हि वृहत्कथामंजर्यां कथा सरित्सागरे चोपवर्णितस्य नलचरितस्य विषय वस्तु एवात्र विवेचनीयमस्ति ।

वृहत्कथामंजरी कथा सरित्सागरश्चेत्येतौ कथाग्रन्थावद्वितीयौ स्तः । एतयो सरलता, प्रवाहमयता रसप्रवणता च सर्वातिशायिनी वर्तते यद्यप्येतयोः संक्षेपेणैव कथा प्रसंगाः वर्णिताः तथाप्याभ्यां वर्णितेषु चरित्रेषु सौन्दर्यमाधुर्ययोः मंजुलं संगमनं परिलक्ष्यते । नलचरितस्य समुपवर्णनदृष्ट्या इमौद्वावेवग्रन्थौ विशेषतः समुल्लेखनीयौ स्तः । यद्यपीह संक्षेपेणैव नलचरितस्येतिवृत्तं प्रस्तुतं वर्तते तथापि तद्वर्णनमतीव शिल्प सौन्दर्याधायकत्वेन नैजं प्रभावोत्पादकत्वं वैशिष्ट्यं च समर्थयति । साम्प्रतमनयोर्द्वयोरेव ग्रन्थयोरुपनिबद्धं नलचरितं तुलनात्मकाध्ययन

दृष्ट्योपवर्ण्यते यतो हि विद्वत्समुदाय इमावेव द्वौ ग्रन्थौ विशेष रूपेण प्रशस्येते। प्रथमं तावत् बृहत्कथामंजर्याः नलचरितं पश्चाच्च कथासरित्सागरोप वर्णितं नलचरितं परीक्ष्यते।

## बृहत्कथामंजर्यां नलचरितम्

बृहत्कथामंजर्याः प्रणेतुः महाकवेः क्षेमेन्द्रस्य नाम संस्कृत वाङ्मये सुविख्यातमेव। गुणाढ्यस्य बृहत्कथायामाधारितायाः बृहत्कथामंजर्याः कृते, तथा च महाभारतीय कथा संकलनकारिकायाः भारतमंजर्याः कृते प्रख्यातयशा क्षेमेन्द्रः साहित्य शास्त्रस्य लक्षणग्रन्थरूपे "औचित्यविचार चर्चा" इत्यस्य ग्रन्थस्य कृतेऽपि सादरं सश्रद्धं च स्मर्यते। महाकविः क्षेमेन्द्रः काश्मीर देशे राज्ञः अनन्तस्य, तत्पुत्रस्य कलशस्य च (१०२८ ई०-१०६३ ई०) राजकविरासीत्। क्षेमेन्द्रविरचितं सुबहुलं साहित्यं भारतीय भाण्डागारस्य श्रीवृद्धिं करोति येषां— १. अमृततरंग काव्यं, २. अवसर सारः, ३. कनकजानकी, ४. औचित्य विचार चर्चा, ५. कवि विलास, ६. कविकण्ठाभरण, ७. चतुर्वर्ग संग्रह, ८. चार चर्या, ९. चित्र भारत नाटकं, १०. दर्प दलनम्, ११. दशावतार चरितम्, १२. देशोपदेशः, १३. नीति कल्पतरु, १४. नीति लता, १५. पद्यकादम्बरी, १६. पवन पंचाशिका, १७. बृहत्कथामंजरी, १८. बोधिसत्त्वावदान कल्पलता, १९. भारतमंजरी, २०. मुक्तावली, २१. मुनिमतमीमांसा, २२. कविकर्णिका, २३. रामायण मंजरी, २४. ललितरत्नमाला, २५. लावण्यवती, २६. वात्स्यायनसूत्रसारः, २७. विनयवल्ली, २८. व्यासाष्टकम्, २९. शशिवंश महाकाव्यम्, ३०. समय मातृका, ३१. सुवृत्त तिलकम्, ३२. सैव्य सेवकोपदेशः इत्यादि ग्रन्थाः सन्ति। उपर्युक्तेषु ग्रन्थेष्वधिकांशाः प्राप्यन्ते परं कतिपयेः अधुनाऽपि लुप्त प्राया एव।

महाकविना क्षेमेन्द्रेण कथासंग्रहकारस्य रूते वाल्मीकेः रामायणस्य, व्यासस्य महाभारतस्य तथा गुणाढ्यस्य बृहत्कथायाः वर्णनं मकारि। महाभारतं रामायणं च समुपलब्धमेवाधुनाऽपि। अतस्तयोरुपरि समाधारितयोः कथा प्रबन्धयोस्तादृशो प्रचारो नाभवत्, किन्तु गुणाढ्यस्य बृहत्कधायाः लुप्तवेन तस्या आधारत्वेनोपवर्णितायाः बृहत्कथामंजर्याः प्रचुर प्रचारः समजायत्। कथानां सुविपुलं भाण्डारमत्र प्राप्यते। अस्मिन्नेव कथा भाण्डारगारे नलचरित रत्नमपि स्व प्रभां समुद्भासयति। नलचरितस्येतिवृत्तगतसौन्दर्येणाकृष्टो

महाकविः अस्योपवर्णनं चकार । अत्र क्षेमेन्द्र कृतस्य नल चरितस्य कथा प्रसंगः प्रस्तूयते, ततः परं तुलनात्मकदृष्ट्या महाभारतस्य बृहत्कथा मंजर्याश्चाध्ययन संविधास्यते ।

बृहत्कथामंजर्यां नलस्यैतिवृत्तमित्थमाप्यते—

निषधेषु नलोनाम भूपालो ललिताकृतिः ।
अभूद्गुणगणोद्यानविकाश कुसुमाकरः ।। ३३१ ।।
मृगया रसिकः सोऽथ कदाचित्कनक प्रभान् ।
बबन्ध हंसांस्ते चाहुर्मुञ्चास्मांस्तव महीपते ।। ३३२ ।।
सुता विदर्भ राजस्य भीमस्यास्ति सुमध्यमा ।
दमयन्तीति विख्याता वयं तत्केलि सारसाः ।। ३३३ ।।
ते वयं भवता मुक्ताः करिष्यामः प्रियंतव ।
भविष्यसितृतीयेन तन्मुखाम्भोजषट्पदः ।। ३३४ ।।
इतिश्रुत्वैव तत्याज हंसान्व्याप्तो मनोभुवा ।
श्रुतेनापीप्सितं वस्तु कस्य धैर्यं न कर्षति ।। ३३५ ।।
ते गत्वा दमयन्त्यै तं कथयन्तो न्यवेदयन् ।
सौभाग्यमिव साकारं प्रत्यक्षमिव मन्मथम् ।। ३३६ ।।
शनकैर्विरहक्षामौ तौ गुणकर्णनान्मिथः ।
बिनैर्बूभवतुः प्रौढ़ः शरताकाण्ड पाण्डुरौ ।। ३३७ ।।
अथराज सुताध्यात्वा नलसंगमवांछया ।
नृपेभ्यः प्राहिणोद्दूतान् पितुर्वाक्यात्स्वयंवरे ।। ३३८ ।।
समागतेषु भूपेषु लोकपालाः समाययुः ।
शक्राद्यानारदगिरा कन्या वरण लोलुपाः ।। ३३९ ।।
साभिलाषां नले ज्ञात्वा दमयन्तीं दृढव्रतां ।
तद्रूपा एव विविशुः स्वयंवर सभां सुराः ।। ३४० ।।
निर्विशेषान्नलान् दृष्ट्वा दमयन्ती सुविस्मिता ।
छायाद्वितीयमवृणोत् परिज्ञाय नलं धिया ।। ३४१ ।।
ज्ञात्वादेवाः स्वमाकारं विधाय प्रददुर्वरान् ।
नलरूपाय संतुष्टाः स्मरणाच्च सर्सनिधिम् ।। ३४२ ।।
दमयन्तीं समादाय स्वपुरं नैषधे गते ।
द्वापरेण कलिः सार्द्धं कन्यालोभात्समाययौ ।। ३४३ ।।

वृतस्तया नलो राजा गच्छ वृत्तः स्वयंवरः ।
श्रुत्वेतिदेव वचनं बद्धः प्रायात्कलिर्नलम् ॥ ३४४ ॥
तदाविष्टः सनृपतिः सगोत्रेशाषशत्रुणा ।
केनापिपुष्कराख्येन जित्वारण्यं विवासितः ॥ ३४५ ॥
बमयन्त्या ससहितः काननं प्राप्य निर्जनम् ।
गृहीतुं वाससा हंसान क्षुत्क्षामः क्षिप्रमुद्ययौ ॥ ३४६ ॥
कलिद्वापर निर्विष्टास्ते हंसास्तूर्णमंशुकम् ।
जहुस्तस्य ततः सो पिदयितार्धाम्बरंश्रितः ॥ ३४७ ॥
तावेक वसनाद्दूरं गत्वा प्राप्य वनान्तरम् ।
निषण्णौ स्थण्डिले तृष्णाशुष्यद्वदनपंकजौ ॥ ३४८ ॥
दमयन्त्यां प्रसुप्तायां नलः कलिविमोहितः ।
कृत्वाशस्त्रेण वस्त्रार्धं प्रययौ दैव विप्लुतः ॥ ३४९ ॥
सगत्वा पुनरभ्यायात्पुनः प्रायात्स दुःखितः ।
दोलाविलोल हृदयो रागान्मोहाच्चभूपतिः ॥ ३५० ॥
त्रायस्वेति समाकर्ण्य शब्दं गत्वा वनान्तरम् ।
दावानलदुज्जहार कर्कोटं पन्नगोत्तमम् ॥ ३५१ ॥
ततस्तद्विषफूत्कारैर्यातः क्षिप्रंविवर्णताम् ।
ह्रस्वो विटकं वदनः सो भवन्नृपशेखरः ॥ ३५२ ॥
ऋतुपर्णस्य नगरीमहोध्यां प्राप्य दुःखितः ।
प्राप्तनागांशुकस्तस्थौ सूदसारथ्य कर्मणि ॥ ३५३ ॥
दमयन्ती प्रबुद्धापि प्राणनाथविनाकृता ।
विललापाति करुणं दृषदामपिदारणम् ॥ ३५४ ॥
क्वासि हृदयाधीश फुल्लपद्मदलेक्षण ।
तां दुष्टाजगरेणाशु ग्रस्तां सा क्रोशतीं मुहः ॥ ३५५ ॥
तामाकर्ण्यागतो व्याधोहत्वा दुष्टं मुमोचताम् ।
ततः कामातुरो भूतः कोपाद्भस्म चकार तम् ॥ ३५६ ॥
इति क्षामाक्षरं बाला शोचन्तीसा ययौ शनैः ।
कालेन वैदर्भ पुरीं पितुः प्राप्य सुमध्यमा ॥ ३५७ ॥
एकवेणी वृतातस्थौ नल संगम वाछंया ।
साततः प्राहिणोद्विप्रान् विचेतुं निषधाधिपम् ॥ ३५८ ॥

पृथिवीं ते च तद्गाथां गायन्तो बभ्रमुश्चिरम् ।
ऋतुपर्ण पुरे धीमानेको विप्रश्चरुन्मुहुः ।। ३५९ ।।
जगौ विगुणयंस्तत्र नलस्याद्भुत चेष्टितम् ।
मनोरथमपि छित्वा वा सो द्वे गतो ह्यसि ।। ३६० ।।
प्राणेश्वर प्रियांभार्यां क्वनु त्यक्त्वा विमोहिताम् ।
द्विजस्येत्यथ सारथ्यच्छन्नस्तुरग मन्दिरम् ।। ३६१ ।।
श्रुत्वैव विकटाकारः स्रास्त्रो भूद बाहुकाभिधः ।
सो ब्रवीद्दैवबधानां दुष्कर्म हृत चेतसाम् ।। ३६२ ।।
निकारं करुणापूर्णाः सहन्तेसरलाशयाः ।
बाहुकस्येतिवचनं श्रुत्वा साश्रु दृशोवचः ।। ३६३ ।।
अयोध्यां ब्राह्मणौ गत्वा दमयन्त्यैन्यवेदयत् ।
सापि स्वयंवर व्याजादृतुपर्णं मही भुजम् ।। ३६४ ।।
एकेनैव निनायाह्ना लंघितानेक योजनम् ।
साबाजिहृदयज्ञेन बाहुकेनाश्ववाहिना ।। ३६५ ।।
ध्यात्वायोध्याधिपं प्राप्तं नलं सूतमशंकत् ।
ऋतुपर्णं प्रदिष्टं च प्राप्याक्ष हृदयं नलः ।। ३६६ ।।
नागांशुकेन तत्याज बाहुकस्तां विरूपताम् ।
कर्कोट विषबन्धो थ तच्छरीराद्विनिर्गतः ।। ३६७ ।।
कलिर्भिमीतकतरुं विवेशमय विह्वलः ।
ततः स्वरूप सुभगं नलं पद्मदलेक्षणम् ।। ३६८ ।।
दमयन्ती समासाद्यहृष्टानिर्वृतिमाययो ।
नलो पि स्वपुरं गत्वा सानुगोवल्लभासखः ।। ३६९ ।।
द्यूतेन पुष्करं जित्वा निजं राज्यमवाप्तवान ।
इति वैदर्भतनया दयितं प्राप सुन्दरी ।। ३७० ।।
त्वमप्येवं महीपालं द्विजेन्द्रं पतिमाप्स्यसि ।। ३७१ ।।

(इत्यन्तर्नलाख्यायिका) इति श्री क्षेमेन्द्र विरचितायां वृहत्कथा मंजर्यां अलंकारवती नाम पंचदशो लम्बकः । पृष्ठ ५३७ से ५४० निर्णय सागर प्रेस सन् १९३१

"निषधदेशे ललिताकृतिः नलोनाम भूपालो बूभव । मृगयारसिकाः स एकदा स्वर्ण हंसान् जग्राह । ते हंसाः ऊचुः—राजन् वयं विदर्भ राजस्यपुत्र्याः दमयन्त्थाः केलिसारसाः स्म । साऽतीव सुन्दरी, भवान् मुञ्चत्वस्मान् । वयं त्वां

तस्याः प्रशंसाभाजनं संविधास्यामः। नलस्तान् मुमोच। तस्मादेवकालात्सः कामवेदनया खिन्नमना सञ्जातः। "सत्यमेव, वांछितस्य वस्तुनः श्रवणमात्रेणैव नाम नोत्कण्ठ्यते।" हंसाः दमयन्तीमुपागत्य कन्दर्पस्य इव सौन्दर्यनिधानस्य नलस्य वर्णनं चक्रुस्तेन साऽपि नलाय व्याकुलतामादधे। दमयन्त्याः पिता भीमः स्वयंवरं रचितवान्। अनेके राजानः तत्र समाजग्मुः, शक्राद्या देवा अपि नारद मुखात् श्रुत्वा समुपागमन्। नलदमयन्त्योः परस्परानुरागं चाकर्ण्य ते नलस्यैव रूपे तत्रोपस्थितवन्तः। अन्ते छायात्वेन नलं परिज्ञाय सा तं वृतवती। देवाः पातिव्रत्येन संतुष्टाः सन्तः वरान् प्रदायाव्रजन्। नलोऽपि दमयन्तीमादाय नैषधं प्रति जगाम।

अपरतः स्वयंवरात्प्रतिनिवृत्ताः देवा मार्गे कलिद्वापरौ दृष्ट्वा 'वृत्तः स्वयंवरः। तयानलोवृत्तः' इत्युक्त्वा ययुः। क्रुद्धः कलि नलस्यशरीरे प्राविशत्। स्वगोत्रेण शत्रुणा पुष्करेण द्यूते सर्वमपहरता नलो निष्कासितः। दमयन्त्या सह वने परिभ्रमता नलेन यदा पक्षिग्रहणार्थं स्वोत्तरीयकं प्रक्षिप्तं तदा कलिप्रेरितास्ते हंसाः वस्त्रमप्यादायोत्पतन्। दुःखी नलः स्वपत्न्याः वस्त्रेणैव लज्जा निवारणं चक्रे। एक वस्त्रावेव तौ सुदूरं वन प्रान्तं सम्प्राप्त-वन्तो, तत्र स्थण्डिले शयानां दमयन्तीं परित्यज्य नलः निरगच्छत्। वने व्रजन्नेव सः त्रायस्व त्रायस्वेति शब्दं श्रुत्वा तत्रगत्वा दावानलात्कर्कोटकं नागमरक्षत् परं तद्विषफूत्कारैः सो विवर्णोऽभवत्। ततः सः ऋतुपर्णस्य गेहे धृतनागवस्त्रः सूदसारथ्यकर्मणिन्यवसत्।

जाग्रता दमयन्ती नितरां परितप्यमानाऽनाथतयैतेतस्ततः 'क्वासि नाथेति' रुदन्ती नलमन्वेषयत्। वने तामजगरः एको जग्राह। एकः व्याधः तामरक्षत् परं कामुकः सः दमयन्त्या भस्मीकृतः। कथं कथमपि सावराकी स्वपितुः गेहे कुण्डिनपुर्यां समागतवती। ततः सा नलान्वेषणाय दूतान् प्रैषयत्। गाथां गायन्तश्चाराः सर्वत्र बभ्रमुः। ऋतुपर्णस्य नगरे एको ब्राह्मणः यदा गाथाम-गायत्—

**'मनोरथमपिछित्वा वाससोऽर्द्धं गतो ह्यसि।**
**प्राणेश्वर प्रियां भार्यां क्व नु त्यक्त्वा विमोहिताम्॥'**

तदातस्य वचनं श्रुत्वा अश्वशालायामाच्छन्नो बाहुकाख्यो नलः रुरोद; अवदच्च—

**'......' दैवदग्धानां दुष्कर्म हत चेतसाम् ।**
**भिकारं करुणा पूर्णाः सहन्ते सरलाशयाः ॥'**

बाहुकस्य वार्तां श्रुत्वा ब्राह्मणस्ततसर्वं दमयन्त्यै न्यवेदयत् । दमयन्ती पुनः स्वयंवरव्याजेन ऋतुपर्णं एकेनैवाह्ना विदर्भे समागन्तुं निमन्त्रयामास । अश्वहृदय-ज्ञस्य बाहुकस्य रथ संचालनं दृष्ट्वार्तुपर्णः तस्मिन् नल सन्देहं कृतवान । मार्ग एव बाहुकः ऋतुपर्णादक्षहृदयं जग्राह । तदा तत्रैव नागराजदत्तं वस्त्रं परिधाय नैजं रूपमवाप्तवान् । कर्कोटकविषदग्धः कलिस्तस्य शरीरान्निर्गत्य विभीतक तरौ प्रविष्टोऽभूत् । नलं स्वसमक्षं पुनः प्राप्य दमयन्ती प्रहर्षिता बभूव । नलोऽपि स्वदेशं गत्वा द्यूते पुष्करं विजित्य स्वं राज्यं प्राप्तवात् ।'

उपर्युक्तेन कथा भागेन ज्ञातुं पायते यत्कथा संग्रह कारेण संक्षेपण दृष्ट्या यत्र तत्र वस्तु परिवर्तनं वस्तुलोपश्च विहितः । निःसन्दिग्धतयाऽनेन लोपेन परिवर्तनेन च कथा प्रसंगस्य गतित्वरः संवर्द्धते परं सुविस्तृतायाः कथायाः स्वरूपमत्राधिकतया संकुचितं जातम् ।' इतिवृत्ते संकोचविस्तारयोः विधानं गुणतामाघत्ते' इति धिया विषयेऽत्र नलचरितस्य संकोचनं द्रष्टव्यम् । कथायाः घटनाक्रमो महाभारतवदेवास्ति, येंऽशाः महाकविना नोट्टंकितास्तेन न किमप्य-त्याहितं भवति कथा प्रवाहं । न वा गतिरोध एव सम्भवति । प्रसंगप्राप्तम-धोलिखतयो कथाग्रन्थयोः साम्यं वैषम्यं च साम्प्रतं निरूप्यते ।

महाभारते वर्णितस्य मौलिक नलचरितस्य बृहत्कथा मंजर्या समुपवर्णितायाः नल कथायाश्च घटना साम्यं शोध प्रबन्धस्य परिशिष्टे समुट्टंकितया सरण्या सुसमीचीनतया ज्ञातुं पार्यते ।[१]

घटना साम्यमिव पदसाम्यं भाव साम्यं चाप्यत्र संलक्ष्यते । सांप्रतं द्वित्रै रु-दाहरणैः वीक्षितुं शक्यते यदीमानि साम्यानि मौलिकादेव नलचरितादनुहरि-तानि यथा—

(अ) कलिद्वापरौ दमयन्ती स्वयंवर समुत्सुकौ त्वरया गच्छन्तौ दृष्ट्वा शक्रादिदेवः अवोचन —

**'वृतस्तया नलो राजा पतिरस्मत्समीपतः ।''**

---

१. द्रष्टव्य-शोध प्रबन्धस्य परिशिष्टो भागः

बृहत्कथामंजर्यां अस्यैव पदस्याक्षरशः समनुहरणं दृश्यते—

**'वृतस्तया नलोराजा, गच्छवृत्तः स्वयंवरः ।'**[२]

(ब) अनेनैव प्रकारेण स्वयंवर प्रकरणे दमयन्ती पंच नलानवलोक्य छायाद्वितीयं परिज्ञातवती यथा -

**'छायाद्वितीयो म्लानस्त्रग्रजः स्वेद समन्वितः ।'**[३]

बृहत्कथामंजर्यामपि—

**'छायाद्वितीयमवृणोत्........ ।'**[४]

पद साम्यस्य कृते प्रस्तुतयोर्द्वयोः स्थलयोरवलोकनेन स्पष्टं ज्ञायते यत्कथा-कर्तुः विवेचना दृष्टिः मूलतः संक्षेपणस्यैवास्ति अतः येषु पदेषु संक्षेपणं भारते दृश्यते तान्येव पदानि तेन प्रतिगृहीतानि । यथा प्रथमे स्थले कलिद्वापरयोः संवादः एकस्मिन् पूर्ण अध्याय एवोपवर्णितः भारते, किन्तु तस्य संवादस्य पर्यवसानमस्मिन्नेव वाक्यांशे भवति—'वृतस्तया नलोराजा' अतः कथा कारे-णापि पदमिदं यथावदुपकल्पितम् । द्वितीये स्थले च स्वयंबरे यदा दमयन्ती नलं परिचेतुं नाशकत् तदासा पातिव्रत्यस्य प्रतिज्ञानपूर्वकं देवानां परिज्ञानं चकार फलतः सा नलं कतिपयैश्चिह्नैः ज्ञातवती चिह्नानि यथा-छायासाहार्थ्यं, म्लानत्वं मालिकायाः, रजस्वेद समन्वितत्त्वं, संस्पृष्ट भूमित्वं च । अभिज्ञान प्रसंगानामेतेषां वर्णनस्य प्रयोजनमभिज्ञानमात्रमेव तच्च ''छाया द्वितीयो' इत्यनेनैव पदेन सम्भवति अतः कथाकारेणास्यानुहरणं कृतम् ।

**भावसाम्यम्**—भावसाम्यं तु कथावस्तुनः समान्त्वेनात्र सर्वत्र ज्ञातुं द्रष्टुं च शक्यमेव तथापि कतिपयानि स्थलान्येतादृशानि परिलक्षितानि यत्रेदं प्रतीयते यत् कथाकारः महर्षेः व्यासस्यैव वाणीं पुनः श्रावयति । उपमासादृश्यं तु महाभारतस्य प्रायशः सर्वैरेवांशैः यत्र तत्र गृहीतमिवाभाति । द्वित्राणि स्थलान्यस्मिन्विषये पर्याप्तानि भविष्यति—

(अ) नलस्य वर्णनं कुर्वता व्यासेन सः कामइव सुन्दरः वर्णितः—

---

१. म० भा० व० पा० अ० ५५ श्लो० ४

२. बृ० क० मं० ३४४

३. म० भा० व० प० अ० ५४ श्लो० २४

४. बृ० क० मं० ३४२

**'साक्षादिव स्थितं मूर्त्या मन्मथं रूपसम्पदा ।'**[1]

कामस्योपमानं नायकस्य कृते संस्कृत वाङ्मये प्रायशः सर्वत्रैपोमलश्यते । यथा कारोपि भावमिदं जग्राह—

**सौभाग्यमिव साकारं प्रत्यक्षमिव मन्मथम् ।**[2]

व्यासस्य सौन्दर्यं मूलक कल्पनायां नलः साक्षात्काम इवास्ति यतोहि ऋत-प्रसूनां प्रज्ञावतां महर्षीणां कृते देव साक्षात्कारः सुलभ एव । अतः स व्यासः "साक्षादिति" पदं प्रयुनक्ति, परं बृहत्कथामंजरीकारः नलस्य प्रत्यक्षमिव मन्मथमिति विशेषणयुक्तोपमानं पदेन वर्णनं चक्रे । नलस्य रूपे यथा काम एवोपस्थित इति कथनं कवेः समीचीनं वर्तते ।

(ब) किंकर्तव्यविमूढतायां, चरमसीमानमुपनतायां व्याकुलतायां हृदयस्य यादशा जायते तस्याः कृते व्यासेन 'दोला' शब्दस्य प्रयोगोविहितः । दमयन्त्याः परित्याग काले व्याकुलस्य नलस्य मनः स्वयं च बारं बारं गतागतं कुर्वन्नासीत् यथा काऽपि दोला आयाति याति च—

**'दोलेव मुहुरायाति याति चैव सभां मुहुः ।'**[3]

दोलायाः इयमुपमा संस्कृतवाङ्मये बहुशः प्रयुक्ता दृश्यते । सत्यमेव यत् दोलातिरिक्तं गतागतसाधर्म्योपपादकमुपमानं क्वापि न दरीदृश्यते । कथाकारोऽपि इदमेवोपमानं तावदस्थ्यं प्रत्याययितुमभिदधौ—

**'दोलाविलोल हृदयो रागान्मोहाच्च भूपतिः ।'**[4]

(ख) नायिकायाः नखशिख वर्णनं विहाय यदितस्याः कस्यापि अंग विशेषस्य वर्णनं रेखामात्रमेव क्रियते चेर्ताह तच्चित्रं समधिकतरं प्रभविष्णुतां धारयति । मांसलं सौन्दर्यं वर्णनं काव्यगते शिल्पे पंकिलतामुत्पादयति । परं रेखांकितं सौन्दर्यं सीमानं स्पृशन्नेव कवि यद्धवर्णनं प्रस्तौति तन्नायिकायाः मनोरमं लावण्यमात्मसौन्दर्यं चाभिव्यंजयति । व्यासः वाल्मीकिश्चानया शैल्यैव नारी वर्णनं कृतवान् । दमयन्त्याः कृते व्यासेन—

**'यशः प्राप सुमध्यमा ।'**[5]

---

१. म० भा० व० प० अ० ५१ श्लो० २६

२. बृ० क० मं० ३३६

३. म० भा० व० प० अं० ५९ श्लो० २३

४. बृ० क० मं०

५. म० भा० ब० प० अ० ५० श्लो० १०

इति कथितम् । अत्र सुमध्यमेति पदं नायिकायाः क्षीणं कटिदेशमभिव्यनक्ति परं तत्सहैव तस्यां लावण्यं कृशत्वं सामुद्रिकशास्त्रानुसारेण गुणशीलत्वादिकं जायात्वं चादि समस्तमेव नायिकोचितं सौन्दर्यच्छदं गूढ़ व्यंग्यत्वेनानुभावयति । वर्णितमिदं प्रभविष्णु पदं दृष्ट्वा कथाकारेणापि यथावत्कृतम्—

**'सुताविदर्भराजस्य भीमस्यास्ति सुमध्यमा ।'**

पदसाम्य भावसाम्ययोरुदाहरणानि कथायामन्यत्रापि समन्वेष्टुं शक्यन्ते । साम्य वर्णनादेव वैषम्यस्यापि सम्यग्ज्ञानं भवितुमर्हति सारल्येन । साम्यवैषम्ये एकस्यैव मुद्रायाः द्वे फलके स्तः । साम्य समीक्षणानन्तरं वैषम्यमपि समीक्ष्यते—

मौलिके कथानके कथासंग्रहणकारेण कृतानि परिवर्तनानि, परिवर्द्धनानि, तथा च कथांशलोपादीनि समस्तानि तत्वानि वैषम्यान्तर्गतानीतिवक्तुं शक्यन्ते । नलचरितस्य कथावस्तुनि कविना कति स्थलानि परिणमितानि, कति च त्यक्तानि सर्वं मिदं निम्नतया विवेच्यते—

१. बृहत्कथामंजर्यां नलस्य पितुः 'वीरसेनस्य' नाम नाप्यते —

**'निषधेषु नलोनाम भूपालो ललिता कृतिः ।**
**अभूद् गुणगणोद्यान विकाशकुसुमाकरः ।।'[2]**

महाभारतेतु नलस्य पितृनाम वीरसेन इति—

**'आसीद्राजा नलोनाम वीरसेन सुतोवली ।'[3]**

२. दमयन्त्याः पिता भीमः दमनकमुनिकृपया सन्तानं लब्ध्वानिति बृहत्कथामंजर्यां नोपवर्णितम् । भारतेतु—

**'तथैवासीद् विदर्भेषु भीमो भीमपराक्रमः ।**
**शूराः सर्वगुणैर्युक्तः प्रजाकामाः स चाप्रजः ।।**
**सप्रजार्थे परंयत्नमकरोत्सुसमाहितः ।**
**तमभ्यगच्छद् ब्रह्मर्षिर्दमनो नाम भारत ।।'[4]**

---

१. बृ० क० मं ३३३
२. वही, ३३१
३. म० भा० ब० प० अ० ५० श्लोक० १
४. वही, श्लो० ५ से ९

**तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।**
**महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥**
**तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।**
**कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥**
**दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।'**

प्रकटमेव यत्कथायाः सम्बन्धः भैम्या सह वर्तते न तु तस्या भ्रातृभिः सह अत एव प्रसंगोऽयं कथाकारेण त्यक्तः —

३. महाभारते यदृच्छयोपागतान् हंसान् नलः दृष्ट्वा तेष्वेकं जग्राह । सः हंसः दमयन्ती तु परिजानातिस्म पर तया सह न कोऽपि सम्बन्ध आसीत् —

**'सद्दर्श तदा हंसान् जातरूप परिच्छदान् ।**
**वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥'[1]**

परं बृहत्कथामंजर्यां हंसाः दमयन्त्याः केलि सारसाः आसन् —

**'सुताविदर्भराजस्य भीमस्यास्ति सुमध्यमा ।**
**दमयन्तीति विख्याता वयं तत्केलि सारसाः ॥'[2]**

४. भारत एक मेव हंसं नलो जग्राह स एव तस्य वार्ता भैमीं प्रति निनाय । सः हंसः दमयन्तीमवोचत् —

**'समानुषीं गिर कृत्वा.............. ।**
**दमयन्ति नलो नाम निषधेषु महीपतिः ॥'[3]**

अनेन ज्ञायते यत् एकेनैव हंसेन दौत्यं कृतम् ।

परं बृहत्कथामंजर्यां बहवो हंसाः आसन् । बहून् हंसान् जग्राह नलः बवन्ध हंसान्' ते सर्व एब नलस्य प्रेम सन्देशं दमयन्तीं प्रति निन्युः —

**'ते गत्वा दमयन्त्यै तं कथयन्तो न्यवेदयन् ।'[4]**

५. बृहत्कथामंजर्या दमयन्ती स्वयंवरस्य वार्ता नारद मुखेन श्रुत्वा देवास्तत्र तत्समकालमेव समागमन् —

**'... ..... ...लोकपालाः समाययुः ।**
**शक्राद्या नारद गिरा कन्या वरण लोलुपाः ॥'[5]**

---

१. म० भा० व० प० अ० श्लो०
२. बृ० म० मं० ३३३
३. महाभारत व० प० अ० ५४ श्लो० २५
४. बृ० क० मं० ३३६
५. वही ३३९

भारते तु पर्वतनारदौ देवान् सूचितवन्तौ, इन्द्रादयो लोकपालाः स्वयंवरे समागन्तुं प्रवृत्ताः मार्गे नलं ददृशुः, ते च तं दूतं विधाय प्रणय याचनार्थं प्रैषयन्। नलो दमयन्त्याः हर्म्ये गत्वा वार्तां चक्रे। प्रतिनिवृत्य च सर्वं यथावद् देवान् वर्णयामास। इदं नलस्य देवदौत्यं भारते वर्णितं परं बृहत्कथामंजर्यां नोपलभ्यते।

देवदौत्य वृत्तान्त परित्यागेन लक्ष्यते यदत्र न संक्षिप्यते प्रत्युल्लुप्यत एव, परमयं लोपः कथमपि नोचितं वक्तुं शक्यते। नलस्य चरित्र्यौदात्यमिदमेव वृत्तान्तं परिपुष्णाति। प्रायः सर्वैरेवास्य वर्णनं व्यधायि। अतः कथाकारेणास्य परित्यागः नोचितः।

६. भारते चतुर्णां लोकपालानामिन्द्राग्नि वरुण यमानां चर्चा कृता-स्वयंवरे पंच नलान् भैमी दृष्टवती—

**'ददर्श भैमी पुरुषान् पंच तुल्याकृतीनिह।'**[1]

बृहत्कथामंजर्यां संख्या नोपवर्णिता—

**'तद्रूपा एव विविशुः।'**[2]

इत्यनेनैव संक्षेपणं विहितम्।

७. बृहत्कथामंजर्यां दमयन्ती नलं प्राप्तुमिच्छति तदा स्वपितृमुखेन स्वयंवरायोजनं कारयति —

**'अथ राजसुताध्यात्वा नलसंगमवांछया।**
**नृपेभ्यः प्राहिणोद् दूतान पितुर्वाक्यात् स्वयंवरे।'**[3]

परं भारते कामपीड़िताया: दमयन्त्याः सूचनां तस्याः सखीगणेभ्यः परिज्ञाय भीमः स्वयंवरं समायोजयत्—

**'ततो विदर्भपतये दमयन्त्याः सखीगणाः।**
**न्यवेदयत् न स्वस्थां दमयन्तीं नरेश्वर।'**[4]

८. अस्मिन् ग्रन्थे नलदमयन्त्योर्विप्रयोगानन्तरं नलस्य वनवृत्तान्तं कर्कोटकादि वृत्तं च प्रथमतयोपवर्णितं,[5]

---

१. म० भा० व० प० अ० ५४ श्लोक १०

२ बृ० क० मं० ३४०

३. वही ३३८

४. म० भा० व० प० अ० ५१ श्लोक ५

५. दोलाविलोल हृदयो रागान्मोहाच्च भूपतिः।
त्रायस्वेतिसमाकर्ण्य शब्दं गत्वा वनान्तरम्॥

परं महाभारते पूर्वं दमयन्ती वृत्तान्तं पश्चान्नल वृत्तान्तं च समायोजितमस्ति ।

९. भारते वने विप्रयुक्ता दमयन्ती नैकान्विघ्नाननुभवन्ती एकमाश्रमं दृष्टवती, तत्रस्थाः तपस्विजनाः तत्रागतां तामाश्वासयन्,[1] ततः परं सार्थवाह वृत्तान्तं,[2] मृत्योरवशिष्ट ब्राह्मणैः सह तस्याः चेदिदेशगमनं,[3] तत्र राजमातुः समीपेः तस्याः वासः पश्चात् सुदेव ब्राह्मण द्वारा परिज्ञानानन्तरं तस्याः पितृ गृह गमनं[4] इत्यादिवृत्तान्तं यद्वर्णितं—

तत्सर्वं बृहत्कथा मंजर्यां नोपलभ्यते । वनाद्दमयन्ती पितृगृह मेव प्रापितेति कथा कृता—

**'कालेन वैदर्भपुरीं पितुः प्राप्य सुमध्यमा ।'**[5]

१०. नलः ऋतुतुपर्णस्याश्वशालायां जीवलेन सह वार्तां करोति[6] इदमपिवृत्तान्तं बृहत्कथामंजर्यां नोपवर्णितम् ।

११. बृहत्कथा मंजर्या अनुसारं दमयन्ती पितृगृहं प्राप्य स्वयमेव नलान्वेषणाय दूतान प्राहिणोत्—

**'सा ततः प्राहिणोद्दूतान् विचेतुं निषधाधिपम् ।'**[7]

किन्तु भारते दमयन्ती स्वमातरं सर्वं निवेद्य तन्मुखादेव स्वपितरं कथयित्वा तद्द्वारा दूतान् प्रेषयत्[8] ।

---

दावानलादुज्जहार कर्कोटं पन्नगोत्तमम् ।
ततस्तद्विषफूत्कारैर्यातः क्षिप्रं विवर्णताम् ।।
ह्रस्वो विटकं वदनः सोऽभवन्नृपशेखरः ।
ऋतुपर्णस्य नगरीमयोध्यां प्राप्य दुःखितः ।।
(बृ० क० मं० ३५१-३५३)

१. म० भा० व० प० अ० ६१ श्लो० ५७ से ६१
२. वही अ० ६१ श्लो० १०६ से १२५ तथा ६२।१ से १०
३. वही अ० ६२ श्लो० १७-१८
४. वही अ० ६२ श्लो० २१ से ४३ एवम् अ० ६५-६६
५. बृ० क० मं० ३५७
६. म० भा० व० प० अ० ६४ श्लो० ११ से १९
७. बृ० क० मं० ३५८
८. म० भा० व० प० अ० ६७ श्लोक १ से ६

१२. दमयन्त्याभिहितायाः गाथायाः उत्तरे बाहुकस्य गाथां यः ब्राह्मणः तस्यै न्यवेदयत् तस्य नाम 'पर्णाद' आसीदिति भारते।

बृहत्कथामंजर्यां पर्णादस्य नामोल्लेखनं नास्ति—

**'अयोध्यां ब्राह्मणो गत्वा, दमयन्त्यै न्यवेदयत्।'[1]**

१३. उत्तर रूपे बाहुकस्य गाथां श्रुत्वा दमयन्ती सुदेव ब्राह्मण द्वारा ऋतुपर्णस्य नगरे पुनः स्वयंवरस्य सूचनां प्रेषयत् भारते[2]—

**वर्णनमिदमत्रोपवर्णितं नास्ति।**

१४. बृहत्कथामंजरी कारेण नलचरितस्य समापन भागेऽपि यत्किंचित्परिवर्तनं कृतम्।' 'दमयन्ती पुनः स्वयंवर व्याजेन ऋतुपर्णमाजुहाव, ऋतुपर्णः बाहुक कौशलेनैकेनैवाह्ना विदर्भं प्राप्तः, मार्गे तस्याश्च संचालनं बहुशो निरीक्ष्य ऋतुपर्णोऽक्षहृदयं तस्मै प्रादात्। तत्कालमेव नलः कर्कोटकदत्तं वस्त्रं परिधाय नैजं रूपमवाप्तवान्। तच्छरीरान्निर्गतः कलिः विभीतकरौ प्रविवेश। विदर्भे दमयन्ती स्वपतिं नलं दृष्ट्वा प्रहृष्टा बभूव। नलः पुनः स्वदेशमागत्य पुष्करं च बिजित्य राज्यमवाप्तवान्।'

महाभारतानुसारेण तु या कथा वर्तते तया ज्ञायते यदत्र ऋतुपर्ण बाहुकः संवादः, बाहुक द्वारा अश्व परीक्षणं, मार्गे अश्व संचालनं, ऋतुपर्ण द्वाराऽक्षविद्या प्रदर्शनं, प्रदानं च, तयो, कुण्डिननगरीं प्रापणं, दमयन्ती द्वारा बाहुकस्य बहुविधि परीक्षणमैतत्सर्वं वृत्तं नोपवर्णितम्। भार्या प्राप्तेरनन्तरं नलः ऋतुपर्णायाश्च हृदयं प्रादादित्यपि नोपलभ्यते। तथा च पुष्करं जित्वा नलेन तस्य राज्यं पुनः तस्या एव दत्तमित्यपि च न संप्राप्यते।

१५. नलचरितस्य बहूनां पात्राणां नामोल्लेखनं बृहत्कथामंजर्यां नाप्यते—यथा—जीवलः, वार्ष्णेयः, सुदेवः, पर्णादः, इन्द्रसेनः, सुबाहुः, वीरबाहुः, सुदामेत्यादयः।

निर्दिष्टानां समेषां स्थलानां वर्णनेन ज्ञातुं पार्यते यत् कथाकर्त्तुः मूल प्रवृतिः सौन्दर्याधानार्थं संक्षेपणे विश्वसिति अत एव यत्र सः संक्षेपयितुं प्राभवत् तत्र कृतवान्। किन्तु संक्षेपणदशायां लुप्ते सति कस्मिंश्चित् स्थले दोषमिदमापतति यत्तेऽप्यंशस्तेनोपेक्षिताःये नितरामपेक्षिताः आसन्। यैश्च नायक नायिकयोः

---

१. बृ० क० मं० ३६४

२. म० भा० व० प० अ० ६८ श्लोक २० से २४

चरित्रं संवर्द्धते यथा नलस्य देवदौत्यं, परंमनया संक्षेपणविधयेतिवृत्तौ गत्वरशीलता वर्द्धते कथायां मूल प्रवाहे नहि कश्चिदन्तरायोऽवजन्यते। लघ्वी कथा पात्र सम्मर्दं नापेक्षते। अतः कथाकारेणावश्यकानां पात्राणामेव चयनं वर्णनं च व्यधायि।

एकमन्यदपि तथ्यं ध्यातव्यं यत् कथा संग्रहकारेण संक्षेपेण वह्व्यः कथाः ग्रन्थे संकलिताः सहस्राधिकासु कथासु नलचरितमपि समुपवर्णितम्। अस्यां-स्थितौ यत्किंचित् वर्णनं यदित्यक्तं तर्हि नेदमस्वाभाविकम्। अतः लुप्तकथा-प्रसंगत्वात् संग्रहकारो न दोषभाक् भवितुमर्हति। समधिक कथा संग्रहपारवश्यात् प्रवाह सौन्दर्याधानत्वाच्च संक्षेणमेवागतिकगतिरासीत्। अमुमेव भावं विवशतायाः परिलक्ष्य कालिदासोऽपि सम्भवतः समभिव्याहरति स्म —

**'शस्त्रेणरक्ष्यं यदशक्य रक्ष्यं न तद्यशः शस्त्र भृतां क्षिणोति।'[1]**

स्वं संक्षेपणोद्देश्यं परिरक्षन्नेव कविः पूर्णसावधानमनसा नलचरितं वर्णयामास। नायकस्य नायिकायाश्च चरित्रोद्घाटनं तेनापि सुष्ठु सम्पादितम्। द्वित्राणि स्थलानि समुदाह्रियन्तेऽत्र—

१. नलस्य वर्णने कविः एकेनैवानुष्टुभ् छन्दसा मनोहारि वर्णनं चकार—

**'निषधेषु नलो नाम भूपालो ललिता कृतिः।**
**अभूद् गुण गणोद्यान विकाश कुसुमाकरः।'[2]**

'गुणगणोद्यानविकाश कुसुमाकरः' इत्यस्य पदस्य कल्पनाभिनवा प्रत्यग्रतयास्वाद्या वर्तते। अनेन पदेन नलस्य व्यक्तित्वमप्यभिनवत्वमुपयाति।

२. अनेनैव प्रकारेण कविः नायक नायिकयोर्द्वयोरपि कामावस्था वर्णनमेकेनैव पद्येन समुद्गीर्णवान्—

**'शनकै र्विरहक्षामौ तौ गुणाकर्णनान्मिथः।**
**दिनैर्बभूवतुः प्रौढ शरताकाण्ड पाण्डुरौ।'[3]**

'शरताकाण्ड पाण्डुरौ' इत्यनेनैवपदेन व्यंजितोयाः विरह वेदनायाः मर्मन्तुदं कष्टं सहृदयः स्वतएवानुभवितुं शक्नोति।

३. अर्थान्तरन्यासस्यापि वर्णमेकस्मिन्स्थले कथाकारः कुशलतया चक्रे—

---

१. रघुवंश — द्वितीय सर्ग (कालिदास)

२. बृ० क० म ३३१

३. वही ३३७

**'श्रुतेनापीप्सितं वस्तु कस्य धैर्यं न कर्षति।'**[1]

'अभिप्सितस्य' वस्तुनः श्रवण मात्रं कस्य धैर्यं न प्रच्यावयति। कालिदासस्य शकुन्तलाऽपि दुष्यन्तस्य चर्चा स्वकर्ण पुट पात्रेण पपौ।

संस्कृत साहित्य मर्मज्ञेन क्षेमेन्द्रेण विरचिते कथा प्रसंगे लाक्षणिक दोषस्य कल्पनाऽपि क्लिष्टा। कविः संक्षेपण शैल्या कथां प्रस्तुतवान्। प्रायशः बृहत्कथामंजर्यां ये भेदाः सन्ति ते कथासंग्रहकृता संक्षेपण दृष्ट्या वर्णिता इति प्रतिभाति त नु परिवर्तन दृष्ट्या। किन्तु देवानां कृते यद्दौत्यं नलेन कृतं तन्नायकस्य पौष्कल्याय भवति। तस्य सन्दर्भस्य त्यागः बृहत्कथा मंजर्यां यो दृश्यते स न केवलं कथा संक्षेपार्थमिति वक्तुं शक्यते। इदमपि नासम्भवं यत् मूल बृहत्कथायामपि नलस्यदौत्यं नासीदिति। तर्हि व्यासेन वा अन्येन वा कविना नायकस्य धीर प्रशान्तत्व प्रतिपादनाय सन्दर्भः संयोजित इवाभाति।

## कथासरित्सागरोपवर्णितं नलचरितम्

इदं तु पूर्व मेव कथितं यत्कथासाहित्ये द्वावेव ग्रन्थौ विपश्चिद्भिः प्रशस्येते बृहत्कथामंजरी कथासरित्सागरश्च। तत्र बृहत्कथामंजर्यां यन्नलचरितं वर्णितं तत्सर्वं समीक्षितम्। अत्र तु महाकवि सोमदेव विरचितः कथा सरित्सागरोपवर्णितं नलचरितं समीक्षा निकषे परीक्ष्यते। संस्कृतवाङ्मये कथा संग्रहकारेषु लब्धकीर्तिः महाकवि सोमदेवः नैजेन कथा सरित्सागरेणैव विदुषां स्नेह भाजनोऽभवत्।

तस्य कथा सरित्सागरः कथानामपूर्वो भाण्डागारः यत्र सहस्राधिकाः सुरुचिपूर्णाः सहृदयोल्लासिकाः बह्व्यः कथाः संग्रहीताः वर्तन्ते। यासु कथासु पौराणिकैतिहासिक लोक कथानां सर्वासामेव संकलनं वर्णनं च कविना कृतम्। बृहत्कथा मंजर्याः उत्तर कालिकत्वात्कथा सरित्सागरः काव्य दृष्ट्याऽधिकतरः समृद्धः विशिष्टश्च संलक्ष्यते। प्रायशः कथासरित्सागरे समुपवर्णिताः कथाः नाति संक्षेपतया न चाति विस्तारतयोपलभ्यन्ते। यद्यपि पूर्वतः समुदाहृताः एव कथाः सोमदेवेन संग्रहीतास्तथापि तासां वर्णन वैशिष्ट्येन ताः सर्वाः अपि कवेर्नैजां कवि प्रतिभां समर्थयन्ति। साम्प्रतं नलचरितमुपजीब्य सोमदेवकथा सरित्सागरे वर्णितायाः नल कथायाः समीक्षात्मकमध्ययनं क्रियते—

---

१. बृ० क० मं० ३३५

कथासरित्सागरस्य नवमे लम्बकेऽलंकारवती नामके सप्तत्रिंशदुत्तर द्विशत्तमाद् श्लोकादारभ्य षोडशोत्तर चतुश्शतं श्लोकं यावत् नव सप्तत्यधिकैकशतेषु श्लोकेषु नलकथातीव मनोहारितयोपवर्णिता वृहत्कथामंजरी वदत्र नास्ति संक्षेपणातिशयः । अत्र तु कथारूपेण कस्याप्युपाख्यानस्य विरचने यत्किंचिद् वस्तु समपेक्ष्यते तत्सर्वमालोच्यैव महाकविः सोमदेवः स्वीये ग्रन्थे नलचरितं संदधानो वर्णयत् । यत्रत्ये नलचरिते कथोपयोगि समस्तं काव्य तत्त्व परिकरं समुपनिबद्धं दृश्यते ।

नलचरितस्य मौलिकं महाभारतीयं कथावस्तु यथावदत्रापि वर्तते किन्तु यत्र संक्षेपणस्यावश्यकता तत्र संक्षेपणाविष्करणं यत्र च विस्तारस्य तत्र विस्तारं कविः विहितवान् । वर्णनस्यास्मिन्प्रसंगे कविः यत्र तत्र परिवर्तनं, कथा प्रसंगं द्रुततरंविधातुं चकार । साम्प्रतं नलचरितस्य, कथासरित्सागरे समुपवर्णितायाः नलकथायाश्च साम्यवैषम्ये समीक्ष्येते ।

साम्य दृष्टचा प्रायशः कथाप्रसंगाः नलचरितवदत्रापि प्राप्यन्ते । घटनाक्रमे न किमपि विशेषं परिवर्तनं लक्षितम् । महाभारतीय नलचरितस्य कथासरित्सागरोपवर्णितस्य च नल कथायाः यत्किंचित् साम्यं वर्तते तत्सर्वं सूचीबद्धतया परिशिष्टे द्रष्टुं शक्यते ।[1] तस्यां सरण्यां ये साम्य सन्दर्भाः श्लोकानां संख्यां पूर्वकं प्रदर्शितास्तेषामवलोकनेन ज्ञातुं शक्यते यत् कथा सरित्सागरे कथा प्रसंगास्तथैव वर्तन्ते यथा महाभारते । मूल नलचरिते कुत्र कुत्र परिवर्तनं कृतं, कस्य कस्य प्रसंगस्य संक्षेपणं कृतं तथा च के केंऽशाः कथासंग्रहकारेण अस्पृष्टाः एतत्सर्वमनयासरण्याः कलपयितुं शक्यम् । तथापि साम्य सम्पादनभिषेणोट्टंकितायाः सरण्याः ग्रहणात् वैषम्य सम्पादनमपि यथा तथावश्यकमतो तदपि समीक्ष्यते—

वैषम्य सम्पादनं प्रकारत्रयेणोपपन्नं संभाव्यते, प्रथमतः मूल नलचरितस्य त्यक्तांशानां सुस्पष्टतया निर्देशनं, द्वितीयतः अति संक्षिप्तरूपेणोल्लिखितानामंशानामुल्लेखनं, तृतीयतश्च परिवर्तितानां च स्थलानां प्रकरण प्रसंग पूर्वकप्रदर्शनं चेतानि वैषम्योपपादकानि प्रकाराणि । अत्र क्रमशस्ते समुल्लिख्यन्ते—

प्रथमं तावत् येंऽशास्त्यक्तास्ते प्रदर्श्यन्ते—

(अ) महाभारतीय नलचरितानुसारेण दमयन्ती नलेन वियुक्ता सती बहुविध्नाकुला कथंकथमपि वने एकं सार्थवाहमपश्यत् । सा वराकी तेनैव

१. द्रष्टव्य शोध प्रबन्धस्य परिशिष्टो भागः

सार्थवाहैन सह चेदिदेशं गन्तुं प्रवृत्ता भूत्। परं दैवदुर्विपाकात् रात्रौ समागताः वनकरिणः प्रसुप्तं सार्थ समूहं ध्वंसयामासुः। प्रातःकाले कथमपि रक्षिता दमयन्ती ध्वंसावशिष्टब्राह्मण समुदायेन सह चेदिदेशं प्राप' इति प्रसंगः समुपवर्णितः।

कथा सरित्सागरे दमयन्ती सार्थ समूहेन सह चेदिदेशं प्राप इति तूक्तम् किन्तु सार्थवाहेनानुभूतं विघ्नादिकं नोपवर्णितम्।

प्रसंगेनानेन कल्प्यते यद्सार्थवाह धृत्तान्तस्य प्रयोजनमिदमेवासीत् यद्-दमयन्त्याः कष्ट गाथायामेकमन्यमपि वृत्तं समायोजितं भवेत्। येन कष्टं द्विगुणिततरं समनुभवेत्। कथाकारेण दमयन्त्या अजगर व्याधादि वृत्तान्त जनितामेव विपत्ति, नायिकायाः दुखवर्णने पर्याप्तां मत्वाऽस्य वृत्तान्तस्योपेक्षणं विहितम्। उपेक्षिते सत्यप्यस्मिन्प्रसंगे न हानिः सम्भवति।

(ब) महाभारतानुसारं विप्रयुक्ता दमयन्ती यदा वनेऽजगर व्याधादि विघ्नौधाननुभूयाग्रे प्राचलत्तदा साऽश्रमपदमेकं दृष्ट्वती। तत्रत्यास्तपस्वि-कुलानि विपन्नां तां समाश्वासितवन्ति। तेषामाशीर्वचांस्यादाय यदा दमयन्ती निर्गता ततः परं सा सार्थं समूहमपश्यत्।

महाकविः सोमदेवः इमां कथां न संयोजयति। त्याज्यमिदं वृत्तमिति मत्वा सार्थवाह वृत्तमेव संयोजितवान्।

कथा प्रसंगे यदा संघर्षस्य चरमावस्थां वर्णयति कोऽपि कथाकारस्तदा तथाभूतानामेव प्रसंगानामुपयोजनमावश्यक मनुभवति यै प्रसंगैः संघर्षः द्रुततरो भवितुमर्हति। यदि कोऽप्येतादृशः प्रसंगो मध्ये आपतति येन नायको नायिकावा "समाश्वसिति तदा संघर्षे क्षीणत्वं समुद्भवति। अत्रापि नायिकायाः" विप्र-योगानुकूल व्यापारं संघर्षं संवर्द्धयितुं चरमं सीमानं च समुपस्थापयितुं कविः प्रयतते। आजगर व्याधादिधृत्तान्तोपजनितः संघर्षस्तत्पश्चात् संघटित तपस्वि समाश्वासन वृत्तान्तेन क्षीणत्वमुपयाति। अतः प्रसंगोऽयं यदि कविना नोप-निबद्धस्तर्हि नासमीचीनः।

(स) एवमेव भारते दमयन्त्याः पुनः स्वयंवरस्य वार्तां श्रुत्वार्तुपर्णः बाहु-काख्यं नलं प्रार्थयति। ततः बाहुकोऽश्वपरीक्षणं चक्रे। अश्वपरीक्षणस्य प्रसंगोऽयं मूलकथानके न बहूपकरोति। अतएव कथाकारेण न प्रयुक्त इति।

अत्रत्ये नलकथावस्तुनि त्यक्तांशास्त्वेत एव, साम्प्रतमति संक्षिप्तयोप-पादितानां स्थलानां दिग्दर्शनं क्रियते —

(क) अत्र दमयन्ती द्यूते प्रसक्तं नलं दृष्ट्वा स्व पुत्रीं पुत्रं च पितृगृहे प्रेषयामासेति वर्णनं श्लोकेनैकेनैव सम्पादितम्—

**'तेनमत्वा गत राज्यं दमयन्तीनिजौशिशू ।**

**रथोत्तमं समारोप्य प्राहिणोत्स्वपितुर्गृहम् ॥'[1]**

महाभारते त्वस्योपरि स्वतंत्र एवाध्यायो वर्तते ।[2]

(ख) वने परिभ्रमन्त्या यदजगरव्याधादि जनितं सकष्टं वृत्तान्तमनुभूतं तत्सर्वमपि श्लोकेनैकेन प्रकटितमत्र—

**'सती तेजश्च मार्गे तामरक्षद्येन लुब्धकः ।**

**भस्मीकृतोऽहेस्त्रातायां तस्यां गतमना क्षणात् ॥'[3]**

भारते विस्तरेण समुल्लिखितेस्तः द्व एव वृत्तांते ।[4]

(ग) दमयन्त्याः स्वयं वरस्य वार्तां देवाः नारद मुखाच्छ्रुतवन्तः इत्यपि वृत्तं एकस्मिन्छ्लोके प्रति पन्नम्[5]

**परं भारते इदमपि विस्तरेणोल्लिखितं दृश्यते ।[6]**

एत एवांशाः संक्षिप्ताः दृश्यन्ते, इदमपि संक्षेपणमुचितमेवेति समूह्यते । अत्रोपर्युक्तेषु त्रिष्वेव प्रसंगेषु संक्षेपणेन गतित्वरत्वं संवर्द्धते, विस्तरेण च शैथिल्यमनुभूयत इति दिशा, संक्षेपणमुचितमिति वक्तुं शक्यते । परंमाजगर व्याध वृत्तान्तं नाति संक्षेपणमपेक्ष्यते यतो ह्यनेन दैवदुर्विपाकस्य दर्शनं, कष्टाकुलत्वं, संघर्षाधिक्यं च सम्भाव्यतेऽथवा नायिकायाः विप्रलम्भमेव प्रधानत्वेन स्वीकृत्य, तस्याः दैवदुर्विपाकत्वादिकं व्याधादि वृत्तान्तं च गौणतया स्वीकृत्य कथा संग्रहकारोऽत्र वृत्तान्तस्यास्य संक्षेपणं चकार ।

त्यक्त संक्षिप्त स्थलानां विविध सम्भावनया विवेचनानन्तरं सम्प्रति परिवर्तितानि स्थलानि प्रदर्शयन्ते—

१. नलस्य पितृनाम किमासीदिति नोपवर्णितमत्र ।

---

१. क० स० सा० ३००

२. म० भा० व० प० अ० ५७ श्लो० १ से २३

३. क० स० सा० ३२६

४. म० भा० व० प० अ० ६० श्लो० २० से ३८

५. क० स० सा० २५६

६. म० भा० व० प० अ० ५१ श्लो० ११ से २३

२. महाभारतानुसारेण दमयन्त्याः कामवेदनां तस्याः सखीगणाः भीम पराक्रमं भीमं निवेदितवन्तः । तच्छ्रुत्वैव सः स्वयंवरं समायोजयत्—

**'ततो विदर्भपतये दमयन्ती सखीगणः ।**
**न्यवेदयत् न स्वस्थां दमयन्तीं नरेश्वर ॥**
**तच्छ्रुत्वा नृपतिर्भीमो दमयन्ती सखीगणात् ।**
**चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ॥**
**स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।**
**अपश्यदात्मनः कार्यं दमन्त्यया: स्वयंवरम् ॥'**[1]

परं कथा सरित्सागरानुसारं नलदमयन्त्योः पूर्वरागसमारम्भात्प्रागेव राजा भीमः रूढयोजनां स्वां सुतां परिलक्ष्य तस्याः पाणिपीडनार्थं परान्वेषणं कृत्वा नलमेव स्व जामातृरूपे निश्चिकाय -

**'भीमेनाऽपि विचित्य क्ष्मां ददृशे तेन राजसु ।**
**न नलादपरो राजा तुल्यः स्व दुहितुः पतिः ॥'**[2]

३. कथासरित्सागरे नायकनायिकयो परस्परं प्रीतिकारकः हंसः प्रथमं दमयन्त्याः सकाशे गत आसीत् ततश्च नलं प्रत्यगच्छत् । काव्य शास्त्रीयां मर्यादां परिरक्षन्नेव कविः वृतमत्र पर्यवर्तयत् काव्यशास्त्रे तु—'आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात् तदिंगितैः इति कथितम् । अदः तथ्यं कृत्वैव कथा संग्रहकारः हंसं प्रथमतः दमयन्त्याः समीपे प्रेषितवान्—

**'तत्रैकं राजहंसं सा दृष्ट्वा दष्टोत्पलाम्बुजम् ।**
**बबन्ध लीलया बाला युक्तिक्षिप्तोत्तरीयका ॥'**[3]

भारतकारस्तु प्रथमं नल समक्षं हंसान् प्रेषितवान ततः दमयन्ती समक्षम् ।

४. भारते नल दमयन्त्योः सकाशे बहवः हंसा अगच्छन्—

**'सददर्श तदा हसान् जातरूप परिच्छदान् ।**
**वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥'**[4]

+ + +

---

१. म० भा० व० प० अ० ५१ श्लोक ६-८
२. क० स० सा० २४०
३. वही, २४२
४. म० भा० व० प० अ० ५० श्लो० १८

अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्ततः कन्यास्तान्हंसान्समुपाद्रवन् ॥'[1]

परं कथासरित्सागरे तु एक एव हंसः नल दमयन्त्योः समीपं गत आसीत्—

तत्रैकं राजहंसं सा ......... ।'[2]

५. अत्र ग्रंथेनलानुरक्ता दमयन्ती स्वमातरं सर्वमात्मीयं वृत्तं निवेदितवती पश्चात् माता भीमं स्वयं वरार्थं प्रैरयत्—

'दमयन्ती च सोत्कण्ठा युक्त्या मातृमुखेन सा ।
पितुः स्वास्प्रार्थयामास नलप्राप्त्यै स्वयंवरम् ॥'[3]

भारते तु दमयन्ती सखी समुदाय एव पितरं भीमं सूचयामास ।

६. कथा सरित्सागरे पंचनलीप्रकरणस्थाने षड्नली प्रकरणमुपकल्पितम् । पंचनलीवर्णनं भारतानुसारं प्रायशः सर्वैरेव कविभिः स्वीकृतं वर्णितं च । भारते नारदमुखाद् दमयन्ती स्वयंवरस्य वार्तामाकर्ण्य चत्वारो देवाः शक्राग्निवरुण-यमाः स्वयंवरे समागताः—

'अहमिन्द्रोयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरोनृणां यमोऽयमपि पार्थिव ॥'[4]

एते चत्वार एवेन्द्रप्रमुखाः देवा स्वयंवरे नलरूपमवधार्य प्रविष्टवन्तः—

'ततः संकीर्त्यमानेषु राज्ञां नामसुभारत ।
ददर्श भैमी पुरुषान्पंचतुल्याकृतीनिव ॥'[5]

परं कथासरित्सागरकारेणात्र पंच लोकपालनुपस्थाप्य षड्नलानां वर्णनं व्यधायि —

'दृष्टवाछायानिमेषादि गुणांस्तत्र च षड्नलान् ।
सा भ्रातरिसमुद्भ्रान्ते व्याकुला समचिन्तयत् ॥'[6]

अत्र कथाकारः इन्द्राग्नि वायुवरुणयमान्पंचलोकपालान् संस्थापयति—

---

१. म० भा० व० प० अ० ५० श्लो० २४
२. क० स० सा० २४२
३. वही, २५६
४. म० भा० व० प० अ० ५२ श्लो० ४
५. वही अ० ५४ श्लो० १०
६. क० स० सा० २७१

'तेषां च बलमिद् वायु यमाग्निवरुणास्ततः ।'[१]

अत्र सम्भाव्यते यत् भारते चत्वारोऽपीन्द्राग्निवरुण यमाः नायकनायिकयोर्विवाहानन्तरं ताभ्यां वरान् प्रदाय गतवन्तः । देवानामागमनं न निष्फलं भवतीति परम्परानुरोधात् स्थान एव । पुनश्च यदा नलदमयन्त्योर्वियोगानन्तरं कथमपि चतुर्थे वर्षे तयोर्मेलनमभूत्तदा वायुः दमयन्त्याः पातिव्रत्यं प्रमाणयति । तत्र वायुना कृतमुपकारमभिलक्ष्यैव कविः आदावेव स्वयंवर प्रसंगे तमभिसन्दधाति ।

७. महाभारते तु विवाहानन्तरं नलः दमयन्तीमादायस्वपुर निषधं समगच्छत् । श्वसुरवेश्मनि सः कति दिनान्यत्यवाह्यदिदं नवर्णितं परमत्र नलः सप्तदिवसपर्यन्तं विवाह समये श्वसुरालये न्यवसदिति वर्णितम्—

'नलश्च सप्तदिवसान् स्थित्वाश्वसुरवेश्मनि ।।'[२]

८. भारतानुसारं नल पुत्रस्य नाम इन्द्रसेनासीत् । पुत्र्याश्चेन्द्रसेना—

'इन्द्रसेनस्य जननी ··· · ······ ।'[३]

'इन्द्रसेनां सह भ्रात्रा ········ ।'[४]

अत्र इन्द्रसेनायास्तु नामपरिवर्तनं नास्ति परं नलकुमारस्य इन्द्रसेनस्य नाम 'चन्द्रसेन' इति मिलति—

'कालेन चन्द्रसेनाख्यं दमयन्ती नलात्सुतम् ।
प्रसूने स्म तदन्येकामिन्द्रसेनां च कन्यकाम् ।।'[५]

९. महाभारते नायकस्य नलस्य शरीरे यदा कलिराविशत तदा स द्यूत व्यापृदो वभूव । यद्यप्येकदा स आचारात् विश्रृंखलितोजातः यस्मात् तच्छरीरेकलिः प्रविष्टवान्—

'कृत्वा मूत्रमुपस्पृश्य संध्यामास्ते स्म नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ।।'[६]

---

१. क० स० सा० २६०
२. वही २८४
३. म० भा० व० प० अ० ७१ श्लो० ३१
४. वही अ० ७३ श्लो० २४
५. क० स० सा० २८६
६. म० भा० व० प० अ० ५६ श्लो० ३

परं कलिप्रवेशनानन्तरमेव द्यूत प्रसंगः समायोजितः—

अत्र तु नायकस्य साधारणीकरणाय तस्य चारित्र्ये कलिजन्यदोषान्-व्याहर्तुकामः कथा संग्रहकारः नलं दुष्कृतिषु व्यापारयति—

**'असेवत् दिवास्वपनं सजजागार रात्रिषु।**
**अक्षैरदीव्यद्दासीभि ररस्तासत्यमब्रवीत्॥**
**चकाराकारणं कोपमन्यायेनार्थमाददे।**
**अवमानं सतां चक्रे सम्मानमसतां च सः॥'[1]**

कृतेनानेवोपर्युक्तेनवर्णनेन यद्यपि 'पुण्यलोकस्य' नलस्य चरित्रं क्षीयत इव तथापि परोक्षे प्रविष्टकलिव्यापार जन्यत्वात् तच्चरिचं सुरक्षितं प्रतीयते।

१०. कथासरित्सागरे नलपुष्करयोर्द्यूतक्रीड़ा द्वित्राणि दिनानियावत् परिसमाप्तामूत्ततः सर्वस्वं विहाय नलः निरगच्छत् -

**'दिनैर्द्विबले कोषे हारितेऽपि दुरोदरात्।**
**न नलो वार्यमाणोऽपि चचाल कलिविप्लुतः॥'[2]**

भारतेतु सुदीर्घकालं यावत् तयोर्द्यूतं प्राचलत्—

**'तथा तदभवद द्यूतं पुष्करस्य नलस्य च।**
**युधिष्ठिर बहून् मासान् पुण्यश्लोकस्त्वजीयत्॥'[3]**

अत्राति संक्षेपणमपि द्रष्टुं शक्यते। 'न नलोवार्यमाणोऽपि' इत्यत्र भारते दमयन्ती स्वयं, अमात्यैः, प्रजाजनैश्च नलं द्यूतान्निवर्तयितुं प्रार्थितवती विस्तरेण[4] तत्सर्वं वृत्तं संक्षेपितम्।

११. भारते कलिः वृषरूपेण नलसमीपमागत्य नलपुष्करौर्द्यूतक्रीड़ा प्रत्यभिमुखीकृत्य प्रावर्तत—

**'एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात्।**
**कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात्॥'[5]**

---

१. क० स० सा० २६१-२६२
२. वही २६६
३. म० भा० व० प० अ० ५६ श्लो० १८
४. वही अ० ६६ श्लो० १० से १८ एवम् अ० ५७ श्लो० १ से १६
५. वही, अ० ५६ श्लो० ६

**आसाद्य तु लयं वीरं पुष्कर: परवीरहा ।**

**दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहु: ।।'[1]**

अत्र वृषरूपिणः कलेर्नामनिर्वचनं नास्ति । कथासरित्सागरे पुनः तस्य, 'दान्त' इतिनाम निर्वाचितम्—

**'नलो ददर्श दान्ताख्यं सुन्दरं धवलं वृषभ ।'[2]**

१२. नलचरिते द्यूते पराजितो नलः स्वयं निःश्वास पुरस्सरो दमयन्त्या सह देशं त्यजति—

**'एक वासा असंवीतः सुहृच्छोकविवर्धनः ।**

**निश्चक्राम तदा राजा त्यक्त्वा सुविपुलां श्रियम् ।।'[3]**

कथा सरित्सागरे पुनः शिल्पकौशलेन चित्रेऽधिकतरां प्रभविष्णुतामुत्पादयितुं कविः पुष्करादिष्टैः राजपुरुषैस्तस्य बलान्निष्कासनं प्रदर्शयति—

**'निरगाद्राजपुरुषैरासीमान्तं विवासितः ।'[4]**

स्वदेश एव राजपुरुषैः हठान्निष्कासनं करुणोत्पादकं, द्युतदुर्व्यसनपराणां कृते शिक्षात्मकं चास्ति ।

१३. नलचरिते वने प्रव्रजितो नलः क्षुधार्त्तः सन् कांचिच्छकुनान् वीक्ष्य तान्ग्रहीतुं समुपचक्रमे । तेऽक्षा. आसन्'ते' इति पदेन पक्षि बहुत्वं द्योत्यते । अथ च स्वयमपि तेऽक्षरूप पक्षिणाः स्वकान् बहुत्वेन वर्णयन्ति—

**'वयमक्षाः सुदुर्बुद्धे तव वासोजिहीर्षवः ।'[5]**

अत्र पुनः कथासरित्सागरे द्वावेव पक्षिणौ तत्रगतौ, पक्षिणौ च हंसावास्तामिति वर्णितं यथा—

**'...हंसौ द्वावैक्षतागतौ ।'[6]**

कथासरित्सागरकारस्य सोमदेवस्य द्वौपक्षिणो कालान्तरे कृष्णानन्द विरचिते 'सहृदयानन्द' काव्ये गृहीताऽवभूतामित्येतत्सर्वमग्रे वक्ष्यामः ।

---

१. म० भा० व० प० अ० ५६ श्लो० ७

२. क० स० सा० २६४

३. म० भा० व० प० अ० ५८ श्लो० ६

४. क० स० सा० ३०५

५. म० भा० व० प० अ० ५८ श्लो० १५

६. क० स० सा० ३०६

१४. भारतानुसारं नलः सुप्तां दमयन्तीं एकस्यां सभायां परित्यज्य वनेनिर्गतः—

'तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ।।
तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजानिषसाद महीतले ।।'[१]

कथासरित्सागरे सभाप्राप्तिस्तयोः नोपवर्णिता । नलः वने दमयन्तीं तत्याज ।[२]

१५. कथासरित्सागरे नलवियुक्ता दमयन्ती कथमपि कृतप्राणरक्षणा सार्थवाहेन सह चेदिदेशं सम्प्राप्ता । तत्र राजप्रासादस्था चेदि राजकन्या हर्म्ये गवाक्षेण राजमार्गे गच्छन्तीं तां दृष्टवती—

'तत्र सा राजसुतया दूराद्दृष्ट्वैव हर्म्यतः ।'[३]

परं भारते राजमाता तां दृष्ट्वती—

'सा तैः परिवृतागच्छत्समीपं राजवेश्मनः ।
तां प्रासादगता पश्यद्राजमाता जनैर्वृताम् ।।'[४]

१६. नलचरिते चेदिदेशे वसन्तीं दमयन्तीं विदर्भराजभीमप्रेषितः एको ब्राह्मणस्तां तत्रागत्य पर्यचिनोत्—

'ततश्चेदिपुरीं रम्यां सुदेवो नामवै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ।।'[५]

अत्र ब्राह्मणस्य नाम सुदेव इति वर्तते । परं कथा सरित्सागरे स 'सुषेण' इति नाम्ना वर्णितः—

'तन्मध्याच्च सुषेणाख्यः ।'[६]

१७. नलचरिते सुदेवः पिप्लुना दमयन्तीं परिचाययति—

१. म० भा० व० प० अ० ५६ श्लो० ४-५
२. क० स० सा० ३१६
३. वही ३२८
४. म० भा० व० प० अ० ६२ श्लो० २१
५. वही अ० ६५ श्लो० ६
६. क० स० सा० ३३१

'अनेन वपुषा बाला पिप्लुनानेन चैवहि ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ।।'[१]

अत्रत्ये नल कथानके नेदं वर्णनमापतितम् ।

१८. कथासरित्सागरे नल कर्कोटक प्रसंगे कविना यत्कर्कोटकः नलाय 'अग्निशौच' नामकं वस्त्रमदादिति समभिहितम्—

'गृहाण चाग्निशौचाख्यमिदं वस्त्र युगं मम ।'[२]

तत् भारते कर्कोटकः नलाय वस्त्रयुगं प्रायच्छत् इति तूक्तं किन्तु वस्त्रयुगस्य किं नामासीदिति तु नोक्तम्—

'अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रादादस्मै दिव्यं वासोयुगं तदा ।।'[३]

१९. नलः ऋतुपर्णस्याश्वशालायां बाहुकेतिनाम्ना न्यवसत् महाभारते । परं कथासरित्सागरे तस्यनाम 'ह्रस्वबाहु' रिति कल्पितम्—

'सह्रस्वबाहु नामासन् ·· ।'[४]

२०. नलचरिते पुनः स्वयंवरार्थं बाहुकाख्येन नलेन सह मार्गे गच्छन्नेव ऋतुपर्णः तस्याश्वसंचालनकौशलं दृष्ट्वा तस्मै अक्षहृदयं प्रादात् । ततः नायकनायिकयोर्मिलनान्तरं यदातुपर्णः अयोध्यां गन्तुं प्रार्थयत् तदा नलः ऋतुपर्णायाश्वहृदयं प्रादादिति समुद्गीरितम्—

'इदं चैव हयज्ञानं त्वदीयं मयितिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ।।
एवमुक्त्वाददौ विद्यामृतुपर्णाय नैषधः ।'[५]

परं कथासरित्सागरे मार्ग एव परस्परं नलर्तुपर्णयो विद्यायाः आदान प्रदानं समभूत—

'ततो नलोश्वज्ञानं ऋतुपर्णाय तद्ददौ ।
ऋतुपर्णोऽप्यदादक्ष ज्ञानं तस्मै नलाय तत् ।।'[६]

---

१. म० भा० व० प० अ० ६६ श्लो० ८
२. क० स० सा० ३५१
३. म० भा० व० प० अ० ६३ श्लो० २३
४. क० स० सा० ३५३
५. म० भा० व० प० अ० ७६ श्लो० १६-१७
६. क० स० सा० ३८१

२१. एकमन्यत्परिवर्तनं कथासरित्सागरे वर्तते—'ह्रस्वबाहु' इति नाम्नि नले पुनः समागते सति यदा दमयन्ती तस्यपरीक्षणं करोति स्म तदा तस्मिन्परीक्षणक्रमे सा नलं केशिनीद्वारा स्वमहानसे भोजननिर्माणार्थमाकारयति—

**श्रुतं मया यद्भवता तुल्यो नान्योऽस्ति सूपकृत् ।**
**तन्ममाद्य त्वयागत्य व्यंजनं साध्यतामिति ॥**[1]

तदा नलसिद्धं भोजनं प्राश्य सा तं पर्यचिनोत् ।

महाभारतीये नलचरिते नलसिद्धं भोजनं तु दमयन्ती जग्राह परं स्व वेश्मनि भोजननिर्माणार्थं तं नाजुहाव ।

एतदतिरिक्तान्यन्यान्यपि सूक्ष्मतमानिभेदानि वीक्षितुं शक्यन्ते, परमकिंचित्करत्वान्न प्रदर्शनीयानि ।

**निष्कर्ष**—समभिहितेनानेन विवेचनैनेदं स्पष्टं प्रतिभाति यत् बृहत्कथामञ्जरी कथा सरित्सागरश्चानयोर्द्वयोरपि ग्रन्थयोर नुस्यूतत्वान्नलचरितस्यास्तित्वं गुणाढ्यस्य बृहत्कथायामप्यासीदिति निश्चीयते । नलचरितस्य कथावस्तुनः क्षेमेन्द्र सोमदेवाभ्यां यथा प्रयोगः कृतस्तस्याकलनेन ज्ञायते यत्बृहत्कथामञ्जर्यां कवेर्दृष्टिः संक्षेपणपरासीत । क्षेमेन्द्रः नलकथां संक्षिप्ततयैवोपपाद्य शिल्पनैपुण्यस्य कलात्मकाभिव्यक्तेश्च परिज्ञानं साधु सम्प्रददाति । बृहत्कथामंजर्यां संगृहीतासु कथासु नलकथा प्रभावोत्पादिका । बृहत्कथामंजरीकारः यथासम्भवं मौलिकमितिवृत्तं तथावदेव प्रयोक्तुमैच्छत् किन्तु संक्षेपण शैल्याः पारवश्यात् तत्र तत्राधिक्येन संक्षेपणं प्राप्यते । घटनाक्रमे यद्यपि नास्ति किमपि परिवर्तनं तथापि नलस्य देव दौत्य वृत्तान्तस्य लोपात् नलचरिते किंचिन्न्यूनत्वं सम्भवति । इदमपि नासम्भवं यत् मूल बृहत्कथायामपि नलदौत्यं नासीत् किन्तु महाभारतेन प्राप्त परिचयोऽपि क्षेमेन्द्रः कथं नायकचरित्रोन्नायकं वृत्तमिदंमत्यजदिति वक्तुं न शक्यते । महाकविः क्षेमेन्द्रः औचित्याचार्यत्वेन प्रसिद्धिमवाप अतस्तस्य प्रत्येकस्मिन् ग्रन्थे औचित्यस्य योजना सर्वत्रानुभूयत एव । बृहत्कथामंजर्याः नलचरितेऽपि तेनौचित्यविचारपूर्वकमेवेतिवृतस्य समायोजनं व्यधायि । यथास्थाने वर्णनसमासत्वात् तत्रस्था नलकथा स्वीये संक्षिप्तेऽपि कलेवरे प्रभावोत्पादिका संलक्ष्यते ।

---

१. क० स० सा० ४०४

कथासरित्सागरे महाकविः सोमदेवः यथाभूतं नल चरितमवर्णयत् तेन ज्ञायते । यदत्रोपवर्णितं नलचरितं स्वकाव्यात्मकाभिव्यक्तिकृते अद्भुतेतिवृत्त-वर्णनशैल्या कथाक्षेत्रे सर्वानतिशय्य विराजत इति । सोमदेवः व्यापक काव्य चक्षुषाऽथ च सूक्ष्मातिसूक्ष्म विवेकसरण्या मूलनलचरितस्य भावात्मकानि, रसात्मकानि च स्थलानि स्व ग्रन्थे यथा निरूपितवान् न तथाऽन्ये निरूपितवन्तः कथासरित्सागरे बृहत्कथामंजरीवन्नाति संक्षेपणं न चानावश्यकविस्तारभारेण कवि मौलिकं नलचरितं विश्रृंखलयति । यत्र संक्षेपणेन कथाप्रवाहे न कापि हानिः सम्भवति तत्रैव कविः संक्षेपणं समायोजयत् तथा च येषु प्रसङ्गेषु संवेगाधिक्यं रसार्द्रत्वं चास्ति यत्र च सामाजिकः हृदयाह्लादेनान्दोलयति तेषु कविः वर्ण्यं विस्तारयति । अतएव नलचरितस्य यथा भूतं संक्षिप्तं सौन्दर्यातिशय-पूर्ण सम्पादनं सोमदेवेन विहितं न तथा भूतं केनाप्यन्येन । मौलिकं कथावस्त्वाद्योपान्तं यथावद् परिरक्षन्नेव कविः तथाविधयायुक्त्या घटना चक्रं सम्बर्धयन् नलकथायाः गतिशीलतया सहृदयमावर्जयति, तस्यौत्सुक्यं कौतूहलवृत्तिं च स्फीतयति । परिसमाप्तावेव कथायाः सुखान्तत्वात् सोऽपि सुखमनुभवन् विरमते । मौलिके नलचरितेइतिवृत्तं घटनाबाहुल्येन, सुनियोजित घटकतत्त्वेन च यद्यपि प्रभविष्णुतामाधत्ते तथापि यत्र तत्र रस प्रवाहोऽवरुद्धः प्रतीयतेऽनुभूयते च । साम्प्रतिके युगेऽत्र परत्र च देशे समयाभावात् सामाजिकः न्यूनातिन्यून समयेऽधिकाधिकमानन्दानुभूतिं, वर्णनवैविध्यं, घटनावैचित्र्यं च दृष्टुमनुभवितुं च वांछति । अद्यत्वे कथायां साफल्यं तदेवास्ति यदा सत्यपि लघुनि कथ्ये तस्य वर्णन शैली, घटनाक्रमश्च तथा भूतो भवेद्येन श्रोता पाठको वा सोत्कण्ठं श्रृणुयात् रसाविष्टश्च भवेत । मौलिकं नलचरितं तु महाभारत कालिकं वर्तत एव तस्मिन्काले दीर्घकायकथानकाना श्रवणपठनवाचन परम्परासीत्, अवकाशश्चासीत् परन्तु अद्यत्वे न तादृशोऽवकाशः । कथा सरित्सागरोपवर्णिता नलकथा साम्प्रतिकस्य युगस्य प्रतिनिधित्वे सक्षमा, अस्याः संक्षिप्तं कथ्यं, रुचिरा वर्णन शैली, भावानुकूल शब्दयोजना प्रकारः, घटना वैविध्यं, सोद्देशता च कथाभिमां सर्वोत्तम कथायाः स्वरूपे संस्थापयति ।

कथासरित्सागरस्य नलकथायां कवेर्कवित्वमक्षुण्णतया सर्वत्र द्रष्टुं शक्यते । यद्यपि बृहत्कथा मंजरी कथासरित्सागरात्प्राचीना वर्तते, यद्यपि च सोमदेवः स्वीये काव्ये यत्किंचिद्वर्णनं क्षेमेन्द्रात् गृहीतवान् तथापि सोमदेवस्य नल कथा

कस्याप्यनुकरणमात्रत्वेन न कल्पयितुं शक्या। तस्याः स्वतंत्रमेवास्तित्वं वर्तते। अत्र कविकर्मणः चमत्कृतिं दर्शयितुं पूर्वं कथासरित्सागरे दमयन्त्याः मनोद्वेजिकागाथा तस्याश्च नल द्वारा तदनुरूपमुत्तरमेव पर्याप्तम् कथासरित्सागरकारः स्वीयाद्वितीय वर्णनशैल्याः कृते संस्कृतवाङ्मये सर्वदा स्मरिष्यते सोमदेवस्य "युगानुरूपाकथा" शैल्याविकासश्च संस्कृत साहित्याय सर्वोत्कृष्टमवदानं वर्तते।

ययोर्द्वयोः कथाग्रन्थयोश्चर्चाऽत्र विहिता समीक्षिता च तयोरतिरिक्तं क्षेमेन्द्रस्य भारत मंजरी, रामायण मंजरी तथा बुध स्वामिनः कथाश्लोकसंग्रहश्चास्ति। परं न कस्यापि ग्रन्थस्य तादृशः समादरो जातः यादृश उपरिलिखितयोर्ग्रन्थयोः। कथाग्रन्थेषु नलचरितस्य समीक्षणात्मकेनाध्ययेनेन कतिपयानि तथ्यानि समुद्घाटितानि भवन्ति। प्रथमतस्तु वैदिककालादेवलब्धसूत्रं नलचरितं रामायण काले, महाभारतकाले, जैनवाङ्मय काले इव कथा साहित्य युगेऽपि जनमानसेन संश्लिष्टमासीत्। अनेन नलचरितस्य जीवन्तता प्रमाणिता भवति। अपरतस्तु कथाकाराः स्वपूर्ववर्तिनां कवीनां ग्रन्थानां चाश्रयत्वं स्वीकृत्यैव स्वग्रन्थान् रचयामासुः। यद्यपि गुणाढ्यस्य बृहत्कथा एव कथाग्रन्थानामुपजीव्यत्वेन मुख्या तथापि तेषामितिवृत्तं महाभारतादिभिरपि प्रेरितं दृश्यते। जैनकविभिः या शैली प्रतिपादिता तस्याः अपि किंचिदनुवर्तनं कथाकारैः कृतम्। गाथायाः अस्तित्वं महाभारतेऽपि वर्तते। किन्तु तत्रत्यासु गाथासु सा प्रभविष्णुता न वरीवर्ति या कथाग्रन्थेषूपवर्णितासु गाथासु समनुभूयते। गाथायाः अद्भुतः प्रयोगः जैनवाङ्मयस्य नैजं वैशिष्ट्यम्। कथाकारा अपि तमनुचक्रुः येन तेषां गाथा भागः सशक्तो मार्मिकश्च परिलक्ष्यते।

निष्कृष्टार्थेनान्ते गदितुं शक्यते यन्नलचरितस्येतिवृत्तेन तद्घटकभाव्यमयत्वेन आकृष्टाः कथाकाराः स्वकथा ग्रन्थेषु नलचरितं प्रायुंजन्। नूतनाभिरुद्भावनाभिरस्य श्रीवृद्धिं चक्रुः।

## सप्तमोऽध्यायः

# संस्कृत काव्य साहित्ये नलचरितम्

विपुल ज्ञानराशेरक्षयशेवधिभूता संस्कृत भाषा ब्रह्मणो निश्वासभूतांञ्चतुरो वेदान् उपनिषदः पुराणानि काव्यानि च जीवयन्ती लोकजिजीविषां च पूरयन्ती आसृष्टेरद्यावधि संचकासते। वेदाः शब्द प्रधानतया, पुराणानि चार्थ प्रधानतया, काव्यानि च सरसतापादनेन लोकान् कर्त्तव्याकर्त्तव्ये समुपदिशन्ति। काव्यत्वस्य पूर्ण परिपाको रामायणे मिलति। भासाश्वघोषकालिदास भारवि माघादयः तदनुसृत्यैव काव्ये प्रवर्तिताः समभूवन्। यद्यत्याद्यं काव्यं रामायणं प्रशान्ते पावने च तपोवने महर्षिणा वालमीकिना प्राणायि किन्तु तदुपजीवीनि काव्यानि राज्याश्रितानि सन्न्यपि कवयः क्रान्तदर्शिनः कविर्मनीषी परिभूः स्वयंभूरिति विवेचन पराणि लोकमांगल्यं वितन्वन्ति। काव्य माध्यमेन लोकमांगल्यं विधातु लोकविश्रुतं चरित्रमपेक्षते तच्चरित्रन्तु पुराणेषु चेतिहासेषु च समधिकतया प्राप्यते यतो हि पुराणकाले श्रुतिसम्मतैः तपोभिस्त्यागैश्चासमुद्रक्षितीशो लोकविश्रुतः कश्चित भवितुमर्हति नान्योपायैः। अत एतेषामेवोदारचरितानामुदात्तचरित्रवैशद्यं काव्ये विविधविधया संधाय कविः पूर्ण कामो भवति। काव्यत्वधिया यथा काव्यान् रामायणमुपजीवयत कथावस्तु पात्र चरित्र वर्णनादि धिया तथैव महाभारतमपि तानुपजीवयति। महाभारतस्योपजीव्यत्वं स्वयं व्यासेनोक्तम्—

सर्वेषां कवि मुख्यानामुपजीव्यो भविष्यति।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः॥

वस्तुतः प्रायशो हि काव्ये महाभारतादेव कथावस्तुनि गृहीतानि दृश्यन्ते। राम सम्बंधि कथावस्तु मुख्यतो रामायणात् कृष्ण सम्बन्धि कथावस्तु च मुख्यतो महाभारतात् गृहीतं यस्मिन्नुत्तरोत्तराणां काव्यानां छायानुबन्धोऽपि प्रचुरतया प्रतिबिबिम्तो दरी दृश्यते फलतः वस्तुदृष्टया काव्ये द्वे दीर्घे परस्परे समुदिते जात राम साहित्य परम्परा कृष्ण साहित्य परम्परा च। एतयोर्मध्यात् एका

पौराणिकाख्यानसम्बन्धिनी परम्परा समुद्गता यस्यां सुबहूनि काव्यानि प्रणीतानि । नलचरितमप्यस्यां परम्परायां परिवर्धितं सदिदानीं सर्वानतिक्रम्य शेखरायते । यद्यप्यस्य बीजं "नलो नैषधः" इत्यनेन वेदेऽप्युप्तं प्रतीयते किन्तु काव्य साहित्यस्य कृते तद्बीजं न बहुपयोगि सिद्धं जायते परिणामतः राम कृष्णवत् नलोऽपि प्रभविष्णुना श्रुतिस्मृत्यनुमोदितशक्तिशीलसौन्दर्येण न केवलं पुराणेषु संस्कृत काव्येषु च प्रत्युत् हिन्दी तमिल तेलुगु कन्नड़ादि भारतीय साहित्येषु तथा चांग्रेजी जर्मनादि वैदेशिक काव्येष्वपि परिचर्चितः सार्वदेशीयः सार्वजनीनः सार्वकालिकः सिद्धो भवति येन तस्य पुण्यश्लोकत्वमपि प्रखरतया संदीपितं भवति ।

प्रस्तुतेऽध्याये नलचरितमधिकृत्य समुपवृंहितानि महाकाव्यानि चम्पूकाव्यानि गद्यकाव्यादीनि् समीक्ष्यन्ते येषु नैषधीय चरित्रं महाकाव्यं नल चम्पूः सहृदयानन्द काव्यं, नलकीर्ति कौमुदी विशेषतः उल्लेखनीया । अत्रोपलब्धानां काव्यानां वर्गीकरणेन नलचरित सम्बद्धानां काव्यानां द्वौ वर्गौ प्रस्फुटतः । प्रथमो वर्गः नलचरितस्यार्द्ध भागेन द्वितीयो वर्गश्च तस्य सम्पूर्ण भागेन काव्यं परिसमाप्य परितुष्यति । प्रथमे वर्गे श्री हर्ष प्रणीतं नैषध महाकाव्यं श्रीत्रिविक्रम भट्ट प्रणीतं नल चम्पू काव्यं च परिगृहीतम् एवमेव द्वितीय वर्गे नलकीर्ति कौमुदी सहृदयानन्द काव्यं च परिगृहीतम् । तत्रादौ कथाया अर्ध भागेनैव समाप्तं नैषध महाकाव्यं विवेच्यते—

## नैषधीय-चरितोपवर्णितं नलचरितम्

पण्डितवर्यस्य महाकवेः श्रीहर्षस्य काव्य ग्रन्थे नैषधीय चरिते महाभारतादिषु प्रसिद्धो नलः काव्य दृष्टया सम्यगुपवर्णितः । वेदशास्त्र काव्यानां विनेयोपदेश शैली विभिद्यते परस्परम् । आदेश स्वरेण कृते वैदिकोपदेशः श्रद्धावांल्लभते । यथा च भगवता श्रीकृष्णेन —

**श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।।**[1]

इति प्रतिपादितमथच शास्त्राणां पुराणेतिहासादीनां प्रतिपादितोपदेशः श्रोतुः विश्वासधारामवलम्ब्य चरितार्थो भवति । यथा चोक्तमभियुक्तैः—

**आपदां कथितः पन्था इन्द्रियाणामसंयमः ।**
**तज्जयः सम्पदां मार्गः येनेष्टं तेन गम्यताम् ।।**[2]

---

१. गीता, अ० ४ श्लो० ३९ २. सुभाषितम् ।

परं एष उपदेशः वैदिको वा शास्त्रीयो वा श्रोतुः श्रद्धा विश्वासावालम्बते। साम्प्रतिके युगे श्रद्धाविश्वास विहीनस्य जनस्य कृते क इवोपदेशः साफल्यं भजेदिति चिन्तापरैः निष्कारण कृपालुभिः साहित्यशास्त्र मर्मज्ञैः तृतीयासरणि-रूपदेशस्य प्रकाशमानीता। सेयं सरणिः रुचिमनुसृत्य ददात्युपदेशम्, रुचिः कान्तेव अवसरवादितामवलम्ब्य देशकालोपयोगिनी त्वरितं सफलतामेति उपदेशाय। सक्षमा सेयं सरणिः वाग्देवतावतारेण आचार्यमम्मटेन कान्ता सम्मित-तयोपदेश इति शब्देनोट्टंकिता।[1] शब्दप्रधानोपदेशः वक्तुः प्रभावनिष्ठः, अर्थ-प्रधानोपदेशश्च श्रोतुः प्रभावितत्वनिष्ठः परं भावना प्रधानोपदेशः वक्तृ श्रोतृ-सरणि माध्यमेन सफलतामेति सर्वमेतदालोचयन् श्री हर्षः कलिविनाशोपयोगाय महाराजं नलं काव्येन निबबंध।[2]

अत्र नैषधीयचरिते राज्ञशासनौपयिकाः गुणाः उपदेशाय यथाक्रमं विद्या, नय, पराक्रम, सौन्दर्य, रुचिमत्तादयः विस्तरेण वर्णिताः। राजा नलः चतुर्दश-विद्या पारंगतः यद्वा अष्टादशविद्या पारंगतः आसीत्।[3] चन्द्रे कलंकरेखा नलस्य सेनासैन्धवोत्थापित रजसः संजाता यद्रजः उड्डीय समुद्रेपतितं, स्थिरता-मुपगम्य कलंकमिवसंजातम्।[4] सेनाचातुर्यं नलस्य सर्वत्र सुविख्यातमासीत्। सौन्दर्य सीमानं स्पशन् युवानलः कदाचित् विदर्भराजस्य राजकुमार्याः भैम्याः स्वप्ने संदृष्टः। स्वप्न विज्ञानस्य याथार्थ्यं चित्रयन् महाकविः सर्वान् देशीयान् विदेशीयांश्च स्वप्न विद्याविशारदान् अनुसरते। सर्वविधकला निष्णातोऽपि नलः

---

१. काव्यं यशसे र्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेश युजे॥
काव्य प्रकाश मम्मट प्रथम उल्लास कारिका २

२. कर्कोटकस्य नागस्य दमयन्त्याः नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलि नाशनम्॥
—म० भा० व० प० अ० ७९ श्लो० १०

३. अमुष्यविद्यारसनाग्रनर्तकी त्रयीव नीताङ्ग गुणेन विस्तरम्।
अगाहताष्टादशतां जिगीषया नवद्वय द्वीपपृथग्जयश्रियम्॥
—नैषध स० १ श्लो० ५

४. यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममंजिम।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पंकीभवदंकतां विधौ॥
—नै० सर्ग १ श्लो० ८

विनोदस्वभावमनुवर्तयन् प्रजासु प्रीति पात्रं भवतीति वर्णयितुमुपक्रान्तेन तुरग-क्रीड़ा चर्चामारचयता महाकविना नलः सर्वगुण सम्पन्नो समुपवर्णितः । महाकवीनां मुख्यो विषयः रसानुभावनम् ।[१] आदिकवेः इतिवृत्तमात्रनिर्वाहेण आत्मं-पदलाभइतिहासादेरेव तत्सिद्धेः[२] इति च ध्वनिकार दिशा इतिहासात् काव्यस्य विविक्त विषयं भवति । तथ्यमैतिहासिकं परिवर्तयन् समये च परित्यजन्नपि महाकविः ऐतिहासिक वृत्तेन रसपरिपोषमारचयति । एतेन कविना नल चरिते भैमीं प्रत्यनुरागः पूर्वं भैमीमनुरज्य पश्चादुपवर्णितः । एषैव कामशास्त्र-स्थिति ।[३] कामशास्त्रमनुसरन् कविः नैषधस्य द्वितीय सर्गे हंसदूतं विधानीकृत्य भैमी समक्षं सम्प्रेषितवान् । भैमीं नगरीं कुण्डिनपुरीं विचित्र भावालंकारैः वर्णयता कविना अप्सरोभिः शचीव नन्दने सखीभिः समेता उपवने भैमी हंस समक्षं प्रापिता । तृतीय सर्गे वैदुष्य परिचायिकाभिः सारगर्भाभिः समाकर्षण प्रवणाभिः वाक्चातुरीभिः पूर्वतः सानुरागां भैमीं नलमिलनाय प्रोत्साहयन् हंसा स्व प्रतिज्ञां सार्थिकृतवान् ।[४]

आचार्यं मम्मटस्य काव्यं प्रयोजनं व्यवहार ज्ञानं[५] सफलयन्ती भैमी हंसं बोधयति यथा—अवसरं समीक्ष्य भवतुनाम विलम्बः मत्कार्ये त्वया नल समक्षं सम्पाद्यम् । नहि पित्ततिक्तेरसने सिता स्वदते न वा अन्तःपुरसंन्तुष्ट-स्यान्तःकरणस्य रम्भाप्यावर्जयति । विज्ञेन त्वया तस्मात् समयं समीक्ष्य कृतं कार्ये निवेदयन् सफलं भवतीति वैदुष्यं दमयन्त्याः ।

प्राथमिकीं परस्परानुरागप्रक्रियामनुभवन् युववर्गः कीदृशीं दशामनुभवति इति विचारयता परेण संवेदनशीलता स्वीयां प्रति प्रदर्शनीया नीतिमिमां काम-शास्त्रीयां संसार मूलभित्ति परिचेयता पण्डित हर्षेण चतुर्थ सर्गे भैमी विरहः

---

१. मुख्या व्यापार विषयः सत्कवीनां रसादयः ।
तोषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥ —ध्वन्यालोक उद्योग १

२. दृष्टव्य —ध्वन्यालोक तृतीय उद्योत, कारिका-१९

३. आदौवाच्यः स्त्रिया रागः पुंसः पश्चात् तदिर्गतैः —साहित्य दर्पण

४. तदहं विदधे तथा तथा दमयन्त्या सविधे स्तवस्तवम् ।
हृदये निहितस्तया भवान् नापि नेन्द्रेण यथापनीयते ॥
—नै० सर्ग० २ श्लो० ४७

५. काव्य प्रकाश —प्रथम उल्लास कारिका २ ।

उपवर्णितः। विरहदहन परिशुद्ध सुवर्णः क्षमतेऽलङ्काराय इति युक्त्या पंचमे भैमी इन्द्रादि लोकपालैरभिलषिता। दूती सम्प्रेषण द्वारा बहुविधेन च प्रभुत्व-पाटवेन प्रलोभिता परं वैदुष्यभावेन भैम्याः मुद्रितमुखाः दूत्यः प्रणम्य देवान् निष्फलतामात्मानं प्रकाशयन्त्यो निर्गताः।

अथ षष्ठे सर्गे कथमपि चातुर्येण इन्द्रो नलं दूतं कृतवान् अन्तर्धानत्वं च प्रत्युत्पन्नमतिभिदेवैः काव्य वृत्तसम्पादनाय अंगुलीयकमिव शकुन्तलायाः मणि-कांचन संयोगेन समर्प्यते।

महाकवि कुलगुरु कालिदासस्य परम्परामनुरुन्धानेन कविना अंगुलीयक-मिव अन्तर्धानवेदनं प्रमुखीकृतम्। एतेन दुष्यन्तस्यैव नायकस्य नलस्य दोषहानिः गुणावाप्तिः सर्वथा च समाधानं सम्प्रतिपन्नं प्रेक्षावताम्। नलस्य नायिका भैमी कीदृशी विदुषी आसीत् सर्वमिदं श्रुतवृहस्पति वाक्पाटवानां स्वाभाविक चातुर्य निधानानामपि[1] दूतीनां सम्मुखमायातम्। पण्डित हर्षस्य नायिका भैमी सप्तमे प्रत्यंगमुपवर्णिता नायकेन। कवेः प्रातिभं वर्णनं नायिकांगेषु भृगुनारद व्यासानां प्रमुखमहर्षीणां रुचिकृतावस्थितीनां चमत्कारावहम्।[2]

अष्टम नवम सर्गयोः संवाद चातुर्यं भैमीनलयो तर्क प्रधानं तार्किकानामपि मनांसि सम्मोहयति। यथाः ते किं नाम् ? नलःप्रतिवदति सभ्याः नाम नोच्चार-यन्ति। शृणोति च—यदि सभ्यानाम नोच्चारयन्ति तत्किं परवधून्स्वच्छंदं संल्लपन्ति। का नाम सभ्या असंस्तुतं भावुकं पुरुषं स्वच्छंदं वदेत्। प्रतिबन्द्यानया-नुत्तरो[3] नलः प्रशंसन् चातुरीं च प्रयुज्यमानः समये भैम्यां नारी सुलभाम-धीरतामारोपयति। यदि देवा विघ्नैकपराः स्युः तदा ते दुरापो नल इति।[4]

---

१. स्त्रीणामशिक्षित पटुत्वममानुषीषु संदृश्यते किमुत या परिबोधवत्यः
प्रागन्तरीक्षगमनात् स्वमपत्यजातमन्यद्विजै परभृताः किल पोषयन्ति।
—अभिज्ञान शाकुन्तलम् अंक ५, श्लोक २३

२. अस्यांमुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैलशीली
नानारदाह्लादि मुखं श्रितोरुव्यासो महाभारतसर्गयोग्यः॥
—नै० स० ७, श्लो० ९५

३. हृदाभिनन्द्यप्रतिबन्द्यनुत्तरः प्रियागिरिः सस्मितमाह सस्मिताम्।
वदामि वामाक्षि परेषु मा क्षिप स्वमीदृशं माक्षिकमाक्षिपद्वचः॥नै० ९।१७

४. इदं महत्तेऽभिहितं हितं मया विहायमोहं दमयन्ति चिन्तय।
सुरेषु विघ्नैकपरेषु को नरः करस्थमप्यर्थीमिवाप्तुमीश्वरः॥ नै० ९।८३

अन्ततः एकोरसः करुण एवेति[1] भवभूति वचनमाद्रियमाणो महाकविः प्रथम सर्गे हंसस्येव नवम सर्गे भैम्याः कारुण्य रसापगाः गिरः प्रविशन्त्यो निजाशये परीक्षामाणः नलः आत्मानं प्रकाशयत् । नस्वस्थः परं प्रमत्त इव । परस्परं च तौ कृत प्रतिज्ञौ परेद्यवि स्वरंवरार्थं सन्नद्धौ सम्मिलितो चास्ताम् । स्वयंवरे दशमेकादशद्वादशानां सर्गाणां कथा वृत्तं स्वादं स्वादं सहृदयाः त्रयोदश सर्गे पंचनली वर्णनं शृण्वन्नेव गम्भीर हृदं आध्यात्मिक रहस्य विज्ञानाय प्रविशंति । चतुर्दश सर्गे नलाय भैम्यै च वरं प्रदाय वाग्देवी स्वयंवरात् प्रतिनिवृत्ता । तदिदं वरं—अवामावामार्द्धे०[2] इत्यादि श्लोके ओं एं ओं, ओं ह्री ओं, ओंक्लीं ओं इति बीजमंत्रान् यथारुचि निस्सार्य मनीषिभिः प्रशंसितम् । कोऽत्र मूलमंत्रः नेदमद्यापि क्षोदक्षमं संजातम् । युक्तिरिह आचार्य बलदेवोपाध्यायैः स्वधारणानुवृत्तधिषणानामुपदेशाय साधुदर्शिता[3] ।

पंचदश सर्गे स्वयंवरायोपस्थितानां राज्ञां सत्कारः षोडश सर्गे च वर यात्रा भोजनादि प्रकारः कविना स्वप्रातिभेनानुच्छिष्ट इव अयोनिकाव्यरूपः प्रदर्शितः । उपहासश्चात्रशिष्टः । यथा – वर्तिकामिलनसमये आहूतापि पश्चात्कृता सखी नलमुपगम्य वीजयन्तीं पूर्वामुपहसितुकामा मध्येपादं दर्पणं निदधौ । दर्पणस्य एक उपयोगः विरह वर्णनेऽपि भैम्या सखीं प्रतिविहितः ।[4] एतेन दर्पण विधानेन दीपशिखा कालिदास इव[5], घण्टामाघ इव[6], दर्पण हर्ष इत्यपि सोपा-

---

१. एकोरसः करुणएव निमित्तभेदात्.. उत्तररामचरित ३।४७

२. अवामावामार्द्धे सकलमुभयाकारघटनाद्, द्विधामूर्तरूपं भगवदभिधेयं भवति यद् ।
तदन्तरर्मन्त्रं मे स्मर हरमयं सेन्दुममलं, निराकारं शश्वज्जप नरपते सिध्यतु स ते ।। नैषध० १४।८५

३. मरम न जाने रूप को मुकुर कपोलनिपेखि ।
सवैगवारी गांव की गई आपु समलेखि ।। संस्कृत साहित्य का इतिहास
बलदेव उपाध्याय

४. कुरु करे गुरुमेक मयोधनं बहिरितो मुकुरं च कुरुष्वमे ।
—नैषध सर्ग ४ श्लोक ५९

५. संचारिणी दीपशिखेवरात्रौ यं यं प्रतीयाय पतिंवरा सा ।
—कालिदास रघुवंश सर्ग ६

६. उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौहिमधाम्नि याति चास्तम् ।

धिकं वक्तुं शक्यते । सप्तदश सर्गे महाकविः आस्तिक नास्तिक दर्शनानां विचार्य संगतिं अद्वैत वेदान्तस्य च प्रतिपादनं दार्शनिकानामपि मनो मोहाय वैपश्चितीं विवृण्वानो विधत्ते ।

अथाग्रिम सर्गेषु सर्वत्र कवि दाम्पत्य व्यवहार प्रांजलतां प्रदर्शयन्नपि विदुषां सहृदयत्वं प्रतिबोधयन् क्षेमेन्द्ररीत्या[1], वैयाकरण विरागाय साहित्य विद्यानुरागाय सक्षमं वदति येन उपहासोऽपि स्यात् पण्डित राजसमालोचनया[2] च तत्त्व प्रदर्शनमपि संतिष्ठेत् । निशीथं यावत् श्रान्ता भैमी उषसि निर्जिगमिषुं प्रियं व्याजेन ब्रवीति – कपोतोऽयं किं वदतीति । त्वरया बोधयति नलः यथाऽयं कपोतः पूर्ववैयाकरणः । पुनश्च व्याख्यायितम् – यथा निज प्रेयस्याः व्याकरण-गवाक्षपूतिवायु सम्पर्को न स्यात् –

**दाक्षी पुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः,**
**कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषानुयातः ।**
**सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन् यो घुसंज्ञाम,**
**प्राक्संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिका पाठनेन ।।**[3]

व्याकरणस्य दर्पः साहित्येन विनाशित इति ।[4]

अन्ते च महाकविः नलचरितं प्रस्तावयन्नपि सरसमधुरं सर्वजनसुगमसरण्या

---

वहति गिरिरयं विलम्बिघण्टा-
द्वय परिवारित वारणेन्द्र लीलाम् ।।
—शिशुपाल वध माघ सर्ग ४ श्लोक २०

१. यस्तु प्रकृत्याश्म समानएव कष्टेन वा व्याकरणेन नष्टः ।
औचित्यविचारचर्चा उत्प्रेक्षा प्रकरण —क्षेमेन्द्र ।

२. 'वैयाकरण मतविरोध इतिनशंकनीयम्-स्वतन्त्रत्वात् साहित्यतन्त्रस्य
वैयाकरणा एवास्माननुसरेयुः वयं किमितितානनुसरामः ।।
—पण्डित राज जगन्नाथ रसगंगाधर

३. नैषध सर्ग १९ श्लो० ६१

४. भक्तुं प्रभुः व्याकरणस्य दर्पम
पदप्रयोध्वनि लोक एषः ।
शशोयदस्यास्ति शशी ततो य—
मेवं मृगो स्यास्ति मृगीतिनोक्तः ।।—नैषध सर्ग २२, श्लोक ८२

पाण्डित्य प्रोन्मुखीकरणाय ग्रन्थग्रन्थीन् प्रति विनेयतामात्मनः दर्शयति [1]। इदमित्थं नलचरितं रसपरिपाक प्रणाली विनिर्गत स्वप्रातिभेन चमत्कारोपपादकेन कुर्वन्नपि महाकविः नैश्चिन्त्यं महाकवेः मूलतत्वं—

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात् ।**
**यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।।**
**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः ।**
**श्री श्री हर्ष कवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ।।[2]**

इत्युपदिशन् विरराम।

नैषधीय महाकाव्यस्य प्रस्तुतात् संक्षिप्तसारात् ज्ञायते यत् पुण्यश्लोकस्य नलस्य चारित्रौदात्य वर्णनेन सह स्वस्य प्रौढ़ पाण्डित्यस्यापि प्रदर्शनं परमविदुषः श्री हर्षस्य मूलमुद्देश्यमासीदिति ग्रन्थग्रन्थिरिह इत्यनेन सिद्धयति। नैषध महाकाव्यस्य परिशीलनान्तरं वस्तुतो "नैषधं विद्वदौषधमिति" भणितिः यथार्थ्यमवगाहते। काव्ये आद्योपान्तं यावत् कवेः वाग्विलासः विविध गुणालंकाररसरीत्या वृत्या च संचंक्रमते। कुत्रचिच्च वस्तूनामूहापोहात्मिकथा प्रौढोक्त्या तु सर्वमेव काव्यजातं महाभारतीय नलचरितादिभिन्नं कवि कल्पनयैवोद्भूतं प्रतीयते। डा० एन० पी० उन्नि महोदयेनेत्थमभिहितम्—The treatment of the subject, in a sence, differs wholly from that of the original in the Mahabharata."[3] नैषधीय चरितं परिभाषयता डा० ई० रोथर महोदयेन या सम्पादकीय टिप्पणी कृता सा शतांशे चरितार्था दृश्यते—"With the structure or frame of the poem our delight is nearly unqualified. The language is highly elaborate, hearing the mirror's polish. It never becomes common place, and bears throughout a sustained tone of sprightliness and elevation. Although we find a continual play upon words for many verses together, yet, not only is the sense is not lost in a mere gingle

---

१. ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञम्मन्यमना हठेन पठिती मास्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृत दृढ़ग्रन्थिः समासादयः,
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ।।
—ग्रन्थान्ते कवि प्रशंसा श्लोक ३

२. कविप्रशंसा नैषधान्ते श्लोक ४

३. Nala Episode in Sanskrit Literature—Dr. N. p. Unni P. 24

of syllables, but the general effect is often much enhanced by the harmonious contrast of open and concealed meangings. The variety of meters are handled by the poet with admirable art and propriety; the subject sparkles under his tread as gleams the ocean-track in a ship's wake, rich in imagery showere unceasingly from the poet's mind...Sarasvati's description of the five Nalas is a ready instance of his characteristic pecularitiies. The poet tells of the five Nalas: each verse has what we may term as overt and a sub-meaning or meanings, the former applying to Nala, the latter to the god who had assumed Nala's form, and, in conclusion, the same collocation of words has a reference to the character and manifold attributes of the Nalas···To sum up, in structure, force and elegance of diction, in propriety and graceful ease of metre, in powerful description, and felicitous use of imagery the Naisadha ranks high and may enter the lists with any work of Sanskrit literature, but to fit it for a place among the poems of the first order, it wants incidents, actions and dignity."[१]

नैषधीयचरिते महाकविः नलदमयन्त्योर्विवाहकौतुकावसरे कलिद्वापरयो समागमनवृत्तान्तपर्यन्तमेवेतिवृत्तं समाख्यातवान्, यद्भारते सार्द्धैकशतश्लोकेषु समुद्गीरितम् व्यासदेवेन । महाभारतस्य वनपर्वणः पंचाशतमादध्यायादारभ्य पंचपंचाशतमाध्यायपर्यन्तेषु पंचस्वेवाध्यायेषूपनिबद्धमिदं कथावस्तु श्री हर्षेण द्वाविंशत्सर्गेषु अष्टशतोत्तरद्विसहस्रेषु पद्येषु सुविस्तीर्णत्वेन समुपन्यस्तम् । परं नलचरितस्यार्द्धमात्रेतिवृत्तसमुपवर्णनेनापूर्णत्वं नैषधस्यानुमीयते । आपूर्वरागसमारम्भात् नायकनायिकयोर्विवाहरूपफलागमपर्यन्तं नलचरितोपवर्णनेनैव काव्य समाप्तिर्भवेत्तर्हि युक्तमौचित्यपरत्वात् किन्तु विवाहावसरे कलिद्वापरसंवादस्य संयोजनं महाकविः कथं समभिहितवान्, कस्माच्च प्रयोजनात् ? नैषधं परिपूर्णं न वाऽस्मिन्विषये विदुषां नैकमत्यं वर्तते । नैषधस्य सुविख्यातेनविदुषा डा० ए० एन० जानी महोदयेन भणितम्—

---

१. A critical edition of Naishadha, by A. N. Jani Ch. III pp. 18-25

"Naishadhiya Charitas story is full or not, in this matter there are too much conversation between scholars."[1]

नैषध महाकाव्यस्य टीकाकारो नारायणः काव्यं पूर्णतमं मन्यते-"आनन्द पदेन तुष्टयेऽस्तु इत्याशिषा च ग्रन्थ समाप्ति द्योतयति। महाभारतादौ वर्णित स्यापि उत्तरनलचरितस्य नीरसत्वेन नायकानुदयवर्णनेन रसभंगसदभावाच्च काव्यस्य च सहृदयाह्लादनफलत्वाच्चात्र उत्तरचरितं श्री हर्षेण न वर्णितमित्यादि ज्ञातव्यम्[2]।

अत्र टीकाकारेण प्रदर्शितं कारणमसमीचीनं भाति, उत्तरनलचरितस्य समुपवर्णकानां काव्यानामुपलब्धत्वात्।

महाकवेः श्रीहर्षस्य नैषधमहाकाव्ये यानि स्थलानि मौलिकेन नलचरितेन सार्द्धं साम्यं बहन्ति, निम्नांकिताया सारण्यां तानि प्रदर्शयन्ते—

**महाभारतान्तर्गत नलचरितस्य नैषधेन सह सन्दर्भ साम्यपत्रम्**

| क्रमांकः | सन्दर्भ | महाभारत | नैषध |
|---|---|---|---|
| | | अध्याय। श्लोक | सर्ग। श्लोक |
| १. | नलवर्णनम् | ५०।१-४, ४७ | १।१-३० |
| २. | दमयन्तीवर्णनम् | ५०।११-१३ | २।१७-३९ |
| ३. | प्रेमवर्णनम् | ५०।१५-१६ | १।३२-४८ |
| ४. | नलस्यूपर्वरागः | ५०।१७ | १।४९-११६ |
| ५. | हंसग्रहणम् | ५०।१८ | १।११७-१२८ |
| ६. | हंसवाक्यम् | ५०।१९-२० | १।१२९-१४२ |
| ७. | हंसमोचनं तस्यविदर्भ-गमनम् | ५०।२१ | १।१४३—<br>२।१-१७३ |
| ८. | हंस दमयन्ती मिलनन् | ५०।२२-२५ | २।१०७—<br>३।१-२) |
| ९. | हंसदमयन्ती सम्वादः | ५०।२६-३० | ३।१३-१२८ |
| १०. | दमयन्ती विरहः | ५१।१-४ | ४।१-११४ |

१. Naishadhiyacarita, Bibilotheca Indica, Ed. by Er. E. Roer Calcutta, 1855 Introduction pp. v-vii

२. नैषध नारायणी टीका सर्ग २२, श्लोक १४८।

| | | |
|---|---|---|
| ११. नारद पर्वत इन्द्र संवादः | ५१।११-२१ | ५।१-४४ |
| १२. नलदेव मिलनम् | ५१।२६-२७ | ५।६०-७२ |
| १३. नलदेव संवादः | ५१।२८—<br>५२।१-१० } | ५।७३-१३७ |
| १४. दमयन्ती नलयोः परस्परं हर्म्ये पूर्वदर्शनम् | ५२।११-१२ | ७।१-१०९ |
| १५. नलदमयन्ती संवादः | ५२-१८—<br>५३।१-११ } | ८।१९—<br>९।१-१५८ } |
| १६. स्वयंवरागतराजवर्णनम् | ५१।९-१०)<br>५४।१-२) | १०।१-३६ |
| १७. स्वयंवर वर्णनम् | ५४।३ | १०।५७-६० |
| १८. राजपरिचयः | ५४.१० | १०।७ –)<br>१३।...) |
| १९. विवाह वर्णनम् | ५३।३३ | १५।१-९२<br>१६।४८-११२ } |
| २०. नलानन्दम् | ५४।३४-३७ | १८।——)<br>१९।——)<br>२०।——)<br>२१। १-६)<br>११९-१६२)<br>२२।——) |
| २१. नलस्यधर्माचरणम् | ५४।३६ | २१।७-११= |
| २२. कलिद्वापरदेव संवादः | ५५।१-४ | २२।१०९-२२१ |

समाख्यातेनानेन साम्यसन्दर्भेण ज्ञातुं पार्यते यद्वर्णनविस्तार एव कवेर्लक्ष्यम् । प्रतिभाप्रदर्शनस्यास्मिन्क्रमे मौलिकमितिवृत्तमिह गौणत्वं भजते, फलतो महाभारतीय नलचरितात् बहुतरं वैभिन्यं संलक्ष्यते । कतिपये सर्गा एव सर्वथा कविकल्पनासौधायिताः । वैषम्यसम्पादनकर्मण्यस्मिन् प्रो० आर० के० हन्डेकी महोदयस्य टिप्पणं सुसमीचीनम्—

"For the example the contents of cantos vi, vii, xv, xix, xx, xxi, xxii, which are totally absent in the Mahabharata.

The same is true of the greater parts of the cantos or the seventeenth canto."[1]

श्री हर्षेण यथा नलचरितमाख्यातं तेन नैषधस्य नलचरितं तस्योदात्त-कविकल्पनाप्रसूतमिव भाषते । बहवः नूतनाः प्रसंगाः महाकविना समायोजिताः, तदत्र मूलनलचरितेऽनुपलब्धानां, नैषधे समुपवर्णितानां प्रसंगानामुल्लेखनमनया निम्नांकितया सूच्या क्रियते—

**नैषधे कविकल्पितानि वृत्तान्तानि**

| क्रमांकः | वृत्तान्तम् | सर्ग।श्लोक |
|---|---|---|
| १. | अश्ववर्णनम् | १।५७-६३ |
| २. | वृक्षवर्णनम् | १।७६-१०३ |
| ३. | सरोवरवर्णनम् | १।१०८-११६ |
| ४. | हंसवर्णनम् | १।११७-१२३ |
| ५. | कुण्डिनपुरीवर्णनम् | २।७३-१०६ |
| ६. | दमयन्त्याः अन्तःपुरवर्णनम् | ६।५८-७२ |
| ७. | इन्द्रस्य कामवेदनावर्णनम् | ५।४५-५५ }<br>८।६१-७० } |
| ८. | अन्येषांदेवानां कामावस्थावर्णनम् | ८।७१-१०८ |
| ९. | नलस्य दमयन्त्याः हर्म्ये निःशंकविचरणम् | ६।१०-४७ |
| १०. | सरस्वती वर्णनम् | १०।७४-८८ |
| ११. | समागत राजवर्णनम् | ११।२७— }<br>१२।१-१०६ } |
| १२. | विवाहोपक्रमः | १५।सम्पूर्ण |
| १३. | वरमालिकामेलनम् | १६।१३-४७ |
| १४. | दमयन्त्याः भ्रात्रा मेन सह वरयात्रिणां हास्यम् | १६।४८-११२ |
| १५. | कलिवर्णनम् | १७।१५-३४ |
| १६. | चार्वाकानांखण्डनमण्डनम् | १७।३६-१०६ |
| १७. | निषिधापुरीवर्णनम् | १७।१६३-२०४ |

१. A critical edition of Naishadha by R. K. Hundequi, Deccan College Research Institute, Pune, Synopsis—p. 1, 1957

कविकल्पनावैशद्येन नूतननूतनोद्भावनाभिः संवर्द्ध्य संप्रदर्शितानि स्थलानि सूच्यानया ख्यातानि । एतेषामतिरिक्तं द्वयोर्ग्रन्थयोर्नैषधमहाभारतीयनलचरितयोः यदितिवृत्तं घटनासाम्येनैक्यं वहति तस्मिन्नपि यत्र तत्र परिवर्तनं संलक्ष्यते तदित्थम्—

१. महाभारते नलः अन्तःपुरसमीपवर्त्तिन्येकस्मिन्वने समागतान् हंसानवलोकयति—

**अन्तःपुर समीपस्थे वन आस्ते रहोगतः ।**
**स ददर्श तदा हंसान् ··· ··· ··· ···॥[1]**

परं नैषधे महाकविः लालित्ययोजनार्थमुपवने संस्थित एकस्मिन्सरसि यदृच्छया समवतीर्णं हंसं समुपवर्णयत्—

**पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसु हंसी कलनाद सावरम् ।**
**स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥[2]**

क्षेमदेवः स्वीये कथासरित्सागरे सरोवरेऽवतीर्णं हंसं प्रादर्शयत् नैषधवद् ।

२. भारते नलो यदा हंसस्य प्रस्तावं शुश्राव—यदहं दमयन्त्याः सकाशे त्वां समुपवर्णयिष्यामीति तदा तस्यां जाताभिलाषः सन् हंसं मुमोच—

**ततोन्तरिक्षगो वाचं व्याजहार तदानलम् ।**
**न हन्तव्योऽस्मि ते राजन् करिष्यामि हि ते प्रियम् ॥[3]**
**दमयन्ती सकाशे त्वां वर्णयिष्यामि नैषधः ॥**

परं नैषधे प्रारम्भादेव नायकस्यचारित्र्ये गुणौधान् सन्धित्सुः महाकविः इतिवृत्तं परिवर्त्यावर्णयत्—यत् हंसस्य करुणविलपितं श्रुत्वैव नलस्तं मुमोच ·

---

१. म० भा० व० प० अ० ५० श्लोक १७

२. नैषध सर्ग १ श्लो० ११७

३. म० भा० व० प० अ० ५० श्लोक १९।२० ।

**इत्थममुं विलपन्तममुं चदब्रीनदयालुतयावनिपालः ।**
**रूपमदर्शि घृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥**[1]

काव्यशास्त्रीया या परम्परा नायके दानवीर धर्मवीर दयावीरादि सद्गुणान् प्रतिष्ठापयति तामनुरुन्धानेन महाकविना श्री हर्षेणाऽपि नलस्य चारित्र्ये दयावीरत्वमनेन सम्पादितम् ।

३. महाभारते दौत्ये कर्मणि हंसानां बाहुल्यं समुद्गीरितम्—

**अथ हंसाविससृपुः सर्वतः ... ... ...।**
**... ... ... तान्हंसान् समुपाद्रवन् ॥**[2]

परं नैषधे एक एव हंसः दौत्यमकरोत् यथा वृहत्कथामंजर्या कथासरित्सागरे च प्रतिपादितम्—

**स ययौ धुतपक्षतिः क्षणं क्षणमूर्ध्वायन दुर्विभावनः ।**
**विततीकृत निश्चलच्छवः क्षणमालोककदत्तकौतुकः ॥**[3]

४. महाभारते दमयन्त्याः विरह वार्ता तस्याः सखी गणेन पितुर्भीमस्य समक्षं प्रापिता —

**ततो विदर्भपतये दमयन्त्याः सखीगणाः ॥**[4]

परं नैषधमहाकाव्ये काव्यवृत्तसम्पादनसमुत्सुकः श्रीहर्षः, नायिकाया कामार्त्तावस्थां जाड्यापस्मारमूर्च्छादि लक्षणान्वितां संविधायै मूर्च्छितां दमयन्तीं अवलोक्य तस्याः सखीगणः ससाध्वसं यत्कोलाहलं क्रन्दनं च व्यदधात् तद्रवं श्रुत्वा भीमः स्वपुत्र्याः मनोरथं पर्यजानात् इत्यवर्णयत् —

**इदमुदीर्य तदैव मुमूर्च्छ सा मनसि मूर्च्छितमन्मथपावका ।**
**क्वसहतामवलम्बलवच्छिदामनुपपत्तिमतीमपि दुःखिता ॥**[5]
**कन्यान्तः पुरबोधनाय यदधीकारान्न दोषानृपं ।**
**द्वौमन्त्रिप्रवरश्च तुल्य मगदंकारश्च तामूचतुः ॥**

---

१. नैषध सर्ग १ श्लोक १४३

२. म० भा० व० प० अ० ५० श्लोक २४

३. नैषध सर्ग ४ श्लोक ६८

४. म० भा० व० प० अ० ५१ श्लो० ६

५. नैषध-सर्ग ४ श्लोक ११०

**देवाकर्णय सुश्रुतेन चरकस्योक्तेन जाने खिलं।**
**स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥**[१]

५. महाभारतानुसारं देवाः नारदमुखाद्दमयन्ती स्वयंवरस्य वार्तामाकर्ण्य तत्समकालमेव स्वयंवरार्थं प्रस्थिताः —

**ततस्तच्छुश्रुवुः सर्वे नारदस्य वचो महत्।**
**श्रुत्वा चैवाब्रुवन हृष्टा गच्छामो वयमप्युत ॥**[२]

नैषधे पुनः नारदः दमयन्ती स्वयंवरस्य वार्तां श्रावयित्वा यदा निर्गतस्तदा देवाः स्वर्गात्प्रचलिताः—

**अन्वयुर्युतिपथः पितृनाथास्तमुदाथ हरितां कमितारः।**
**वर्त्म कर्षतु पुरः परमेकस्तद्गतानुगतिको न महार्घः ॥**[३]

६. नलदमयन्त्योर्विवाहे परिसमाप्ते स्वर्गं गच्छद्भिः देवैः मार्गे त्वरितमागच्छन्तौ कलिद्वापरौ दृष्टावुक्तौ च यद् वृत्तः स्वयंवरः । क्रुद्धः कलिः नलदमयन्त्योर्वियोगार्थं प्रतिज्ञातवान् ।

परं नैषधे नलदमयन्त्योर्विवाहावसर एव तावागत्य तयोर्विविधविलासकेलीरपश्यताम् ।

७. स्वयंवरानन्तरं प्रहृष्टाः देवा नलायाष्टौवरान् ददुरितिवर्णितं भारते—

**वृते तु नैषधे भैम्या लोकपाला महौजसः।**
**प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥**[४]

तत्र इन्द्राग्निवरुणयमैः प्रत्येकेन द्वौ द्वौ वरौ दत्तावित्यष्टौ वराः नलेन लब्धाः ।

नैषधे पुनः इन्द्रः चतुरो वरान् अदात्, तेषु चैको दमयन्त्यै त्रयश्च नलाय । नलस्य त्रिष्वपि वरेषु द्वौ महाभारते इव स्तः तृतीयस्तु भिन्नो यत्र कथितं यन्नलस्य नाम्ना पुरमेकं नलपुरमिति प्रसिद्धिमाप्स्यति —

**तवोपवाराणसि नामचिह्नं वासाय पारेऽसि पुरं पुरास्ते।**
**निर्वातुमिच्छोरपि तन्न भैमी सम्भोगसंकोचभियाधिकाशि ॥**[५]

---

१. नैषध सर्ग ४ श्लोक ११६
२. म० भा० व० प० अ० ५१ श्लोक २३
३. नैषध सर्ग ५ श्लोक ५५
४. म० भा० व० प० अ० ५४ श्लोक २८
५. नैषध सर्ग १४ श्लोक ७२

अग्निरपि नलाय त्रीन् वरान् ददौ यमः द्वौ, यमस्य प्रथमो वरः नलचरितानुरूप एव, परं द्वितीयोभिन्नः यत्र भणितं यत् त्वमस्त्रसंचालनकर्मणि परम नैपुण्यमवाप्स्यसि—

**"सर्वाणि शस्त्राणि सहांगचक्रैराविर्भवन्तु त्वयि शत्रुजैत्र ।**
**अवाप्यमस्मादधिकं न किंचिज्जागर्ति धीरव्रतदीक्षितानाम् ।।[1]**

८. नैषधे दमयन्तीस्वयंवरसमायोजने महाकविः स्वयंवरे उपस्थितानां राज्ञां वर्णनार्थं सरस्वत्याः अवतारणां चक्रे । भगवती सरस्वती तत्रावतीर्य स्ववाग्देवत्वं सफलयन्ती समुपस्थितानां राज्ञां वर्णनं दमयन्त्याः समक्षे सम्पादितवती । नैषधस्य वरणे संजातेसति सा दम्पती सुभाशिषा संवर्द्ध्य स्वर्लोकं प्रस्थितवतीति इतिवृत्तं समधिकसम्भारसहितं समुधन्यस्तम् ।

भारते नैतदुपवर्णितम् । परं सरस्वती प्रदत्ताभ्यां वराभ्यां ज्ञायते यन्महाकविः उत्तरनलचरितवर्तनार्थं नूतनामेकामुद्भावनामस्मिन्प्रसंगे बीजतया निक्षिप्तवान् । सरस्वती दमयन्त्यै वरं ददाति-कोऽपि त्वां घर्षयितुमेषिष्यति चेत्तर्हि तत्क्षणमेव भस्मसात् भविष्यति । वरोऽयमुत्तरनलचरिते व्याधवृत्तान्तेन सह संगच्छते । भारते तु दमयन्त्याः पातिव्रत्यशक्त्या व्याधो भस्मी भूतः परं नेदं तत्रोपन्यस्तं यत् दमयन्ती कुतः भस्मीकरणस्य शक्ति समासादिवती । दमयन्त्यै प्रदत्तोऽन्यः वरः कामरूपधारिणी भविष्यसि त्वमित्यपि न भारते । कस्मात्प्रयोजनात् कविः वराणामेतादृशः प्रयोगः व्यदधादिति न ज्ञातुं शक्यते ।

परिवर्तन परिवर्द्धनयोरस्यां परम्परायां महाकविः बहूनां नवीनानां पात्राणामपि समुद्भावनं चक्रे, येषु इन्द्रदूत्यः,[2] वाग्देवता सरस्वती,[3] दमयन्त्याः क्रीडा सखी 'कला'[4] चार्वाक[5] श्चास्ति ।

नैषधीय चरित महाकाव्यस्य मौलिकेन नलचरितेन सह साम्यवैषम्यप्रतिपादिकानि स्थलानि सुसम्यक निरीक्ष्य स्पष्टं प्रतीयते यत् महाकविना श्री हर्षेण महाभारतस्योपजीव्यत्वं तु स्वीकृतं, किन्तु नैजं पाण्डित्यमासीमान्तकौशल

---

१. नैषध सर्ग १४ श्लोक ७७
२. नैषध सर्ग ६ श्लोक ७७
३. नैषध सर्ग १० श्लोक ७७ से ८६
४. नैषध सर्ग ६ श्लोक ३, सर्ग २० श्लोक २६-१३६
५. नैषध सर्ग १६ श्लोक ३६-१०८

तया समर्थयता तथा विधं नलचरितमुपवर्णितं येन ज्ञायते यत्कथावस्तु समधिकत्वेन कविकल्पितमेव तत्वित्तिवृत्तानुरूपं समुपन्यस्तम्। कविः पूर्वं नलचरितस्येतिवृत्तमेव तादृशे विस्तृते चित्र फलके समुत्कीर्णवान् येन तत्कथावस्तु वर्णन वैचित्र्येण, उक्ति वैचित्र्येण, कल्पना वैशिष्ट्येन चानुपमेयत्वं भजते। पण्डितः श्री हर्षः संस्कृत वाङ्मये परमविदग्धानां मण्डलीमलंकुरुते। न्यायवेदान्त शास्त्राचार्यत्वेनाप्यस्य प्रसिद्धिः, नैषधं च तस्य सर्वोत्कृष्टं काव्यं वर्तते। स्वप्राकट्य कालादेव तस्य कृतिरियं विदुषां मनोमोदाय स्वीकृता भवतु। नैके टीकाराः अस्याः टीकाः संरचयामास। येसु मल्लिनाथस्य जीवातु नारायण भट्टस्य नारायणीटीका च सुप्रसिद्धे स्तः। म० म० प० शिनदत्त शर्मणा सम्पादिते नैषधीय चरिते प्रस्तावनायां त्रयोविंशत् टीकाकाराणामुल्लेखनं विहितं परं डा० ए० एन० जानी महोदयेनास्य ग्रन्थस्य त्रिचत्वारिंशत् टीकाकाराः समुद्घाटिताः[1]।

नैषधं तु संस्कृत साहित्ये पंचसु विशिष्टेषु महाकाव्येषु परिगण्यते, 'वृहत्त्रय्यां' नैषधस्य समावेशो विद्यते। ग्रन्थस्यास्य सर्वोत्तमत्वं सर्वस्वीकृतमित्यभिलक्ष्यैवाभियुक्तैः प्रतिपादितम्—

**"तावद् भा भारवेर्भाति यावन्माघस्य नोदयः**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥"**

वस्तुत्वेन नैषधस्य काव्यचमत्कृतिचाकचिक्येन मुष्णीकृत तेजस्कानि समस्तानि काव्यानि जायन्ते। शोध प्रवन्धेऽस्मिन् पुनरस्माकं लक्ष्यं मौलिकस्य नल चरितस्य काव्येषु समीक्षात्मकेनाध्ययेनेन सह विद्यते। सदिमां दृष्टिमंगीकृत्य इदं गदितुं शक्यते यन्नैषधकारेणेतिवृत्तात्मकतायाः न पूर्णतया परिपालनं विहितं परमेतत्सहैव तेनास्य कारणमपि सुस्पष्टतया सम्प्रतिपादितं 'ग्रन्थग्रन्थिरिह क्वचिद् क्वचिदपि०' इत्यनेन श्लोकेन। नैषधे कलिविनाशोपयोगाय कविः पुण्यश्लोकस्य नलस्यचरितं यत्समुद्गीरितवान् तदेव सादृश्यं मूल नलचरितस्य नैषधेन सह, केनाप्यन्येन प्रकारेण श्री हर्षस्य काव्ये कस्याप्यनुहरणमनुकरणं वा सारल्येन नाख्यापयितुं शक्यते।

---

१. डा० ए० एन० जानी—ए० क्रिटीकल एडीशन आफ नैषधीय चरित, अध्याय ५

२. सुभाषितम्

श्री हर्षस्य समुदात्तकविकल्पनानां परवर्त्तिनिकाव्यसाहित्ये कविभिः पौनः पुन्येन प्रयोगः कृत इति संलक्ष्यते। कविः नैषधे मौलिक नलचरितस्य विषये नूतनाः याः परिकल्पनाः सृष्टवान् तासामनुसारं कानिचिन्नवीनान्यपि तथ्यानि सम्मुखमायान्ति, यथा-सरस्वत्याः दमयन्त्यै वरदानप्रसंगेनागामिनो व्याधवृतान्तस्य संगतिर भवति। काव्येऽस्मिन् सरस्वत्याः अवतरणं कविकल्पनाजन्यमेव यतो ह्यस्य मूलं पुराण इतिहासे वा कुत्रापि नास्माभिः समासादितम्। महाकविः नलस्य नाम्ना प्रथितं नलपुरमित्याख्यं यत्स्थानमवर्णयत् तस्यापि भौगोलिकमस्तित्वं काशीतीरे न कुत्रापि समासादितम्। सरस्वतीवर्णनस्य प्रसंगोऽयं नलकीर्तिकौमुद्यागस्त्यपण्डितेनोदाहृतोऽस्तीत्यग्रेऽस्मिन्नेवाऽध्याये वक्ष्यामः।

अन्त इदमेव वक्तुं शक्ष्यामः यद् विदुषां श्रद्धाभाजनं, कल्पनानां भाण्डागारः, पण्डितम्मन्यानां, दर्पदलनं, विदग्धानां विपश्चितामौषधं, नैषधं सर्वथा सर्वदा चाद्वितीयं तस्य प्रणेता श्रीहर्षोऽप्यद्वितीयः—

**'जायन्ते कति जज्ञिरे कति जनिष्यन्ते कतीह क्षितौ।**
**स्रष्टारोऽतितराभिदं तु कविभिर्निर्मसत्तरैः कथ्यताम्॥**
**आपूर्वापरदक्षिणोत्तरहरित्साहित्यसिंहासने।**
**स्वैरारोहपराक्रमं भजतु कः श्रीहर्षसूरेः परः॥'[1]**

**नलचम्पूः**

नलचरितस्य पूर्वार्द्धमेव वर्णयत् त्रिविक्रमभट्टस्य नलचम्पूरित्याख्यं काव्यं नलसाहित्ये विशेषत उल्लेखनीयम्। नल चम्प्वः वैशिष्ट्यमनेनापि हेतुनास्ति यदियं संस्कृतसाहित्यस्य चम्पूकाव्यपरम्परायां प्रथमा चम्पूः वर्तते। सर्वविदितमेवेदं तथ्यं यत्कस्यामपि साहित्यपरम्परायां सरण्यां वा तस्याः प्रादुर्भाव काले सामान्यत्वेन न कस्यापि विशिष्टस्य ग्रन्थस्य प्रणयनं सारल्येन भवति। परं नलचम्पूः स्वप्रौढ़तया, सभंगश्लेषबहुलया भाषया, विशिष्टया शैल्या च च प्रथमाऽपि सती सर्वतोऽधिकां प्रशंसामभजत्।

अस्या, रचयिता त्रिविक्रमभट्टः शाण्डिल्यगोत्रे ब्राह्मणकुले समजायत्। अस्यपितृनाम देवादित्यो नेमादित्यो वाऽऽसीत्। पितामहश्च श्रीधरोऽभूत् यथा ग्रन्थ एव प्राप्यते—

---

१. श्री विश्वेश्वर भट्ट कृत श्रीहर्ष प्रशंसा तंजौर लाइब्रेरी p. २५५६

**'तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभूद् ।**
**देवादित्यः स्वमतिविकसद्वेदविद्याप्रकाशः ।।**
**उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं ।**
**यस्याद्यापि श्रवणपुटकैः घूर्णिताक्षाः पिबन्ति ।।'**[1]

नलचम्प्वां गुणाढ्यवाणौ त्रिविक्रमेण प्रशंसितौ—

**'शश्वद् बाणद्वितीयेन नर्मदाकारधारिणा ।**
**धनुषेव गुणाढ्येन निःशेषं रंजितो जनः ।।'**[2]

अथ च भोजरचिते सरस्वतीकण्ठाभरणे, यस्यसमयः १०१५-१०५५ ई० मध्ये वर्तते, नलचम्प्वाः निम्नांकितं पद्यं समुदाहृतम्—

**'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतंगहनम् ।**
**हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी ।।'**[3]

त्रिविक्रमश्च राजा इन्द्र तृतीयस्य राजकविरासीत् यः ९१४ ईसवीये (८३६ शाके च) बभूव ।[4] शिलालेखैरपि तथ्यमिदं प्रमाणितं येन सिद्ध्यति त्रिविक्रमभट्टः दशमशताब्दयाः पूर्वार्द्धे समभूदिति ।

त्रिविक्रमस्य नलचम्प्वां महाभारतीयस्य नलचरितस्य वर्णनं नैषधापेक्षयाऽपि न्यूनत्वेन समुपहृतम् । अत्र नलस्य देवदौत्यकर्मणः परिसमाप्तावेव ग्रन्थः सहसा समाप्यते । अपूर्णा एव नलकथाऽत्रापि वर्णिता । यद्यपि नायकनायिकयोर्विवाहपूर्वमेव परस्पर दर्शनं संजातं तथापि पूर्णतया नायिकाप्राप्तिरूप फलागमस्यावशिष्टत्वादपूर्णमेवेतिवृत्तमत्र संलक्ष्यते । येन श्रोता पाठको वा शंकाकुलो भवति यथा शिष्टः ग्रन्थः लुप्तोवा, किंवा केनापिकारणविशेषेण ग्रन्थोऽयमपूर्णः, उताहोकविः स्वयमेव ग्रन्थसमाप्तिमस्मिन् प्रसंगे एव चकारेति ? परिस्थितावस्यां कस्या अपि कृतेः कृते किंवदन्त्यः प्रचलन्त्येव । मुम्बईतः

---

१. नलचम्पू प्र० उ० श्लोक १९

२. वही प्र० उ० श्लो० १४

३. वही प्र० उ० श्लो० २९

४. जर्नल बाम्बे ब्रान्च रायल एशियाटिक सोसाइटी भाग १८, पृष्ठ २५३, २५७, २६१ इण्डियन एन्टीक्वेयरी भाग १२, पेज २२४

भारत के प्राचीन राजवंश (राष्ट्रकूट) विश्वनाथ रेऊ भाग ३, पृष्ठ ५०-५२

प्रकाशितायां नलचम्प्वां प्रस्तावनायमेका किंवदन्तीत्थं परिकल्पिता यस्या अनुसारं त्रिविक्रमस्य पितृपादाः राजकवय आसन् । कार्यवशादेकदा ते देशान्तरं गताः स्मित्रसमये राजा इन्द्रः केनापि विदेशीयेन विदुषा सह शास्त्रार्थं त्रिविक्रममेवा-जुहाव । अनभ्यस्तशास्त्रः सः कथमपि व्याकुलतया क्रमपूजितां कुलदेवतां सरस्वतीं प्रार्थयामास । पूजिता सा देवी पितृप्रत्यावर्तनात्पूर्वं त्रिविक्रमस्यान्तः सरसि सन्निविष्टा । तस्याः प्रभावेण शास्त्रार्थे स विजयश्रियं संप्राप्तवान् । तत्कालोचितं वरलाभं स्थिरीकर्तुं त्रिविक्रमः काव्यप्रणयनं चक्रे । पुण्यश्लोकस्य चरितं स्वधारणानुवृत्तधिषणया सम्यक् काव्येन निबवन्ध । क्रमशः सप्तोच्छवासाः पूर्णाः । तदैव पितादेवादित्यः समागतवान् । सरस्वती त्रिविक्रमं परिसृज्य गत । नलश्च तत्रैव व्यरमत् ।' प्रायशः प्रत्येकस्य महाकवेर विषये कथाकल्पनानां प्रचलनं जायत एव । तर्हि न किमप्यत्र वैशिष्ट्यं स्वीकरणीयम् ।

संस्कृत वाङ्मय एतादृशोऽप्येकः सम्प्रदायः वरीवर्ति यत्र कवयः स्वग्रन्थान् चरमोत्कर्षसीमानं प्रापयित्वाऽपूर्णत्वेनैव परित्यजन्ति । यतोहि ते स्वरचनानां कृते समाश्वस्ताः भबन्ति यत्तेषामपूर्णाऽपि कृतयः परेषां पूर्णानां कृतीनामिव साफल्यं भजिष्यन्ति । सम्भवतः नलचम्पूः, नैषधं, कादम्बरी रसगंगाधरादि उत्तमोत्तमानां ग्रन्थानामपूर्णत्वमनेनैव कारणेन समभूत् । अस्तु—नलचम्पूऽघ्, तस्य रचनाकारं च विवेचनलक्ष्यमविधायैव नलचम्प्वां वर्णितस्य नलकथायाः मूल नलचरितेन सह साम्याया वैषम्य-समीक्षणं क्रियते—

नलचम्पू-काव्ये मौलिकं नलचरितस्येतिवृत्तं चम्पूशैल्या अभिहितम् । 'चम्पू' शब्दस्य व्युत्पत्तौ नैक मत्यं विदुषां । व्याकरणानुसारं चुरादिगण पठितस्य 'चपि' धातोः गति ज्ञान-प्राप्ति-मोक्षादय-अर्था समर्थ्यन्ते । यया मोक्ष सहोदर आनन्द उत्पद्यते-सा चम्पूः । अर्थोऽयं न सुसंगतः, अत्र हरिदासभट्टाचार्येण एवं-विधा व्युत्पत्तिः प्रस्तुता । या समीचीना – 'चमत्कृत्य पुनाति सहृदयान्, विस्मृती कृत्य प्रसादयति, इति चम्पूः, वस्तुतः चम्पूकाव्ये चमत्कारस्योक्ति-वैचित्र्यस्य च योजना संगुम्फिता भवति । रसपरिपाकः प्राधान्यं न भजते, अपितु पाण्डित्य प्रदर्शनमेव कर्तुर्ध्येयं भवति । अत इयं व्युत्पत्तिः समीचीनाऽनु-मीयते । 'चम्पू' शब्दं लाक्षणिकं मत्वा लक्षणकारैः विभिन्नाः अर्थाः विहिताः—

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।'**[1]

---

१. काव्यादर्श-दण्डी १।३१

'गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।'[१]

'गद्यपद्यमयी साङ्का सोच्छ्वासा कवि-गुम्फिता ।
उक्ति-प्रत्युक्ति-विष्कम्भ शून्या चम्पूरुदाहृता ॥'[२]

'गद्यपद्यमयं काव्यं संबद्धं बहुवर्णितम् ।
सालंकृतं रसैः सिक्तं 'चम्पू' काव्यमुदाहृतम् ॥'[३]

इत्यादिषु समस्तेषु लक्षणेष्वन्तिमं लक्षणं सर्वाधिकमुपयुक्तम् । दृष्टयानया नलचम्पूः काव्यं सर्वोत्तमं चम्पू काव्यं वर्तते । संस्कृते चम्पू साहित्यस्य सुविस्तृता श्रृंखला प्राप्यते यस्यां सम्प्रति पंचचत्वारिंशदुत्तरद्विशत संख्यकानि चम्पू काव्यान्युपलभ्यन्ते[४] । नलचम्पूः अस्याः श्रृंखलायाः प्रथमं काव्यमस्ति । सप्तसूच्छ्वासेषु नलदमयन्त्योर्विवाहात्पूर्वं परस्परस्य दर्शन पर्यन्तं वृत्तं महाकविना त्रिविक्रमभट्टेन सभगश्लेष बहुलैः पदविन्यासैः समुपन्यस्तम् ।

समीक्षा सौकयार्थे प्रकृतकाव्यस्य कविप्रयुक्तेतिवृत्तस्य सारसंक्षेपः प्रस्तूयते--

**प्रथमोच्छ्वासः**

आर्यावर्तान्तर्गतायां निषिधापुर्यां राज्ञः वीरसेनस्यापत्यमभूद्राजा नलोनाम, तस्य श्रुतशील नामामात्य आसीत् । एकदा प्रावृड्काले कोऽपि वराहोऽन्तः पुरवर्तिन्युपवने समुपद्रवं प्रारभत् । राजा नलः स्वसेनापतिं बाहुकं मृगयार्थमादिदेश । मृगयुभिः परिवृतो नलस्तं जघान । मृगया परिश्रान्तः सः तत्रैकस्मिन् शालवृक्षस्याधः समुपाविशत् । तदैव यदृच्छया गतः कोऽपि भिक्षुक पथिको विश्रामार्थं तमेव वृक्षं शिश्रिये । तत्र राजभिक्षुकयोः वार्ता जायत् । वार्ताक्रिमे भिक्षुकः दक्षिणापथस्य कस्याप्यज्ञातनामिकायाः राजकुमार्याः मानुषातिशयं सौन्दर्यं तथा विघमवर्णयत् यथा रूपराशिश्रवणोत्कण्ठितो नलः कामज्यरग्रस्तोजातः । पथिकः यथेच्छं गतवान्नलोपि तामेव सुन्दरीं परिचिन्तयन् राजभवनमवाप ।

---

१. काव्यानुशासन-हेमचन्द्र ८।६

२. केचित्

३. डा. छविनाथ त्रिपाठी-चम्पूकाव्य का आलोचनात्मक एवं ऐतिहासिक अध्ययन पृष्ठ ४६

४. वही पृष्ठ २५१

**द्वितीयोच्छ्वासः**

परिसमाप्ते घनकाले समागते च शरदतौ स्वोयोद्याने परिभ्रमतानलेनाकाशादवातरन्ती श्वेतहंसमालिका अदर्शि । कौतुकादेव नलस्तैष्वेकं जग्राह । हंसस्तमाशीर्वचोभिः संस्तूय वार्ता चक्रे । तदैव परिग्रहीत स्वहंसपतिदर्शनरुष्टा तस्य वरटा श्लिष्टोपालम्भवचनं व्याजहार । नलोऽपि समुचितेन प्रत्युत्तरेण तामसान्त्वयत् । तत्समकालमेवाकाशवाण्याः समाश्रावितं—यदयं हंसस्त्वां प्रति दमयन्तीं समाकर्षिष्यतीति । चकितचकितो नलः हंसमपृच्छत् । हंसोऽवादीत— दक्षिणस्यां दिशिविदर्भदेशस्थ कुण्डिनपुर्यां महाराजोभीमः स्वधर्मपत्न्याः प्रियंगुमंजर्याः सार्धं निवसति । अनपत्यौ तौ दम्पती कदापि वने सवत्सां वानरीमवलोक्य वात्सल्यसुखसमुत्कण्ठितावभूतां, तत्र सपत्याज्ञप्ता राजमहिषी भगवन्तं शिवं समाराधयामास् ।

**तृतीयोच्छ्वासः**

रात्रौ भगवतामहेश्वरेण दमनकमुनेरातिथ्यं श्वः कुरुष्वेत्येवमादिष्टा प्रतिबुद्धाप्रियंगुमंजरी भीमं सर्वस्वप्नजनितवृत्तमश्रावयत् । तस्यां रात्रौ भीमोऽपि स्वप्नं दृष्टवान्, स तं स्वप्नवृत्तं राजपुरोहिताय न्यवेदयत् । पुरोधसा सन्तानलाभरूपफलागमश्रवणसमकालमेवाकाशादवतरन्तं मुनिं दमनकं ददर्श । स्वागतानन्तरं महर्षिः "कन्यारत्नमवाप्नुहि" इत्थमाशिषा समवर्द्धयत् । खिन्ना राजमहिषीश्लिष्ट व्याजस्तुत्या तमुपाललम्भे । सान्त्वनाप्रदान पुरस्सरं मुनिः समगच्छत् । अथ प्राप्तकाले गर्भभरालसा राजमहिषी अयोनिजरूपामेकां दमयन्तीति नामिकां कन्यां सुषुवे । सा साम्प्रतं यौवनश्रियालंकृताविद्यते ।

**एवमुक्त्वा हंसो तूष्णीमभवत् ।**

**चतुर्थोच्छ्वासः**

श्रुतदमयन्तीवृत्तको नलस्तं विश्रामगोष्ठयामानेतुं वनपालिकामादिदेश । "जिघृक्षुरयमिति विश्वस्य स मरालः सह स्वपंक्त्या विदर्भानयासीत् । तत्र क्रीडोपवनसरस्तटसेविनीं दमयन्तीमवलोक्य सा मरालमालिका तत्रैवावातरत् । सोऽपि हंसः दमयन्तीकरकमलगृहीतः सन्नाशिषं प्रयुंजानोऽवोचत्-स्वसदृशं नलं पतिमवाप्नुहीति । सोत्कण्ठिता सा नलस्य विषये तमपृच्छत् । तदा हंसेन श्रावितम् निषधदेशे महीपोवीरसेनः सह स्वपत्न्या रूपवत्याध्युवास । अनपत्येन तेन शंकरः समाराधितः । तत्कृपया नलस्य जन्म अभूत् । साम्प्रतं स युवराजपद-

मलंकरोति । तस्य पितुरमात्यस्य सालंकायनस्य पुत्रः श्रुतशीलनामा तस्यामात्यः एकदा नलो ज्ञानपरवशतया सालंकायनं न प्रणमत् तदा स नलाय श्लिष्टतया नीत्युपदेशं ददौ । तत्पिता राज्ये तमभिषिच्य वानप्रस्थाश्रमं शिश्रिये । पितृ-वियोगखिन्नो वैरसेनिरधुना निषिधामध्यास्ते ।" इति ।

**पंचमोच्छ्वासः**

वैरसेनिवृत्तान्त श्रवणाकर्षितायास्तस्या सखी पुनरपि नलवर्णनार्थं हंस-प्रेरयत्, सोऽपि नलगुणगणवर्णनं समभ्यधात् । जिगमिषुं मरालं भैमी तारं हारं समर्पयत् । हंसः पुनर्निषधामागत्य तद्धारं नलायार्पयत् । तौ द्वावपि काम कश्मलायितावभूताम् ।

विज्ञात पुत्री मनोरथो भीमः स्वयंवराऽवाहनार्थं दूतान् प्रेषयत् । उत्तरस्यां दिशि प्रस्थितं ब्राह्मणं दमयन्तीश्लिष्ट्या वाण्या नलमवश्यमानेतुं प्रार्थयत् । नलोऽपि प्राप्तस्वयंवरामन्त्रणः विदर्भान् प्रस्थितवान् । मार्गे रेवातटे विश्रामकाले स चक्रवाकमिथुनमपश्यत्, तयोः संयोगे चत्वारो चक्रवाकयुवानः विघ्नमुत्पाद-यन्तिस्म । नलः श्रुतिशीलमिदमवोचत् तदा सः कामायिता देवा अपि विवेकच्युता भवन्तीति समुद्गीरितवान् । तदेव समये स्वदूतसूचनापूर्वं इन्द्रवरुणकुवेरयमाः लोकपालास्तत्र समागमन् । कथमपि नलं दूतं विधानीकृत्य देवास्तत्रैवान्तरधी-यन्त । देवदौत्यपारवश्य खिन्नतामनुभवन्नलः वने स्नानमाचरन्तीषु समासक्त दृष्ट्याऽवलोकयत् । श्रुतशीलः केनापि व्याजेन तं न्यवारयत् । रात्रौ विषण्णो नलस्तत्रैव न्यवसत् ।

**षष्ठोच्छ्वासः**

प्रातः पुनः प्रचलितस्य नलस्य पार्श्वे पुष्कराक्षनामा दमयन्त्याः वार्तिकः समाजगाम । तद्धस्तात् प्रियायाः पत्रं प्राप्य पुण्यश्लोकः परमव्याकुलतामापन्नः । शनैः शनैः गच्छते नलाय भैम्याः सुन्दरक विहंगवागुरिका नामानौ दासौ प्राप्तौ । सुन्दरकः दमयन्त्या अंगुलीयकं नलायादात् । रात्रौ वार्तानन्तरं सर्व एव मार्गे सुष्वुपुः । अपरेद्युः नलः कुण्डिन्यां समाजगाम् ।

**सप्तमोच्छ्वासः**

भीमनलयोः परस्परं सम्मिलनमभूत् । दमयन्ती स्वीयाः दासीः नलं प्रत्यु-पायनसहिताः प्रेषयत् । नलोऽपि भृत्यं पर्वतकमुपायन सहितं दमयन्त्यै प्रेषयत् मध्याह्ने दमयन्त्या पक्वमन्नमुपभुज्यतृप्तोनलः पर्वतकमुखात् दमयन्ती वृत्तमा-

कर्ण्य, यत्सा सुन्दरकेण पर्यजानात् यन्नलः देवादौत्यार्थमत्र समायात इति, पुनः चिन्ताकुलो संजातः। रात्रौ देवदत्ततिरस्करिणीविद्याप्रभावादृश्यतया नलः दमयन्त्याः हर्म्ये प्राविशत। स्वागतानन्तरं नलः स्वागमन कारणं न्यवेदयत्। खिन्ना दमयन्ती न किंचिदपि समवोचत्। तत्सखी प्रियंवदिका "नानुरागो रमणीजनस्य विवेकपूर्ण इति" जगाद। अनुत्तरितो नलः प्रत्यावर्तत् ततश्च भगवन्तं शिवं संस्मरन्नेव यामामनैषीत्।

**अस्मिन्नेव प्रसंग इति वृत्तं विरमति।**

प्रकृत ग्रन्थानुशीलनेन यद्यपि ग्रन्थोऽयमपूर्ण इवाभाति तथापि विद्वद्भिः पूर्णतमत्वमस्य स्वीकृतम्, यतोहि समाप्ति प्रसंगे नायकस्य कृते नायिका प्राप्ति रूप फलागमस्य नियताप्तिः प्रदर्शिता। अतः पूर्ण एव मन्तव्योऽयं ग्रन्थः। इति वृत्तात्मक दृष्ट्या परिशीलनपूर्वकमिदं वक्तुं सुशकं यदत्र कविकल्पनाप्राचुर्यप्रभावात् न्यूनांश एवेतिवृत्तं सम्प्रयुक्तम्। चम्पूनां चमत्कारप्रधानतयाऽपि उक्ति वैचित्र्यार्थमितिवृत्तपरिवर्तनं, परिवर्द्धनं, लोपश्चावश्यंभावि। इह खलु नलचरितस्यानुहरणं यद्यपि महाभारतादेव कृतं परं बाण भट्टस्य कादम्बर्या आकृष्टो महाकविः स्वेच्छया तद्वृत्तान्त समायोजनं काव्ये विहितवान्। मृगयावर्णनं, किन्नरमिथुनवर्णनं, राज्ञा, राजमहिष्या च स्वप्नाववलोकनवृत्तान्तं, सालंकायनोपदेशादिक सर्वमिति वृत्तं कादम्बर्या अनुकरणमिवप्रतीयते। ग्रन्थारम्भे कविकृत बाणश्लाघाया इदमेव तात्पर्यम्।

परं बाण भट्टस्य शैल्या आकृष्टोऽपि कविः पूर्ववर्तिनां कवितल्लजानां नलकथासम्बन्धि ग्रन्थानामनुशीलनपूर्वकमेव स्वीयनलचम्पू काव्ये नल चरितं समायोजयदिति अन्तः साक्ष्येन ज्ञातुं पार्यते। यथा—नलदमयन्त्योपितरौ सन्तानार्थं शिवमेव समाराधितवन्तौ। नलदमयन्त्यौ पूर्वजन्मनि शिवभक्तावभूतामिति शिवपुराणे उक्तम्। संभाव्यते यत्तत्कथाधारैणैव कविरेतादृशं वर्णनं व्यदधात्। अन्यच्चानेन तस्य शैवमतावलम्बित्वमपि प्रतीयते। एवमेव जैनवाङ्मये वर्णिते नलचरिते दमयन्त्याः मातुर्नाम पुष्पवतीति प्राप्यते, कवि लालित्यसंस्करणपूर्वकं तस्याः नाम पुष्पवतीति स्थाने प्रियंगुमंजरीति चक्रे। साम्यवैषम्यसम्पादनमिषेणेदं सर्वं सौकर्येण ज्ञायत अतः पूर्वं महाभारतीय नलचरितेन सह नलचम्प्वाः साम्य सन्दर्भान् प्रदर्श्य ततः परं वैषम्यसन्दर्भा प्रदर्शयिष्यन्ते।

मूलनलचरितादत्र घटनाक्रमस्यैव साम्यं प्रतिगृहीतम्। नलवर्णनं, दमयन्तीवर्णनं, हंसवर्णनं, पूर्वरागवर्णनं, स्वयंवरायोजनं, नलदेवदौत्य वृत्तान्त

पर्यन्तमितिवृत्तमेवात्र साम्यत्वेन समुपवर्णितम् । परं एतेषा मुपयुक्तानांप्रसंगानां मध्ये कस्यापि प्रसंगस्य परिवर्द्धनं, कस्यापि परिवर्तनं कस्यापिलोपश्च सम्पादितः। अत्र महाभारतोपजीव्यत्वस्वीकृता प्रसंगाः समुपस्थाप्यन्ते--

(अ) महाभारते नलः निषधाधिपत्वेनोपवर्णितः—

**निषधेषु महीपालो वीरसेन इतिस्म ह।**
**तस्य पुत्रो भवन्नाम्ना नलोधर्मार्थदर्शिवान् ॥'[1]**

त्रिविक्रमोऽपि तथ्यमिदं स्वीकरोति—

**तस्य विषये मध्ये निषधोनामास्ति जनपदः प्रथितः।**
**तत्रपुरी पुरुषोत्तम निवासयोग्यास्ति निषधेति ॥[2]**

(ब) महाभारते दमयन्त्याः जन्मवर्णन वृत्तान्तं संक्षेपेण समुपन्यस्तम् । तत्र दमनकमुनिकृपया भीमः सन्तानं लब्धवानिति गदितं—

**तथैवासीद् विदर्भेषु भीमो भीमपराक्रमः।**
**सूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः॥**
**सप्रजार्थे परं यत्नमकरोत्सुसमाहितः।**
**समभ्यगच्छत् ब्रह्मर्षिदमनो नाम भारत॥**
**तं स भीमः प्रजाकामस्तोषयामास धर्मवित्।**
**महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥**
**तस्मै प्रसन्नोदमनः सभार्याय वरं ददौ।**
**कन्या रत्न कुमारांश्च त्रीनुदारान्महायशाः॥**
**दमयन्तीं दमं दान्तं दमनं च सुवर्चसम्।**
**उपपन्नान्गुणैः सर्वैर्भीमान् भीमपराक्रमान् ॥'[3]**

नलचम्पूः काव्ये महाकविः त्रिविक्रमः वृहत्तरं परिवर्द्धनमस्येतिवृत्तस्य आद्वितीयोच्छ्वासात् तृतीयोच्छ्वास पर्यन्तं समभिहितवान्। दमनकमुनेर्वर्णनं दर्शनीयम्—

'एवंविधे च व्यतिकरे कोऽपि कान्तकार्तस्वरस्वरूपमुत्फुल्लपाण्डुपुष्पमालया मेरुशिखरमिव प्रदक्षिणाक्षीणलग्नया नक्षत्रराज्या जनितशोभं जटाभारमुद्वहन्,

---

१. म० भा० व० प० अ० ४६ श्लो० ३६

२. नलचम्पू प्र० उ० श्लोक २६

३. म० भा० व० प० अ० ५० श्लोक ५-६

अतिबहलमलयजरसरचित्रविचित्रपुण्ड्रकमण्डनाममरशैलशिलामिवरंगत्त्रिस्रोतसं ललाटपट्टिकां कलयन्, प्लवमान इवोज्जृम्भपकंजकिजल्ककपिलकायकान्ति-कल्लोलेषु, करुणारसपूर्णवक्षः स्थलदीर्घिकायामन्तरस्तरन्तीं बालकलहंसपक्षिपंकिमिव स्फारस्फाटिकाक्षमालिकां बिभ्राणः, कुशकौपीनवासाः, करकलितकुशकांड-कमंडलुमंडलैः, तरुभिरिव विविधशाखैर्विधृतजटावल्कलैश्च, पर्वतैरिव समेखलैः सरुद्राक्षाक्षमालैश्च, नक्षत्रैरिव समृगकृत्तिकाश्लेषैः सज्येष्ठाषाढैश्च, संसमदैरपि नमदाकारमाकलयद्भिः अक्रीडैरपि चक्रीडापरैः, रोमशैरपि विप्रबालकैः मुनिभिः परिवृतः, सेवितपुराणपुरुषो प्यजनार्दनप्रियः, प्रसन्नशंकरो प्यनाश्रितभवः प्रबुद्धो प्यबन्दीकृतजनः, श्रमणो प्यजनपरिग्रहः ग्रहाण इव नवधातमको लोकानाम्, धनुर्धर इव नालीकसंघः, दंस इव नदाम्भस्थानकप्रियः पन्नग इवना कुलीनः, सरस्वतीसंनिवासस्य मुखमन्दिरस्य वन्दनमालयेव प्रथमोद्भेदभासिन्या दंष्ट्रि-कारोमराजिरेखया श्यामलितोत्तरोष्ठपृष्ठः, कलिकालकलंकशंकाशरणगतैस्त्रिभिः पुण्ययुगैरिव सुसूत्रीभूय देहलग्नैः, त्रिपुष्करस्नानावसरविलग्नसरसबिसकाण्ड-कुण्डलैरिव भक्त्याराधितत्रिपुरुषरचितरक्षासूक्ष्मरेखानुकारिभिः सितयज्ञोपवीत-तन्तुभिर्भूषितदेहः, शमी विद्रुमाभाधरश्च, प्रजापो विप्रजापश्च, सुतपाः कुतप-श्श्लाघी च, विकलत्रः, सकलत्रश्च, यमान्तानुसारी सकुशलश्च, विकचनवन-लिनशंकया मिलन्मुक्तमुग्धमधुपमण्डलेनेव रुद्राक्षवलयेन विराजितवामपाणि-तल्लवः, न स्मृतः स्मरापस्मारेण, नांगीकृतः कृतघ्नतया, नालोकितः कितववृ-त्तेनः, नाकलितः कलिना न निरुद्धो विरुद्धक्रियाभिः, अतितेजस्तया द्वितीय इव परब्रह्मणः, तृतीय इव सूर्याचन्द्रमसोः, चतुर्थ इव गार्हपत्याहवनीयदक्षिणाग्नी-नाम्, पंचम इव दिक्पतीनाम्, षष्ठ इव महाभूताधिदेवतानाम्, सप्तम् इव मूर्तर्तूनाम्, अष्टम इव सप्तर्षीणाम्, नवम इव वसूनाम्, दशम इव ग्रहाणाम्, अनवरतहृदयकमलकर्णिकान्तः स्फुरज्ज्योतीरूपपरमब्रह्मकान्तिकलापेनैव बहि-र्निर्गच्छाच्छभस्मानुलेपेन कनकगिरिरिव विरलचन्द्रातपेनापाण्डुरितदेहः, दीर्घसरसबिसकाण्डपाण्डुना प्रचण्डपवनेनोर्ध्वमुल्लासितेन जटाजूटबन्धनपटप्रान्त-पल्लवेन शिरःव्पतद्गतनरुद्ङ्गाम्बुधाराहारिणो हरस्य स्वामिभक्त्या कृतानु-करणव्रतचर्यामिव कलयन्, कोमले महसि तरुणे वयसि वृद्धे तपसि पृथुनि यशसि गुरुणि श्रेयसि वर्तमानः, सदः सदाचाराणाम्, आश्रयः श्रुतीनाम्, मही महिम्नः, प्रपा कृपारसस्य, क्षेत्रं क्षमांकुराणाम्, पात्रं मैत्रीसुधायाः प्रासादः

प्रसादस्य, सिन्धुः साधुतायाः, तरुणार्कमण्डलमध्यान्मुनिरवातरत् ।'[१] अस्मिन् खल्विति वृत्ते यद्यपि कविकल्पितवृत्तपरिवर्तनं बहुविधं वर्तते परं मूलाधारत्वेन नलचरितमेवाश्रितम् । अत्र दमनकमुनेः कृपया दमयन्त्या एव जन्म वर्णितं परं भारते तस्याः भ्रातृणामपि जन्म वृत्तान्तं समुपवर्णितम् ।

(स) महाभारते यथा हंस बहुत्वमुपकल्पितं तत्र च तेष्वेकं नलोजग्राह—

**स ददर्श तदा हंसान् जातरूप परिच्छदान् ।**
**वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥**[२]

तथैव नलचम्प्वामपि हंसबाहुल्यं समुपवर्णितम् –

'तत्र च व्यतिकरे प्रलयप्रचण्डपवनोल्लासिततनुतुहिनाचलगण्डशैललीलामाकलयन्तः, मन्दमरुत्तरंगिततनुतरशरदभ्रविभ्रमायमाणाः, सुरवारणेन्द्रविक्षोभितगगनमन्दाकिनीपतत्पांडुरडिण्डीरपिण्डपटलानि विडम्बयन्तः, शकलोदितेन्दुमण्डलसहस्रसंछदितामिव गगनमापादयन्तो, मन्दरगिरिपरिक्षेपक्षुभितक्षीरवारिधिदूरसमुच्छलितदुग्धकल्लोललीलां दर्शयन्तः, शेषाहिफणचक्रवालधवलाः, प्रमुदितहराट्टहासलवा इव मूर्तिमन्तः पतन्तः अमन्द मन्द्रकोलाहलभरितभुवनान्तरालाः, सपदि धरातलमुत्फुल्लपाण्डुपंकजप्रकरप्रकारेण मण्डयन्तो निपेतुः कुतो पि पुण्डरीकपाण्डुपक्षपत्रराजयो सपदि राजहंसाः ।'[३]

(द) नलदेवदौत्यवृत्तान्तं महाभारते यदुपन्यस्तं तथैवात्रापि नलचम्प्वां प्रतिगृहीतम् । नलः देवप्रणयनिवेदनं दमयन्तीं श्रावयति –

'नलोऽपि' मदिराक्षि, मदयति मदिरा, तरलयति तारुण्यम्, अन्धयति धनम्, उत्पथयति मन्मथः, विरूपयति रूपाभिमानः, खर्वयति गर्वः । सर्वजनकप्रसिद्धमेतत् । किन्तु त्वमिदमसत्यतामानैषीः । व्यभिचरतु तवांगे सर्वमेतत् । नहि शशिनि वह्निः, अमृते च विषांकुरः संभवति । तदिमं देवादेशं भावज्ञासीः । सर्वथा प्रभवन्ति प्राणिनाममी लोकपालाः । तत्रापि विशेषतः सकलत्रिदशाधिपतिरशेषसुरकिरीटमणिमयूखमालार्चितचरणारविन्दपुरन्दरो देवः । तद् वृणुस्कमप्यमीषाममृतभूजां मध्ये । मानस्य स्वर्गसुखानि । अभूमिरसि मर्त्यलोकस्तोकसुखानाम् इति पुनस्तामव्यघात् ।'[४]

---

१. नलचम्पू द्वितीय उच्छ्वास

२. म० भा० व० प० अ० ५० श्लोक १८

३. नलचम्पू द्वितीय उच्छ्वास

४. वही सप्तम उच्छ्वास

(य) महाभारतवदत्रापि हंसानामागमनं प्रथमं नल समीपे ततो दमयन्ती समीपे वर्णितम् ।

एतदतिरिक्तं न किमपिवृत्त साम्यं मौलिकेन नलचरिते सह वर्तते । सर्वमन्यत् कविकल्पितमेवेतिवृत्तम् । वर्णन बाहुल्यन शब्दाडम्बरेण च कथावस्तु भाराक्रान्तं सत् न प्रवाहतयाऽग्रे सरति । शब्द चमत्कृति चंचद्भाषा मुष्णायितमेवेतिवृत्तमिह संलक्ष्यते । वैषम्य परिगणनं क्रियते चेत्तर्हि क्रमशः सप्तसूच्छ्वासेषु निम्नांकितानि परिवर्तनानि, वैषम्याणि, लुप्तस्थलानि च प्राप्यन्ते—

प्रथमोच्छ्वासे नलस्य निषिधायाश्च वर्णनातिरिक्तमन्यत्सर्वं वृत्तं न भारते समुपवर्णितम् ।

द्वितीय उच्छ्वासे शरद्वर्णनं, किन्नरमिथुनवर्णनं, वनवर्णनं, हंसवरटाश्लिष्टोक्ति कथनं, हंसहंस्योः प्रणयकलहः, नलस्योत्तरम्, हंसद्वारानुकूलकलत्रसुखवर्णनं, नलहंस संवादः, भीमप्रियंगुमंजर्याः वर्णनं, कपिशावक दर्शनान्तरं तयोः सन्तापः, शिवार्चनं चैतत्सर्वमितिवृत्तं, महाभारतेनोपलभ्यते ।

तृतीयोच्छ्वासे तु दमयन्त्याः रूपवर्णनातिरिक्तमन्यत्सर्वं कथावस्तु नलचम्प्वां कविकल्पितमेव ।

चतुर्थोच्छ्वासे नलस्योत्कण्ठा, हंसेन दमयन्तीं प्रति नलजन्मवृत्तवर्णनं, श्रुतशीलवर्णनं, सालंकायनोपदेशः, नलस्य राज्याभिषेचनं, वीरसेनस्य वानप्रस्थाश्रम ग्रहणं, चेतत् कथावस्तु भारते नर्वणितत्वात् कविकल्पितमेवानुमीयते ।

पंचमोच्छ्वासेतु दमयन्त्याः हारमादाय नलस्य पार्श्वे हंसस्य पुनरागमनं, विदर्भयात्रायां मार्गे नल द्वारा किरातकामिनीनां, चक्रवाक मिथुनस्य च दर्शनम्, श्रुतिशीलेनतस्य निवारणं, सन्ध्यावर्णनं चेमानि स्थलानि कविसृष्टान्येव ।

षष्ठोच्छ्वासेऽपि सर्वं कथावस्तु काव्यवृत्तसम्पादनार्थमेव महाकविरकल्पयत् न तन्महाभारतीय नल चरितेन सह साम्यं वहति ।

सप्तमोच्छ्वासेतु नल भीम मिलनं, दमयन्त्युपायनप्रेषणं, नलदूत प्रेषणं, च कवि सृष्टिरेव ।

उपर्युक्तानिचेमानिस्थलानि मूल नलचरिते नाप्यन्ते । अतः परं यत्र साम्य सन्दर्भ सम्बन्धि स्थलेषु कविः इतिवृत्तं परिवर्त्य प्रार्युक्त तानि प्रदर्श्यन्ते—

(अ) नलः यदा हंसं जग्राह तदा कविस्तत्र तस्य हंस्या समुपस्थापनं चकार । भारते हंसः स्वयमेव मोचनार्थं नलं प्रार्थयति—

**ततोऽन्तरिक्षगो वाचं व्याजहार तदानलम् ।**
**न हन्तव्योऽस्मि ते राजन् करिष्यामि हि ते प्रियम् ।।**[1]

परंमत्र हंसस्य वरटा नलं प्रार्थयति—

**एकान्ते सेवते योगं मुक्ताहार परिच्छवः ।**
**हंसः समोक्षयोग्योऽपि देवकिं वध्यते त्वया ।।**
**नीरंजनपदे तिष्ठन्विश्वसंसारसंगतः ।**
**हंसः किं बध्यते क्वापि यस्य नालम्बनं प्रियम् ।।**[2]

यथा श्री हर्षस्य हंसः भयभीतः करुणरसापगागिरा नलं प्रार्थयति—

**मदेकपुत्राजननीजरातुरा नवप्रसूतिर्वरटा तपस्विनी ।**
**गतिस्तयोरेष जनस्तमर्दयन् अहो विधे त्वां करुणारुणद्धिनो ।।**[3]

न तथा त्रिविक्रमस्य हंसेन कृतम् ।

(ब) महाभारते दमयन्त्याः मातृनाम कुत्रापिनोक्तम् । यद्यपि तस्या विषये द्वित्रेषु स्थलेषु चर्चावश्यमभूत् । यथा उत्तरनलचरिते पितृगृहं प्राप्यदमयन्ती स्वभारतं नलान्वेषणार्थं प्रेरयति । तथा च चेदि देशे राज्ञः सुबाहोः माता जगाद यद् दमयन्त्या माता मम भगिनी वर्तते –

**अहं च तव माता च राजन्यस्य महात्मनः ।**
**सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ।।**[4]

परं तस्या नाम कुत्रापि नोपलभ्यते ।

नलचम्प्वां त्रिविक्रमेण तस्याः नमनिर्वचनं व्यधायि "प्रियंगुमंजरीतितस्य च महामहीपतेरातमरूपापहसित समस्तसुरतुन्दरीसौन्दर्यसारसंपत्तिकलकुलकन्दली-कंदर्पदर्पगजेन्द्रावष्टम्भस्तम्भयष्टिरखिलजननयनकुरंगबागुरा रामणीयकपताकायमानोद्भिन्ननवयौवनश्रीः, श्रृंगारस्यागारम्, अवनिर्बनिताबिभ्रमांकुराणाम्, आभोगः सौभाग्यभागस्य, रंगशाला रागवृत्तनृत्तस्य, सर्वान्तः पुरपुरंध्रिकाप्रधानभूतास्ति प्रिया प्रियंगुमंजरी नाम ।"[5]

---

१. म० भा० व० प० अ० ५० श्लो० १९

२. नलचम्पू द्वितीय उच्छ्वास श्लोक १८, १९

३. नैषध सर्ग १ श्लोक १३५

४. म० भा० व० प० अ० ६६ श्लो० १२

५. नलचम्पू द्वितीय उच्छ्वास

सम्भाव्यते यदिदं नम निर्वचनवृत्तं कविः जैनवाङ्मयस्य नल कथातः गृहीतवान् । यत्र दमयन्त्याः मातृनाम पुष्पदन्ती पुष्पवतीति वा समुल्लिखितं वर्तते[1] । कविः लालित्य संस्कारं संविधाय पुष्पवतीतिस्थाने प्रियंगु मंजरीति नामचकार ।

(स) महाभारते हंसः स्वयमेव दमयन्त्यावृत्तं नलं श्रावया मास—

**दमयन्ती सकाशे त्वां कथयिष्यामि नैषध ।**
**यथात्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ।।[2]**

परं नलचम्पू काव्ये आकाशवाणी द्वारा नलो ज्ञातवान् यदयं हंसः दमयन्तीं मांप्रति समाकर्षयिष्यति—

**राजन् राजीवपत्राक्ष क्षिप्रं हंसं विमुच्यताम् ।**
**भविष्यत्येष ते दूतो दमयन्त्याः प्रलोभने ।।[3]**

(द) नलस्य मातुर्नाम महाभारते व्यासेन नोद्गीरितमप्रासंगिकत्वात् । नलचम्प्वां पुनः नलस्य जन्म वृत्तान्त वर्णन प्रसंगे नलस्य मातुर्नाम रूपवतीत्यमिहितम्—

"अतिभक्तितोषितहरलब्धवरश्च निरुपमरूपयानुरूपया रूपवत्यभिधानया-प्रधानया प्रियया सह मकरकेतनकेलिफलमनुभवन्नतिश्चिरमासां चक्रे ।"[4]

ऊह्यते यदिमं जन्मवर्णनवृत्तान्तं कविः पुराणसाहित्यात् समनुहृतवान् । वाराह पुराणे चर्चा पतिता यदनपत्यो वीरसेनः स्वपत्न्यासह जामदग्न्य द्वादश्याः व्रतं चक्रे । तत्प्रभावेण पुण्यश्लोकस्य नलस्य जन्म अभूत् । तत्र पुराणे जामदग्न्यस्य परशुरामस्य पूजनं समनुवर्णितम् इह तु शिवार्चनमस्येदं कारणं सम्भाव्यते यत्कविः शैव आसीत् ।

(य) भारते पर्वतनारदौ नाकेलोके दमयन्ती स्मयंबरस्य वार्ता प्राप्तिवन्तौ । परं नलचम्प्वां वर्णनमिदं नाप्यते यद्देवाः कथं स्वयंबरवृत्तमजानन् ।

(व) महाभारते नलः यदा देवाभ्यर्थनां दमयन्तीम श्रावयत् तदादमयन्ती तस्मायुत्तरं प्रायच्छत्—

---

१. द्रष्टव्य-शोध प्रबन्धस्य चतुर्थोध्यायः जैनवाङ्मये नलचरितम् ।
२. म० भा० व० प० अ० ५० श्लोक २०
३. नलचम्पू द्वितीय उच्छ्वास श्लो० २३
४. वही चतुर्थ उच्छ्वास

सानमस्कृत्य देवेभ्यः ग्रहस्य नलमब्रवीत् ।
प्रणयस्व यथा श्रद्धं राजन् किं करवाणि ते ।।
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन ।
सर्वं तत्तव विश्रब्धं कुरुप्रणयमीश्वर ।।
हंसानां वचनं यत्तत्मां दहति पार्थिव ।
त्वत्कृते हि मयावीर राजानः संनिपातिताः ।।
यदि चेदभजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्नि जलं रज्जुमास्थाये तव कारणात् ।।[1]
त्वंचैव हि नरश्रेष्ठ, देवाश्चाग्निपुरोगमाः ।
आयान्तु सहिताः सर्वे ममयत्र स्वयंवरः ।।
ततोऽहं लोकपालानां संनिधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ।।[2]

नलचम्पू काव्ये तु कविः दमयन्ती मुखेन नलं नोत्तरं ददाति, तस्याः सखी प्रियंवदिका नलायोत्तरमदात्—

"देव, श्रुतं श्रोतव्यम्, अवधारितो देवादेशः । किन्तु न स्वतंत्रेयम्, ईश्वरेच्छया प्रवृत्तिनिवृत्तयो यतः प्राणिनाम्, अनालोचनगोचरश्चायमनुरागो अंगनाजनस्य । "तथाहि तीव्रतपनतापप्रियाम्भोजिनी न सहते स्तोकमप्यमृतमुचो रुचश्चन्द्रस्य, परिम्लायति मालतीमालिका सलिलसेकेन । प्रसिद्धं चैतत्—

भवति हृदयहारी क्वापि कस्यापि कश्चिन्-
न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयति वनान्ते कोकिलः लापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ।।[3]

(२) एकमन्यत्परिवर्तनं नलचम्प्वां मौलिकेन नलचरितेन सहेत्थं वर्तते यद् भारते शक्राग्नि वरुणयमदयो देवाः नल समीपे गतवन्तः—

एवमुक्ते नैषधेन मघवान्प्रत्यभाषत् ।
अमरान्वै निबोधास्मान् दमयन्त्यर्थंमागतान् ।।

---

१. म० भा० व० प० अ० ५३ श्लोक १-४

२. वही ५३, श्लो० १०, ११

३. नलचम्पू सप्तम उच्छ्वास

अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरोनृणां यमोऽयमपि पार्थिव ॥[1]

प्रस्तुताभ्यां श्लोकाभ्यां स्पष्टं यद् देवेन्द्र एव प्रणय प्रस्ताव निवेदनार्थं नलं प्रत्यवादीत् ।

परं प्रकृत काव्ये कविः वृत्तपरिवर्तनमकरोत् । पूर्वं देवानां भृत्यः नलं संसूचयति यल्लोकपालास्तव समीपमागच्छन्तीति । ततः शक्र कुबेर वरुण यमादयो लोकपालास्तत्रागच्छन्ति । अत्र कुबेरस्य परिगणनमग्नि देवस्य स्थाने कविः कृतवान् । कुबेर एवेन्द्रादीनामभिलषितं नलं न्यवेदयदितिवर्णितम्—

'उपविष्टेषु यथोचितासन्नमासनेषु यमवरुणकुबेरप्रमुखेषु देवेषु क्रमेण कृतोचिताचारः पुरः पृथ्वीपृष्ठ एव विनयान्निषथ निषधेश्वरपुरंदरमवादीत् ।''[2]

कृतेनानेन साम्यवैषम्य विवेचन कर्मणा गदितुं शक्यते यन्नलचम्पूः स्वभाषा सौन्दर्यातिशयेन, स्वविशिष्ट शैल्या, सभंगश्लेष प्राचुर्येण च विदुषां स्नेहभाजनं यथा जातं न तथा वस्तु विन्यास दृष्ट्या । कथावस्तु शैथिल्यं, इति वृत्तं च वर्णन बाहुल्येन गतिरोधत्वं च भजेते । वर्णनबाहुल्येन पात्र संम्मर्दः, पात्र सम्मर्देन च प्रवाह शैथिल्यं चावश्यंभावि । पात्र सम्मर्देऽत्र लघुनिकथावस्तुन्येव त्रिषष्टि संख्या कानि पात्राणि समाविष्टानि । तेषु त्रयस्त्रिंशत् पुरुष पात्राणि-यथा अवसर पाठक-इन्द्र, कुबेर-पर्वतक-पथिक-पथिक-पुरुष-पुरोघा-पुष्कराक्ष-प्रतीहार-प्रस्ताव पाठक-बाहुक-ब्रह्मर्षि-भद्रभूति-भीम-मृगयावनपालक-मुनि-मौहूर्तिक-यम, वरुण-वीरसेन-वैतालिक-श्रुतशील-सालंकायन-सुन्दरक-सोमशर्मा-हंसादयो सन्ति । त्रिंशत स्त्रीपात्राणि यथा-कक्कौकिला-कालिका-किरात कामिन्याः गोपी-गौरी, चकोरी, चंगी-चन्दना-चन्द्रप्रभा-चन्द्रवदना-चन्द्री-चम्पा-दमयन्ती-दन्दिनी-परिहासशीला-प्रियंवदिका-प्रियंगुमंजरी-सज्जनकामिन्यः, मालती-रूपवती-लवंगिका-लगंवी-विहंगवागुरिका-सारसिका-सुन्दरी-हंसी-किन्नर मिथुनादयो सन्ति ।

उक्तमेव यन्महाकविः त्रिविक्रम भट्टः वाणस्यानुकरणं शैल्यां चक्रे तथाप्यन्येषां पूर्वं भूतानां कविवराणामनुसरणमपि काव्ये संलक्ष्यते यथा कालिदासस्य । नलचम्पू काव्ये त्रिविक्रमस्य निम्नांकितौ द्वौ श्लोकौ कालिदासस्य

---

१. म० भा० व० प० अ० ५२, श्लो० ३, ४
२. नलचम्पू पंचम उच्छ्वास

रघुवंश महाकाव्यस्य श्लोकाभ्यां सह सादृश्यं वहतः—

**सोऽहं हंसायितुं मोहाद बकः पंगुर्यथेच्छति ।**
**मन्तधीस्तद्वदिच्छामि कविवृन्दारकायितुम् ॥**
**भंगश्लेषकथाबन्धं दुष्करं कुर्वता मया ।**
**दुर्गस्तरीतुमारब्धो बाहुभ्यामम्भसां पतिः ॥[1]**

रघुवंशे च—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषयामतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥**
**मन्दः कवियशः प्रार्थीगमिष्याम्युपहास्यताम् ।**
**प्रांशुलभ्ये फलेलोभादुद्बाहुरिव वामनः ॥[2]**

निष्कृष्टेदं वक्तुं प्रभवामः यत् त्रिविक्रम भट्टस्य नल चम्पू काव्यं यद्यपि कथावस्तु दृष्ट्या मौलिकं नलचरितं न बहूपकरोति परं चम्पू काव्य परम्परायां प्रथमतया नलकथासमावेशत्वात् स्वीय भाषा वैशिष्ट्याच्चास्या महत्वं सुविपुलत्वं भजते । काव्यमिदं स्वीयायाः शब्दचमत्कारजन्य सभंगश्लेषबन्धाया भाषायाः कृते यादृशं ख्यातं संजातं तादृशमेव त्रिविक्रमभट्टस्योत्कृष्टोपमालंकार प्रयोग-स्यापि कृते । यथा दीपशिखा कालिदासः, दर्पण श्रीहर्षः, घंटापथ माघश्च तत्त-दुपमान वैशिष्ट्येन प्रख्यातास्तथैव त्रिविक्रमभट्टोऽपि "यामुन त्रिविक्रम" इति विशेषणेन सुप्रसिद्धोऽस्ति—

**उदयगिरिगतायां प्राक्प्रभा पाण्डुताया-**
**मनुसरति निशीथे शृंगमस्ताचलस्य ।**
**जयति किमपि तेजः साम्प्रतं व्योम मध्ये,**
**सलिलमिव विभिन्नं जाह्नवं यामुनं च ॥[3]**

पूर्व नलचरितस्य वर्णनं कुर्वत्सु महा काव्येषु श्रीहर्षस्य नैषध महाकाव्यं त्रिविक्रम भट्टस्य च नलचम्पूः काव्यं चेमे द्व एव काव्ये विशेषतः उल्लेखनीये स्तः । एतयोरतिरिक्तान्यन्यान्यपि बहूनि काव्यानि वर्तन्ते, यानि खण्डतया नल-चरितं वर्णयन्ति । तानि शोध प्रबन्धस्याग्रिमेऽध्याय दृष्टव्यानि । पूर्व नलचरित-

---

१. नलचम्पू प्रथम उच्छ्वास श्लोक २१, २२
२. रघुवंश, सर्ग १ श्लोक २, ३
३. नलचम्पू षष्ठ उच्छ्वास श्लोक ७१

मुपवर्णयता महाकवीनामभिप्रायस्त्वेतदेव यदत्र नायिका प्राप्तिरूप फलागमेन ग्रन्थस्य सुखान्तत्वं सम्भवति। अन्यदपिध्यातव्यमिदं तथ्यं वर्तते यदिह खलु पूर्वं नलचरिते नायकस्य प्राधान्यं दृष्टिपथमायाति। नलः स्वयमेव दमयन्तीं सम्प्राप्तुमिच्छति, देवदौत्यादि विघ्नानप्यनुभूयान्ते नायिका समागमफलमनुभवति। अतः नायकस्याफलागममारम्भ यत्न प्राप्त्याशा नियताप्ति रूपोद्योगाः संलक्ष्यन्ते।

परमुत्तरनलचरिते नायिकायाः दमयन्त्याः प्राधान्यं दृश्यतेऽनुभूयते च। नायकस्य तु औदात्यच्युतिः लक्ष्यते यथा प्रसुप्तदमयन्त्याः परित्यागः, उत्तर नल कथायां फल प्राप्तये सक्रियत्वं नायिकायां संलक्ष्यते न तु नायके। अतएव कैश्चिद् कविभिरुत्तरनलचरितस्य कृते दमयन्ती चरितभित्यमाणि न तदयुक्तियुक्तम्। तथापि सम्पूर्णं नलचरितमालोड्य पुनः नायकाभ्युदयरूपनिःश्रेयसत्वात् पुण्यश्लोकस्य नलस्यैव प्राधान्यान्नलचरितमित्येवाभिधानं समीचीनम्।

नैषधटीकाकारेण नारायणेन यदुक्तं—"उत्तर नलचरितस्य नीरसत्वेन" इति, तन्नयुक्तम्। उत्तर नलचरिते करुण विप्रलम्भस्य समुद्रेक एव ब्रह्मानन्दसहोदरं रसानन्दं प्रापयितुं सर्वथा क्षमः। यावद् जीवित संघर्षाणां परीक्षणनिकते कस्यापि पुरुषस्य जीवनं न परीक्ष्यते, यावच्च विपज्जटाजालैः कस्यापि जीवनं न कंटकायितं क्रियते तावत्तस्यौदात्यमपि न सम्परीक्षितुं शक्यते। उत्तर नलचरितन्तु जीवितस्य संघर्षगाथा वर्तते, जिजीविषायाः ज्वलन्तं प्रमाणं, प्रेमार्थं सर्वस्वोत्सर्गस्य साक्षीव समनुभूयते। एतत्सहैव दैवदुर्विपाक रूपघनान्धकारे आशादीप प्रज्वालनपरो दीपाधार इव च लक्ष्यते। द्यूते पराजितस्य नलस्य स्वदेश एव चारैः निष्कासनं, राज्ञः राजमहिष्याश्च क्षुधार्ततया सर्वतः परिभ्रमणम्, एकाकिन्याः दमयन्त्याः वने नेकविघ्नानुभवः, त्रैलोक्य सुन्दरस्य नलस्य कृते परोपकारस्य प्रतिदाने वैरूप्याप्तिः कं नाम निष्ठुरं नाह्लादयति इदमेवाभ्यन्तरं रससौन्दर्यं निरीक्ष्य समधिकाः कवयः उत्तर नलचरितमवर्णयन्।

अपरं च त्रिविक्रम श्रीहर्षाभ्यां समुपवर्णिते पूर्वं नलचरिते प्रतिभावलेन यथा सौन्दर्यमुन्मीलयितुमवकाशः परिलब्धः न तथान्यैः कविभिः प्रौढिनिर्व्यपेक्षत्वात्। ततः सम्पूर्णं नलचरितमाधारीकृत्य उताहो उत्तरं नल चरितं वाश्रित्य परवर्त्तिनः कवितल्लजाः स्वशेमुषीं पूरितवन्तः। अस्तु नाम ! सम्प्रति इत्येतेषु आयामेषु नलकीर्ति कौमुदी सहृदयानन्दश्च यथामति समीक्ष्यते। अन्येषां नलचरित सम्बन्धिनां काव्यानां परिचयः अग्रिमेऽध्याये दास्यते।

## नलकीर्ति कौमुदी

नलकीर्तिकौमुद्याः प्रणेता अगस्त्य पण्डितः संस्कृत वाङ्मये सुविपुल साहित्य प्रणेतॄणां कवीनां पंक्तिमध्यास्ते । अगस्त्य पण्डितोऽयं स्वमुखादपि विद्वांस-भात्मानमुद्घोषयति । स्वीये कृष्णचरित नामके गद्य काव्ये कविः उक्तवान्—

**अनावृत्य श्लाध्यान् भुवि कविनिबन्धानभिरतिम्,**
**कृतौ वैयासिक्यां रचयितुरगस्त्यस्य विदुषः ।**
**वसन्ती वाग्देवी कृतिनि रसनाग्रेषितनुते,**
**न पर्यंके पंकेरुहि महतिशंके बिहरणम् ॥''[१]**

अगस्त्य पण्डित रचितस्य ''बालभारताख्यस्य'' काव्यस्य टीकाकारः शाल्व थिम्मैय्या दण्डनाथौ महाकवि 'पण्डित' इति शब्देनोद्बोधयति—''तत्र भवानगस्त्य पण्डितो नाम महाकविः'' । नलकीर्तिकौमुदी काव्यस्य सर्गान्ते उपनिबद्धया पुष्पिकया ज्ञायते यदस्य काव्यस्य प्रणयनं श्री अगस्त्य पण्डितेन कृतम्—

''इति नलकीर्तिकौमुद्याख्ये लक्ष्मी पदलांछने अगस्त्य कृतौ महाकाव्ये द्वितीय सर्गः ।''[२]

दाक्षिणात्या कवयित्री गंगा देवी स्वीये 'मधुरा विजय' काव्ये पण्डितमगस्त्यं चतुस्सप्ततिकाव्यानां प्रणेतृत्वेनोल्लिखितवती—

**चतुः सप्तति काव्योक्ति व्यक्त वैदुष्यसम्पदे ।**
**अगस्त्याय जगत्यस्मिन् स्पृहयते को न कोविदः ॥[३]**

एतेषु चतुस्सप्तति काव्येषु कानि कानि काव्यान्यासन्निति न निश्चयेन वक्तुं शक्यते । रुक्मिणी कल्याणम् नामके काव्ये राजचूडामणि दीक्षितेन कवैरस्य श्लाघनं विहितम्—

**जडाशयानां हृदयं जगत्याम्,**
**यस्योदयात् यातितमं प्रसादम् ।**
**स एष सारस्वतमर्मवेदी,**
**विभाति मौलौ विदुषामगस्त्यः ॥[४]**

---

१. कृष्ण चरित—अगस्त्य पण्डित—ग्रन्थान्ते (ग्रन्थ मैनुस्क्रिप्ट)

२. नलकीर्तिकौमुदी अगस्त्य पण्डित - द्वितीय सर्ग पुष्पिका

३. मधुरा विजय-गंगादेवी सर्ग १ श्लोक १४

४. रुक्मिणी कल्याणम्-राजचूड़ामणि दीक्षित सर्ग १ श्लोक १८

यद्यपि स्वयं महाकविना स्व समय विषये न किमपि संकेतितं तथापि सौगन्धिकहरणमिति काव्यस्य प्रणेता विश्वनाथः स्वीये काव्ये स्वमातुल रूपेण तमगस्त्यं समुपवर्णितवान्—

**वाचस्तस्य कवेरुदारमधुरा, इत्यत्र चित्रं किम्,**
**प्रख्यातः सकलासु दिक्षु गुणिषु श्रेयानगस्त्यः सुधीः।**
**वेधाश्चन्द्रमुखी करांगुलिदला संगक्वणद्वल्लकी,**
**वाचोयुक्ति सहोक्ति दर्शित सुधाजन्मा स यन्मातुलः ॥[1]**

अगस्त्य पण्डितश्च राज्ञः प्रताप रुद्रस्य राज सभायामासीत्। अयं नरेशः १२९२ ईसवीयतः १३२३ ईसवीय पर्यन्तं वारंगल नामकस्य स्थानस्य शासको भूत। अतः अगस्त्य पण्डितोऽपि समयमिमसेवालंकरोति। नलकीर्तिकोमुद्याः अतिरिक्तं बालभारतं कृष्णचरितं चास्य कवेः सुप्रसिद्धे काव्ये।

नलकीर्तिकौमुदी कहाकवेः अगस्त्यपण्डितस्य प्रतिमायाः कवित्वशक्तेश्च चरमं निदर्शनम्। परं ग्रीर्बाणवाणी साहित्य दौर्भाग्येनास्य काव्यस्य साम्प्रतं द्वावेव सर्गावुपलभ्येते। सर्व प्रथममेतयोः प्रकाशनं तेलुगुलिप्याम् 'आन्ध्र साहित्य परिषद् पत्रिकायां'[2] १९२९-३० ईसवीये समभूत्। देवनागर्या लिप्यामस्यानुवादः टी० वेंकटाचार्य्य महोदयेन प्रकाशितः। साम्प्रतं 'इण्डिया आफिस लाइब्रेरी' पुस्तकालयेऽस्य सर्गद्वयस्य भूर्जपत्रे सनुल्लिखिता पाण्डुलिपिः प्राप्यते।[3] यदि कथमपि लुप्ताः सर्गाः प्रकाशपथमानयेयुस्तर्हि संस्कृत वाङ्मयस्य बहूपकारो भवेत्। अपूर्णापि नलकीर्तिकौमुदी स्वीयोपलब्धेन सर्गद्वयेनैव सहृदयानाह्लादयति।

नलकीर्तिकौमुद्याः द्वितीय चतुर्थो सर्गो प्राप्येते। अनयोः सर्गयोरितिवृत्तमवलोक्य ज्ञायते यत्कविः सम्पूर्णमेव नलचरितमुपनिबद्धयितुं बांछतिस्म। यद्यपि न पूर्ण निश्चयेनेदं वक्तुं सुशकं यत्कवेरभिप्रेतं किमासीदिति तथापि नलकीर्तिकौमुद्यां कथायाः द्रुततरेण प्रवाहेण प्रतीयते यत्कविः सम्पूर्ण नलचरितं वर्णयितु मुपक्रमत इति। पुष्पिकायां प्रयुक्तेन 'महाकाव्ये' इत्यनेन महाकाव्यत्व-

---

१. सौगन्धिक हरणम्-विश्वनाथ-सर्ग ५ श्लोक ४

२. ए०एस०पी०पी० कोकिनाडा सम्पुट १८, अंक १ और २ सन् १९२९-३०

3. India Office Library London, 17th August, 1927 Burnell Collection, 3785 M.S S.

मस्यानुमीयते । समुपलब्धयोः सर्गयोः प्रथमे सर्गे नवसप्तति पद्यानि चतुर्थे सर्गे च त्र्यधिकैकशतानि पद्यानि सन्ति । कविरिह खलु काव्ये इन्द्रवज्रोपेन्द्रवज्रोपजातिवसन्ततिलकाशार्दूलविक्रीडितभुजंगप्रयातस्वागता स्रग्धरादीनि छन्दांसि एवानुव्याहृतानि । काव्य भाषा सरला माधुर्यादि गुणान्विता, कवित्वशैल्याचोतप्रोता दृश्यते । क्रमशः समीक्षात्मकाध्ययनार्थं द्वितीय चतुर्थं सर्गयो कथावस्तु प्रस्तूयते—

'तत्र द्वितीय सर्गे—'दैवदौत्यव्याप्रतस्य पुण्यश्लोकस्य कुण्डिन्यां समागमनम् । कुण्डिनपुरी वर्णनम् । भीमस्यान्तः पुरनिरीक्षणम् । सखी समुदायेन सहोपविष्टायाः दमयन्त्याः दर्शनम् । अन्तःकरण एव भैमीवर्णनम् । तिरस्करिणी विद्या द्वारा अन्तर्हितेनैव सतानलेन दमयन्त्यै लोकपालानामभिलाष निवेदनम् । देवगुणगणवर्णनम् । नलेन 'देवान् वृणीष्व' इत्युपदेशः । दमयन्ती द्वारा तस्य प्रत्याख्यानं, नलवरणं च मया निश्चितमिति कथनम् । नारदमुखेन भैमीस्वयंवरसमायोनामाकर्ण्य तस्याः वंचनार्थं कपट विधाने देवानां मतिः । स्वयंवरार्थे लोकपालानामागमनम् । सभागतां राज्ञां गुणगणादि समुपवर्णनार्थं विदर्भराजस्य चिन्ताकुलता । तत्कार्यसंपादनार्थं हरिब्रह्मादि देवै देव्याः सरस्वत्याः प्रेषणम् । तदर्थे सरस्वत्याः समवतरणम् । सरस्वती द्वारा विदर्भराज्ञे स्वावतरण प्रयोजन निवेदनम् । स्वयंवरार्थं भैम्या अभिषेकादिना सज्जीकरणम् । दमयन्ती वर्णनम् । दमयन्ती द्वारा सरस्वती वन्दनम् । दमयन्त्यैः सरस्वत्याः वर प्रदानम् ।

चतुर्थ सर्गे - विवाहोपरान्तं दमयन्ती सहितस्य नलस्य स्वराजधान्यां कल्याणपुर्यामागमनम् । भैमी दर्शनार्थे नागरस्त्रीणां जातस्य सम्भ्रमस्य वर्णनम् । तत्काल एव समागतस्यर्तु राजस्य वर्णनम् । वसन्तबाधितानां यूनां रतेच्छां । सूर्यास्तवर्णनम् । हरिदंगना वर्णनम् । नक्षत्र चन्द्रोदय वर्णनम् । काम साम्राज्य वर्णनम् । नल दमयन्त्योः केलिगृहे समागमनम् तयोर्विविधविलास वर्णनम् । अपरेषां यूनां सुरत वर्णनम् । सर्वेषां निद्रालसत्वम् । चन्द्रास्तवर्णनम् । प्रातः कालवर्णनम् । सूर्योदय वर्णनम् । भास्करबिम्ब वर्णनम् । समये भैम्या आपन्नसत्वावस्था वर्णनम् । गर्भमरालसायाः दमयन्त्याः वर्णनम् । प्रथमं पुत्रोत्पत्तिः पश्चात् पुत्रीजननं च । पुण्यश्लोकस्य नलस्य सौराज्य वर्णनम् ।

स्पष्टमेवानेन सर्गद्वयवृत्तान्तावलोकनेन यद् द्वितीय सर्गस्येति वृत्तं दैवदौत्यं स्वीकुर्वता नलस्य कुण्डिनपुरीं समागमनात् प्रारभ्यते । येन प्रथय सर्गेवश्यतया,

निषधवर्णनम्, नलवर्णनम्, विदर्भवर्णनम्, भीम दमयन्त्योवर्णनम्, नलदमयन्त्योः परस्परमनुरागवर्णनम्, हंसदौत्यम्, देवर्षि द्वारा स्वयंवर वार्ता प्रेषणम्, इन्द्राग्नि वरुण यमानां चतुर्णां लोकपालानां दूतकार्ये नलस्य नियोजनमित्यादीतिवृत्तं तत्सम्बन्धः प्रथम सर्गश्च वर्णितोऽभूदिति समूह्यते ।

तृतीय सर्गस्त्वनुपलब्ध एव । परं द्वितीय चतुर्थ सर्गयोरितिवृत्त वर्णनेन ज्ञातुं पार्यते तृतीय सर्गस्थं कथावस्तु । चतुर्थः सर्गः विवाहोपरान्तं नलदमयन्त्योः निषिधापुर्याः समागमनात्प्रवर्तते । निषिधापुर्याः स्थाने कविरत्र कल्याण पुरीति नाम चकार, अतः तृतीये सर्गे निश्चयेन स्वयंवर वर्णनम्, सरस्वत्याकृतं राज वर्णनम्, पंचनली वर्णनम्, नलवर्णनम्, देवैः नलाय वर प्रदानं, नल दमयन्त्योर्विवाहादिकभितिवृत्तमासीदिति सभवगन्तुं शक्यते । चतुर्थः सर्गो नलस्य सन्तानलाभस्य प्रसंगेनैव समाप्यते । नैषधे महाकाव्ये तु पुनः विवाहपर्यन्तमेवेतिवृत्तं समनुवर्णितमनेनोह्यते यत्कविः अग्रिमं नलचरितमुपवर्णयितुं समुत्सुक आसीत् । कैश्चिद्विद्वद्भिः यत्कथित 'खण्डकाव्यं' नलकीर्ति कौमुदीति[1] तत्तु नौचितम् । यतः कविः स्वयं सर्गान्ते महाकाव्यत्वेन नलकीर्ति कौमुदी समुपवर्णयति । पुनश्च प्रबल प्रमाणाभावेन न किमपि स्पष्टतया वक्तुं शक्यते ।

साम्य सम्पादन दृष्ट्या घटनाक्रमस्तु नलकीर्ति कौमुद्याः सर्गद्वयस्य सार संक्षेपेणैव प्रदर्शितस्तेनैवावगन्तुं शक्यः । परं वैषम्य सम्पादने कवि मौलिकमित्तिवृत्तं कुत्र, कथं च पर्यवर्तयत् तद् व्याख्यायते—

१. महाभारते नलः दमयन्त्याः अन्तःपुर यदा प्रविशति तदा सोऽन्यैः जनैरदृश्य आसीत् । दमयन्ती तस्य तख्यश्च पुनस्तं दृष्टवत्यः—

**ततस्ता नैषधं दृष्ट्वा संभ्रान्ता परमांगनाः ।**
**आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥**[2]

परं नलकीर्तिकौमुद्यां नलो नात्मानं प्रकटयति । अन्तर्हितः सन्नैव देवाभ्यर्थनां दमयन्तीमश्रावयत्—

**प्रतिश्रुतार्थाकरणे महाध-**
**मालोच्य भैमीमभिकोऽपि पश्चात् ।**

---

1. New catalogque Catalogorum, Volume I, under Agastya Pandita.

२. म०भा० व० प० अ० ५२, श्लो० १४

अन्तर्हितोऽसावशरीरिणीव,

तामिलवोचद्धिमशैलधैर्यः ॥[1]

२. नलकीर्ति कौमुद्यां देवर्षिनारदः पुनः स्वयंवर कालस्य सूचनां देवान् प्रापयति ततश्च देवाः कपटविधानेन दमयन्तीं परिवंचयितुं सन्नद्धा भवन्ति—

देवर्षि संश्रावित भीमपुत्री,

स्वयंवराख्य क्षणवीक्षणोत्वाः।

विचित्र रत्ना भरणोज्ज्वलांगा-

स्ततः सुवस्त्रा घृत दिव्यरूपाः ॥[2]

अनेनेदमपि ज्ञायते यत्प्रथम सर्गे विस्तरेण नारददेव संवादोऽवश्यमेव संयोजित आसीत्।

महाभारते नेदं वृत्तमुपलभ्यते। नलेनैव दमयन्त्वाः निश्चयं परिज्ञाय देवगणः स्वयंवरे सम्मिलित आसीत्।

३. नलकीर्ति कौमुद्यामिदमपि गदितं कविना यन्नलस्य प्रत्यावर्तन पूर्वमेव देवाः स्वदूती मुखेन दमयन्त्याः निश्चयं ज्ञातवन्तः—

सुराः पुरैव श्रुत भैम्युदन्ता,

दूती मुखात्ते च नलादपीमम्।

श्रुत्वामतिं चक्रुरवाप्तजाला-

स्तद्वचनार्थं कपटं विधातुम् ॥'[3]

भारते दूती प्रसंगोनास्ति। प्रसंगोऽयं नैषधादुद्धृत इति प्रतीयते।

४. अगस्त्यः अनेकत्र श्रीहर्षमनुचकारेति स्पष्टम्। दमयन्ती स्वयंवरावसरे सरस्वत्या परिकल्पनमेवास्य प्रमाणम्। प्रसंगोऽयं कविनागस्त्येन कुशलतया चित्रितः। समागतानां राज्ञां परिचयार्थं चिन्तितं भीमं दृष्ट्वा तत्समकालमेव ब्रह्माच्युतदेवाः सरस्वतीं तत्कार्यं गौरवं मत्वा प्रेषयन्। सरस्वती विदर्भराजस्य प्रासादे समवतीर्य स्वागमन कारणंन्यवेदयत् —

राजा सभामध्यगतस्ततोऽभूत्,

कुलानिशीलानि वदेदभीषाम्।

---

१. नलकीर्ति कौमुदी, २।११

२. वही ,, २।४०

३. वही सर्ग २, श्लोक ३८

समागतानां चरितानि चेह,
काद्येतिचिन्ताकुल चित्तवृत्तिः ।।
सत्राविधात्राच्युतमुख्यदेवा:,
समेयुष: कुण्डिनमंकदैव ।
नाथान्त्रिलोक्याः शतशो विलोक्य,
वाग्देवताकित्यवदंस्तदानीम् ।।
स्वयंवरार्थं विहितोद्यमेन,
पित्रा तदीयेन जगत्यधीशाः ।
प्राप्ताः कृताहूतय इन्द्रमुख्याः,
सुरानरेन्द्राश्च पुरीं फणीन्द्राः ।।
याह्यद्य देवि त्वमितो धरित्रीं,
कुलानि शीलान्यभिधातुमेषाम् ।
राज्ञां चरित्राणि च राजपुत्र्यै,
श्वश्रेयसे स्याद्धि महत्प्रशंसा ।।
संवर्ण्य राज्ञः समुपागतांस्तान्,
नलेन भैमीं सह संघटय्य ।
निर्वर्ण्य कल्याण महं महान्तं,
स्वभर्तृ पार्श्वं पुनराश्वपेहि ।।'

सरस्वती वर्णने कविः कीदृशं भव्यं सौन्दर्यं निरूपयति—

ततः कणादाक्षपदः प्रणीत-
विद्यारदालिद्वयदीपिताशा ।
श्रुतिस्मृतिद्वन्द्व निजाक्षियुग्मा,
मुनीरितव्याकरणस्फुरद्वाक् ।।
संगीत साहित्य लसत्कुचोच्चा,
त्रयी मयोण्णेयवलित्रयान्ता ।
सांख्योरुयुग्माद्वयवादपादा,
मध्ये सभ सावततार वाला ।।

---

१. नलकीर्ति कौमुदी, सर्ग २, श्लोक ४८-५३

सा शारदा शारदचन्द्रचन्द्रिका,
स्मितांकुराभाविशदां विभोः सभाम ।
प्रकुर्वती भूपतिमित्युवा च तं
स्तुवन्तमित्यात्मनिविष्टलोचनम् ॥
राजन् पद्मभवादिसर्वविबुधैः सम्प्रार्थिता प्रेषिता ।
नाम्नाहं चतुरास्य हंस वरटा देवांगनास्म्यागता ॥
भूत्वा त्वद् दुहितुः सखी च वरणे राज्ञां सुराणामहं ।
वंशान् सुप्रथितानि शील चरितान्यावर्णयामि प्रभो ॥[1]

प्रसंगोऽयं नलचरितेन प्राप्यते ।

५. प्रकृत प्रसंग एवान्यदेकं तथ्यं चमत्कारकारि । नलस्य रूपे स्वयं भगवान महेश्वर एव समवतीर्णवान्, दमयन्त्याश्च स्वरूपे भगवतीशिवा चावतीर्णा जाता भीमस्य गृहे गच्छन्तीं सरस्वतीं ब्रह्मादयो देवा जगदुः—

वार्तामिमां वाणि शृणुत्व भूमौ,
भीमात्मजाभूदगराज कन्या ।
हरो नलः पापहराभिधानो,
लोकेश्वरो भूतिकृतागंरागः ॥[2]

कवेः कथनस्यास्य पौराणिकमैतिहासिकं काव्यात्मकं वा मूलं न कुत्र चिदपि समासादितम् । नलदमयन्त्यौ पूर्व जन्मनि भिल्लावास्तामाहुकाहुकीति नामानौ, एकदाशिवेन तानुग्रहीतौ युवयोर्पुनर्मेलनं हंसरूपेहं कारयिष्यामीति वरमपि प्रापतुः । शिव पुराणे एतद्वृत्तं प्राप्यते ।[3] किन्तु स्वयं शिवशिवावेव नलदमयन्त्यावभूतामिति न कुत्रापि दृश्यते ।

६. महाभारते नलः निषधाधिपत्वेनोपवर्णितः अन्येऽपि नल कथा प्रणेतार अदः तथ्यं स्वीकुर्वन्ति, परं नलकीर्ति कौमुद्यां नलस्य राजधानी कल्याणपुरीति वर्णिता—

ततः शुभंयौ दिवसे सदारः,
प्रस्थापितो सौ श्वसुरेण राजा ।

---

१. नलकीर्ति कौमुदी सर्ग २ श्लोक ५४, ५५, ६१, ६२

२. वही सर्ग श्लोक ५०

३. शोध प्रबंध द्वितीय अध्याय पुराणेषु नलचरितम्

नीत्वा त्रिरात्रं वसतौ सहैव,
क्रमेण कल्याणपुरी मगात् स्वाम् ।।'[1]

७. महाभारते विवाहोपरान्तं नलः कति दिवस पर्यन्तं श्वसुरालये न्यवसदिति नोपवर्णितम् । कथा सरित्सागरे पुनः सोमदेवः सप्त दिवस पर्यन्तं तस्य निवसनं वर्णितवान्—

नलश्च सप्तदिवसान् स्थित्वा श्वसुरवेश्मनि ।[2]

परं नलकीर्ति कौमुद्यां मासावधि निवासस्तस्य परिकल्पितः—

ततः प्रयातेष्वखिलेषु तेषु,
सुरेषु भूपेषु च पन्नगेषु ।
नलोप्यु वास श्वसुरालये सो,
मासं नवाढां स्ववशं निनीषुः ।।'[3]

८. कल्याणपुरी वर्णन प्रसंगे कविः समभिहितवान् यत् तत्रस्याः जनाः वृषान् पालयान्ति स्म—

'कल्याणपूर्युत्तमधर्ममुख्य,
त्रिवर्ण शुश्रूषण तत्परैर्या ।
पूर्णाकुलाचारातैर्महद्भिः,
श्रिया सदाम वृषलै वृषाप्तैः ।।'[4]

महाभारते नैतद्वर्णनमापतितम् । किन्त्वनेन सूच्यते यत्कविरुत्तर नलचरितस्य बीजमंत्र न्यक्षिपत् । महाभारते कथितमेव कलिः वृषरूपेण नलमुपगम्य पुष्कर द्वारा द्यूते तं पराजितवान् इति ।

एतदतिरिक्तं चतुर्थ सर्गस्यान्यत् वृत्तं कवि कल्पितं संलक्ष्यते । सर्गान्ते नलस्य पुत्रस्य पुत्र्याश्च यन्नाम कविः कृतवान तन्महाभारतेन सहसाम्यं वहति । नलकीर्ति कौमुद्यां—

'प्राचीव सूर्यं समये जयन्तं,
शचीव राशिः पयसामिवेन्दुम् ।

१. नलकीर्ति कौमुदी सर्ग ४ श्लोक २
२. कथा सरित्सागर दृष्टव्य शोध प्रबन्ध षष्ठ अध्याय
३. नलकीर्ति कौमुदी सर्ग ४ श्लोक १
४. वही सर्ग ४ श्लोक ६

**प्रागिन्द्रसेनं च सुधांशु वंच,**
**रत्नं सुपुत्रं सुषुवे थ भैमी ।।**
**बभूव पश्चात् तनया नयाढ्या,**
**नवेन्द्ररेखेव भूवीन्द्रसेना ।**
**शुक्तौ विशुदेव सुमौक्तिकानि,**
**विव्युत्तमा कल्पलते व भैम्याम् ।।**[1]

महाभारतेऽपि-द्वित्रेषु स्थलेषु तयोर्नामनीत्थमेव प्रतिपादिते ।[2] एतदतिरिक्तं न किमपि परिवर्तनं कथावस्तुनि निरीक्ष्यते ।

अत्र सम्भाव्यते यत्कविः मौलिकस्य नल चरितस्य कतिपयानां विशिष्ट-स्थलानां समुपबृंहणार्थमेव प्रकृतकाव्यस्य प्रणयनं व्यदधत् । काव्यस्याभिधानेनैव ज्ञायते यन्नलस्य कीर्ति कौमुद्यां प्रचुर प्रचार एव कवेरभिप्रेतः । नायकस्य वैशिष्टचमेव काव्ये समुद्घाटयितुं कवेः प्रयतिः । नलस्य चारित्र्ये कानिचित् वैशिष्ट्यानि परिलक्ष्यन्ते यथा—महाभारते स "ग्रहय तत्वज्ञ" पदेन व्यपदिष्टः । अश्वशास्त्रज्ञस्य रूपेऽस्य ख्यातिः ऐतिहासिकी अस्त्येव –

**शालिहोत्रोऽथ किं नु स्यात् हयानां कुलतत्ववित् ।**
**मानुषं समनुप्राप्तो वपुः परमशोभनम् ।।'**[3]

नः शालिहोत्रस्यावतारत्वेनात्र परिकल्पितः ।

अनेनैव प्रकारेण पाक कलायामपि नलोदक्ष आसीत्—

**अन्न संस्कारमपि च जानाभ्यन्यैर्विशेषतः ।**[4]

ऋतुपर्णनलयोः परस्परं अश्वाक्ष हृदय विद्ययोरादानप्रदानं तु सर्वं स्वीकृतमेव वृत्तम् । सम्भवतया मूल काव्ये एतेषां मुख्य घटनानां विस्तरेण वर्णनमभूत । नलकीर्ति कौमुद्याः टीकाकारस्य टी० वेंकटाचार्य्य महाशय स्यपि मन्तव्योऽयमेव दृश्यते –

"Agastya Pandit must have some specific reasons for composing this work. Nala's glory (Nalakirti) was splendid

---

१. नल कीर्तिकौमुदी सर्ग ४ श्लोक १०१-१०२

२. म० भा० व० प० अ० ७३ श्लोक २४ एवम्, ५७।२१

३. वही ६९ श्लोक २५

४. वही ६४ श्लोक ३

in a several special areas."[1]

Most probably Agastya Pandita had some plans to deal with these distinctive areas and other glorious episodes pertaining to the Nalopākhyāna, in his own poetical way, the areas and the episodes that were lest out by the other poets Sriharṣa, Trivikrama and the like."[2]

वस्तुतः नलकीर्ति कौमुद्याः क्षतिरपूरणीयाऽस्ति।

नलकीर्ति कौमुद्यां तत्र भवतागस्त्यपण्डितेन महाभारतीयस्य नलचरितस्य सूक्ष्मेतिवृत्तांशानां समुपवर्णनं कवित्वशिल्पनैपुण्यपूर्वकं व्याख्यातम्। अत्र द्वित्राणिस्थलानि प्रदर्शयन्ते। यदा देव दौत्य कर्मणि व्यापृतौ नलः देवाभ्यर्थनं दमयन्तीं श्रावयति तदा तयौः वार्ताः स्वप्रभावान्वितौ श्लाघनीयाः वर्तन्ते। भारते नलेनोक्तं यत्कोनाम पुरुषः देवैः सह प्रतिद्वन्द्वित्वेन कुशलतया जीवितुं शक्नोति—

येषामहं लोककृतामीश्वराणां महात्मनाम्।
न पाद रजसा तुल्यो मनस्ते तेषु वर्तताम्॥
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति।
त्राहि मामनवद्यांगिवरयस्व सुरोत्तमान्॥'[3]

नलकीर्ति कौमुद्यामस्य भावस्य पल्लवनं प्रेक्षणीयम्—

नलोऽपिनालं नलिनाक्षिमन्ये,
देवेषु वैरं विरचय्य यातुम्।
सौख्यं वदस्व त्वमरालकेशी,
सुखी कुतः स्याद् बलवद् विरोधी॥
शापं प्रदातुं च विधातुमेनं,
राज्यच्युतं भ्रष्टसमस्तकृत्यम्।
अलं भवेयुः कुपिता नलं ते
तेषामशक्यं वद किं त्रिलोक्याम्॥[4]

---

1. Nala Kirti Kaumudi Editor T. Venkatacharyya, p. 19
2. Ibid 20
३. म० भा० व० प० अ० ५३ श्लोक ६ व ७
४. नलकीर्ति कौमुदी, सर्ग २ श्लोक ३१-३२

नलस्य वाक्यमुत्तरयन्ती दमयन्ती यत्कथितवती तदप्यद्भुतमेव—

पुलोमपुत्रीमनुभूय शक्रो,
न मानुषीं प्रार्थयितुं किलार्हः।
आघ्राय जातीकुसुमं षडंघ्रि-
रपेक्षते किं नु वदस्व तुम्बीम्॥

प्रतीक्षमाणासुसदाप्सरस्सु,
न मानुषीं याचितुमर्हतीन्द्रः।
मरन्दपूर्णेष्वरविन्दवृन्दे-
ष्विन्दिन्दिरो वांछति किं वदार्कम्॥'[1]

श्लोकेऽस्मिन् प्रतिवस्तूपमलंकारच्छटा दर्शनीया। संवादस्य समाप्तौ महाभारतस्य निम्नांकितो भावः—

यदि चेद् भजमानां मां प्रत्याख्यास्यसि मानद।
विषमग्निं जलं रज्जुमास्थाये तव कारणात्॥[2]

कविः नलकीर्ति कौमुद्यां पूर्वोक्त मेव भावं वर्णयति—

गृह्णाति पाणिं स नलो चेन्मे,
पूरे च वारौ ज्वलिते नले वा।
त्यक्ष्यामि पीत्वापि विषं शरीरं,
स्पृशामि नान्यं कृत संविदेषा॥[3]

अनेनैव प्रकारेण स्वयंवर प्रसंगे समागतानां राज्ञां वर्णने महाभारतस्य वर्णनम्—

सुरभिः स्रग्धरा सर्वे सुमृष्टमणिकुण्डलाः।
तां राज समितिं पूर्णां नागैर्भोगवतीमिव॥[4]

कविरनुसरति प्रकृतकाव्ये—

'भोगस्थमप्युज्ज्वल मौलिरत्ना,
भोगीश्वरा वासुकि तक्षकाद्याः।

---

१. नलकीर्ति सर्ग २ श्लोक ३४-३५

२. म० भा० व० प० अ० ५३, श्लोक ४

३. वही कौमुदी सर्ग २ श्लोक ३६

४. म० भा० व० प० अ० ५४ श्लोक ४

भोगैः शुभैर्भोगवतीसपत्नीं,
प्रापुः पुरीं भीममहीं मघोनः ।।[1]

पण्डितोऽगस्त्यः श्रीहर्षस्य छायात्वं बहुषु स्थलेपूषु गृहीतवान् परं श्रीहर्षस्य ऊहापोहरूपां विस्तार शैलीं न क्वाप्यनुचकार । मौलिकेतिवृत्त परिरक्षणे कविः दत्तक्षण इवाभाति । कल्पना वारापारे आत्मानं निमज्ज्य न क्वचिदपितिवृत्तं परिवृत्तवान् । कथावस्तुकवित्वकल्पनयोरद्भुतं सामंजस्यमिह दृश्यते ।

संस्कृत काव्येषु प्रातः, सन्ध्या, चन्द्रोदयः, कौमुदी बसन्तश्चेत्यादयः समेषां कवीनां कल्पनावलेन वर्ण्याः संजाताः । अगस्त्यपण्डितोऽपि सूर्योदयादिकम वर्णयत् । प्रातः वर्णनं दृष्टव्यम्—

प्रबोधितः कुक्कुटदेशकेन,
कामिद्विजाः पश्चिमरात्रपाठ्यम् ।
चक्रुर्हि वात्स्यायनवेदपाठ-
माम्रेडितोक्तं भणितस्वराढ्यम् ।।'[2]

अनेनैव प्रकारेण अन्यान्यपि स्थलानि मूलग्रन्थे दृष्टव्यानि ।

नलकीर्ति कौमुदी अपूर्णाऽपि स्ववस्तुविन्यासशैल्या पाटवेन सम्पूर्ण नलचरित वर्णनं कुर्वत्सु काव्येषु परिगणिता । खण्डशः समुपलब्धाप्यस्या इति वृत्तं समवलोक्यविवेचयितुं शक्यते यदत्र काव्यकर्ता मौलिक नलचरितस्य कथा वस्तुनः प्रयोगं यथा सम्भवं सावधानतया चकार । तथापि यत्र तत्र काव्यवृत्त सम्पादनार्यैव परिवर्तनं, नवीनोद्भावनं कल्पनच व्यदधत् । संक्षेपेण नलकीर्तिकौमुदी नलकथा साहित्यस्य शृंखलायां महत्वपूर्णा वर्तते ।

## सहृदयानन्द काव्यम्

पंचदशसर्गेषूपनिबद्धं महाकवेः कृष्णानन्दस्य सहृदयानन्द काव्यं सम्पूर्ण नलचरितं वर्णयत्सु महाकाव्येष्वन्यतममस्ति । ग्रन्थस्यास्य प्रणेता महाकविः कृष्णानन्दः स्वीयसमय विषये न किमपि संकेतितवान् परं ग्रन्थस्यान्तिमेवपद्येन ज्ञायते कविः कपिंजल कुलोद्भव आसीत्—

---

१. नलकीर्ति कौमुदी सर्ग २ श्लोक ४१
२. वही सर्ग ४ श्लोक ८५

लक्ष्मीर्यावदलंकरोति हृदयं विष्णो नृसिंहाकृते-
र्यावद् विष्णुपदी च धूर्जटिजटाजूटान्तरे क्रीडतीं।
कृष्णानन्द कवेः कपिंजलकुलक्षीरोदशी तद्युते-
स्तावद् काव्यमिदं तनोतु कृतिनामन्तः प्रमोदोदयम्॥[1]

कपिंजलशब्दः कायस्थवाची। कविरयं सर्गान्ते पुष्पिकायां सान्धिविग्रहाधिकृतमहापात्र शब्देनात्मानं बोधयति, येन ज्ञायतेऽयं कस्यापि राज्ञोऽमात्य पदमलंकरोतिस्म। साहित्यदर्पणकारः विश्वनाथोऽपि सान्धिविग्रहिक शब्देनात्मानमुट्टंकयति। 'महापात्र' जातीयाः पुरुष विशेषाः साम्प्रतमपि उड़ीसा प्रान्ते जगन्नाथपुर्याः समीपस्थ प्रदेशे निवसन्ति। कविरपि तत्रस्थस्य कस्यापि जनपदस्य निवासी बभूव इति कल्प्यते।

यद्यपि मूलग्रन्थे कविनाऽन्यत्किमपि वृत्तं स्व समय, स्थान, कृतीत्यादि नाभिहितं तथापि साहित्य दर्पणे अष्टम परिच्छेदे प्रसाद गुणं निरूपयता तत्र भवता आचार्येण विश्वनाथेन-(शब्दास्तद्व्यंजका अर्थबोधकाः श्रुतिमात्रतः)[2] इति कारिकायाः उदाहरणे सहृदयानन्दस्य पद्यमेकं गृहीतम्—

"सूचीमुखेन सकृदेव कृतव्रणस्त्वं,
मुक्ताकलाप! लुठसि स्तनयो प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा,
स्वप्नेऽपि तां कथमहं न विलोकयामि॥[3]

द्वयोः काव्ययोः सहृदयानन्द नैषधयोः परिशीलने स्पष्टमेव परिज्ञायते यत् सहृदयानन्द काव्ये श्रीहर्षस्य छायात्वं कविनानुसृतम्। येन श्री हर्षादुत्तरवर्ती विश्वनाथाच्च पूर्ववर्ती कविरयं सिद्धयति अत एवास्य समयः त्रयोदश शताब्द्यां निश्चीयते। डा० एन० पी० उन्नि महाशयेनापि स्वीये ग्रन्थे तथ्यमिदं स्वीकृतम्—"It is easy to fix his time between Sriharṣa and Viśvanātha thus placing him at about १3th century.[4] सन्धि-

---

१. सहृदयानन्द-कृष्णानन्द सर्ग १५ श्लोक ६१
२. साहित्य दर्पण अष्टम परिच्छेद कारिका ८
३. सहृदयानन्द सर्ग ३ श्लोक ५२
४. Quoted from—Nala Episode in Sanskritic Literature by Dr. N. P. Unni,

विग्रहिक इत्यस्य चर्चा 'इण्डियन एण्टीक्वेरी नामके ग्रन्थेऽपि प्राप्यते[1] ।

अस्मादधिकं वस्तूपादानं न किंचिदपि ज्ञायते । कविः नैषधीय चरितस्य टीकां चक्र इति कैश्चिद् विद्वद्भिः भणितं परं तट्टीकानाप्यते । अतस्तस्याः विषये किमपि वक्तुं न क्षभते ।

महाकवि कृष्णानन्द विरचितेऽस्मिन्महाकाव्ये सम्पूर्ण नलचरितं स्वीयोदात्तय कल्पनाबलेन वर्णितम् । यद्यपि सहृदयानन्द काव्यस्य सुबहु समादरं काव्यजगत्यां नाभूत् तथापि नैषधस्य चमत्कारपूर्णा काव्यमयतां ख्यातिं च ज्ञात्वाऽपि कविः निरुत्साहितो न बभूव । ग्रन्थारम्भ एव स निजगाद—

**अत्रेतिवृत्ते रचितप्रबन्धे क्रुद्धो मुधामास्तु कविः पुराणः ।**
**न स्पर्धया व्योम्नि सहस्रधाम्नः खद्योतका स्वां द्युतिमातनोति ।।[2]**

प्रकृतकाव्यस्य प्रणयनं कविः कस्यापि प्रयोजन विशेषस्य कृते व्यदधदित्यनुमीयते । पण्डितस्य श्री हर्षस्य क्लिष्टभाषायामुपकल्पितानां भावनां ग्रन्थिमोचनं न सरलतया जनसामान्येन सम्भाव्यते अतः कविः कृष्णानन्दः सरलायां सुबोधायां भाषायां शैल्यां च सहजां स्वाभाविकतामाश्रित्य सम्पूर्ण नलचरितमुपावर्णयत् । यत्र नैषधकारः प्रत्येकस्मिन् प्रसंगे पूर्ण सर्गमेव न्ययोजयत् तत्र कृष्णानन्दः कथावस्तु संक्षिप्य काव्यस्येतिवृत्तं न शिथिलयति । मर्मवेदीनि'काव्यमयानि वर्णनानि नेतिवृत्तप्रवाहेऽवरोधं कल्पयन्ति, प्रत्युत् गतित्वरत्वमेव वर्धयन्ति । ग्रन्थ परिशीलनेन प्रतिभाति यत्कविस्तेषां स्थलविशेषानां वर्णनं परितत्याज यानि स्थलानि श्री हर्षेण व्याख्यातान्यासन् । उचितमेवैतत । नैषधस्य तत्स्थलानां वर्णनापेक्षायां अस्य तान्येव वर्णनानि कथंमुत्कर्षाधायकानि सम्भवन्ति । अतः महाकविना नूतनानि कानिचित् वर्णनानि परिकल्प्य तेष्वैव कवित्व वैभवं कल्पना सौष्ठवं च प्रदर्शि ।

सहृदयानन्द काव्यस्य कथावस्तु मौलिकं नलचरितमनुसरति । आद्योपान्तं घटनाक्रमचक्रं तथात्वं भजते । नलदमयन्त्योर्जन्य प्रसंगादारभ्य तयोर्विप्रलम्भानन्तरं पुनर्मिलनपर्यन्तमितिवृत्तं महाभारतवदेवास्ति । साम्य समीक्षण सौकर्यदृष्ट्या सहृदयानन्दस्य कथावस्तु वर्ण्यते ।

---

1. Indian Anti-Querry—15।1885
२. सहृदयानन्द सर्ग १ श्लोक ७

प्रथम सर्गे वीरसेनस्य परिचयानन्तरं नलजन्म वृत्तान्तम्, तस्य बालक्रीड़ा, शिक्षा खेटादिवर्णनं वर्तते। मृगया क्रम एव नलहंसयोर्मिलनं भवति। तत्र च हंसः व्यजिज्ञपत्-प्रजापतेः विमान बाहकोऽहं स्वर्गे तव कीर्तिमश्रोषम्। समये तवाभीष्टं साधयिष्यामीति निगद्य स उत्पतितवान्। द्वितीये सर्गे हंसाः पुनः समागत्य नलमश्रावयत् स्वर्गेलोके देवेन्द्रः काममपृच्छत्,—काधुना सर्वातिशायिनी सुन्दरी, तदा कामेनोक्तंदमयन्तीति। तृतीये सर्गे पुनः प्रकृतप्रसंगमेवातुसरन् हंसोऽवद्त्- तदा काम वचनं परीक्षितुं विदर्भगतेन मया सा दमयन्ती अदर्शि। सा तत्समये विवाहेच्छूनां राज्ञां चित्राण्यवलोकयन्ती प्रसन्ना आसीत्। तब (नलस्य) चित्रं निरीक्ष्य साक्रुष्टाऽधुना व्यथिता वर्तते। तया दत्तेयं रत्नमालिका मया नीता, प्रतिगृह्णन्तु भवन्तः। चतुर्थ सर्गे नलस्य विरह वर्णनम्। पंचम सर्गे स्वयंवरार्थे नलस्य प्रस्थानम्। मार्गे देवमिलनम्। देवैः तं दूत कर्मणि नियुज्य दमयन्ती सकाशे प्रेषणम्। दौत्यं निष्फलं परिज्ञाय देवाः स्वर्ग गतवन्तः। स्वयंवरे दमयन्ती नलं वृतवती। षष्ठे सर्गे नलः दमयन्तीमादाय स्वपुरीं निषधां प्रत्यावर्तते। सप्तमेसर्गे हंसः पुनः समागत्य राजधर्ममुपदिशति। ततः जलविहारस्य वर्णनमस्ति। अष्टमे सर्गे कलिः भण्डतापसवेषेण पुष्कर मुपगम्य-नलस्य विरोधार्थं प्रेरयति। द्यूत क्रीडा व्याजेन पुष्करः नलं विजित्य वने निष्कासयति। नवमेसर्गे राज्ञाः वनगमनं वर्तते। नलः पौन पुन्येन दमयन्तीं पितृगृहं गन्तुं प्रेरयथि परं सा कथमपि सहधर्मिणीत्वं न त्याज्य। दशमे सर्गे वने राजसुखं स्मरन्त्याः दमयन्त्याः विलाप उपवर्णितः। वनेऽपि तौ दृष्ट्वा कलिः द्वापरश्च स्वर्णच्छदयुक्तौ पक्षिणौ भूत्वा नलः समक्षं गच्छतः। पक्षि ग्रहण समुत्सुकौ तौ तदनुसरन्तौ विपरीतासुदिक्षु गन्तुं प्रवृत्तौ। वने दूरमध्वानमुल्लंघ्य मार्गपरिभ्रष्टौ तौ परस्परं वियुक्तावभूताम्। एकादश सर्गे नलः विरह वर्णनम्, प्रयासानन्तरमपि सदमयन्तीं वने नावाप्तवान्। दमयन्त्यपि वने इतस्ततः परिभ्रमन्ती गिरिदरी भ्रमेणाजगरमुखे प्राविशत्। भाग्येन तत्समये समागतेन व्याघसमूहेन सा रक्षिता। द्वादशे सर्गे मृतां तां मत्वोत्सृज्य किराता अगच्छन्। एतदनन्तरमेव कोऽपि तापसस्तत्रागत्य तामुपचारपूर्वकं स्वस्थां विधाय पतिमवाप्स्यसि इति चाश्वास्य गतवान्। दमयन्ती नलमन्वेषमाणा पथिकदलमेकमासाद्य गन्तुं प्रवृता। रात्रौ वनकरिणः तं जनसम्मर्दं भृंशयामासुः। कथमपि प्राणावशिष्टा सा चेदिराजस्य सुबाहोः गेहे न्यवसत्। समाचारं परिज्ञाय भीमस्तां

विदर्भे विनाय। नलान्वेषणार्थं च दूतान् प्राहिणोद्। त्रयोदशसर्गे दावानलं-दृष्ट्वा दमयन्त्याः मरणाशंकाकुलो राजा नलः कर्कोटकं नागं दृष्टवान्। मार्गे सहैव गच्छता तेन नागेन स दंशितः। विरूपाय तस्मै स नागः वस्त्रमेकं समर्प्यं वने ऽलीयत्। चतुर्दशे सर्गे नलस्यायोध्यासंप्राप्तिः वर्णिता। तत्र बाहुकनाम्ना स ऋतुपर्णस्यामात्यो बभूव। वर्षाकालवर्णनं चात्र वर्तते। भीमस्यैको दूतः बाहुकं सन्दिश्य भीमाय राज्ञे निवेदयति। पुनः एकः सारथिः नलं दमयन्त्याः कुशल वार्तां श्रावयति। पंचदशे सर्गे ऋतुपर्णस्य चरः व्यजिज्ञपत् यद्दमयन्ती नलान्वेषणे समर्था सती परश्वोऽग्नौ प्रवेक्ष्यति। ऋतुपर्णस्तत्र गन्तुमियेष। कालस्य न्यूनत्वात् मार्गस्य च दीर्घत्वात् चिन्तामापन्नः ऋतुपर्णः नलेन यदहमेकेनैवाह्ना कुण्डिननगरं प्रापयामि त्वामिति समाश्वस्तः। यथा समये स कुण्डिनपुर्यां समागत्य सर्पदत्तं वस्त्रं च परिधाय स्वरूपमवाप्य दमयन्तीं चिताप्रवेशात्पूर्वमेव रक्षति। एवं नायकनायिकयोः पुनर्मिलनं भवति! नलश्च पुष्करं द्यूते पराजित्य पुनः राज्य-मवाप्तवान्।

सहृदयानन्दस्य नल कथावस्तु परिशीलनानन्तरमवगम्यते यन्मौलिक नलचरि-तस्य कविः पूर्णतोऽनुकरणं चकार। वस्तुविन्यासक्रमोऽपि महाभारतीयं नल-चरितमनुसरति। आद्योपान्तं प्रयुक्त मितिवृत्तं घटना साम्ये प्रायशः भारतवदेव, नलवर्णनम्, नल हंसयोर्मैत्री, हंस द्वारा तं प्रति दमयन्त्याः समाकर्षणम्, नलदेव-दौत्य वृत्तम्, नलदमयन्त्योर्विवाहः, कलिद्वापर कृत विश्लेषणम्, अजगर वृत्तान्तम्, वने किरातैस्तस्याः परिरक्षणम्, तपस्विकृतोपचर्यादिः, कथमपि चेदिदेशे तस्याः पुनरवाप्तिः। भीमद्वारा तस्याः आनयनम्। नलान्वेषणार्थं दूतप्रेषणम्, नलस्य कर्कोटकमिलनवृत्तम्, तस्य ऋतुपर्णस्य राज्ये निवासः, चारेण तस्य विदर्भे संसू-नम् च नलस्य पुनरागमनम्। नलदमयन्त्योः पुनः संयोगः। नलस्य पुष्करं विजित्यराज्य प्राप्तिः, इत्येतानि वृत्तान्तानि महाभारतवदेव सहृदयानन्द काव्ये समुपलभ्यन्ते।

परं काव्यवृत्ते चमत्कृतिसम्पादनसमुत्सुकः कविः कथावस्तुनि नाट्य तत्वानां समावेशार्थे यत्र तत्र परिवर्तनं कृतवान्। महाकाव्यस्येतिवृत्ते यान्युपा-दानानि निश्चयेनापेक्षितानि भवन्ति तानि प्रकृत काव्य वस्तुनि संघटयितुं कविः प्रयत्नवान्। अथ च मौलिके नलचरिते वस्तुविन्यासे यत्र तत्र स्थलेस्वन्येषां कविवराणां दृष्टिर्नापतिता तान्येव स्थलानि कविः कल्पनाबलेन पर्यवर्तयत्।

वैषम्य सम्पादनार्थं समीक्षात्मकाध्ययनार्थं च क्रमेण तानि निर्दिश्यन्ते—

१. सहृदयानन्द काव्ये नलस्य जन्मवृत्तान्तं यद्वर्णितं तन्मूलनलचरिते न वर्तते ।

सहृदयानन्दे –

**दिशामधीशैः पुरहूतमुख्यै-**
**रपि प्रकामं स्पृहणीयलक्ष्मीः ।**
**ततः क्षितीन्द्रास्तनयोऽधिजज्ञे,**
**क्षीराम्बुराशेरिव कल्पवृक्षः ।।**[1]

२. महाभारते नायकस्य युवावस्था वर्णनादेव नलचरितं प्रारभ्यते—

**आसीद्राजा नलो नाम वीरसेन सुतो बली ।**
**उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ।।**
**अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।**
**उपर्युपरि सर्वेषामादित्य इव तेजसा ।।**
**ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।**
**अक्षप्रियः सत्यवादी महानक्षौहिणी पतिः ।।**
**ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।**
**रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनु स्वयम् ।।**[2]

सहृदयानन्दे पुनः नलस्य नामकरणं, बाल्यावस्थावर्णनं तथा आखेटादि वृत्तं समुपनिबद्धम् । नलस्य नामकरण विषये महाकविः कृष्णानन्दः रुचिरामेकां युक्तिमकल्पयत्—

**लब्धार्थ कामार्जन कोविदत्व-**
**मयं नलीयते कदापि पापे ।**
**इतीव निश्चित्य गुरुर्निमित्तै-**
**श्चकार नाम्ना नलमात्मजं तम् ।।**[3]

३. महाभारते नलः स्वक्रीडोपवने हंसं ददर्श—

**अशक्नुवन्नलः कामं तदा धारयितु हृदा ।**
**अन्तःपुर समीपस्थे वन आस्ते रहोगतः ।।**

---

१. सहृदयानन्द १।१६

२. म० भा० व० प० अ० ५० श्लोक १ से ४

३. सहृदयानन्द सर्ग १ श्लोक २४

स ददर्श तदा हंसान् ... ........।[1]

परं प्रकृत काव्ये नलः मृगया प्रकरणे इतस्ततः पर्यटन् कचित् सरोवरं प्राप। तत्रैव स हंसमवालोकयत्—

अलक्षितः क्वापि जवातिरेका-
च्चमूचरैः सान्द्रमहीरुहेषु।
भ्रमन्वनान्तेषु मृगानुसारी-
पद्माकरं केचिदसौ ददर्श॥
किंचिन्निपीतश्लमवारिबिन्दुः-
सरोज संसर्गवतानिलेन।
स तस्यतीरे सुखसुप्तहंसे
नरेन्द्र सूनुः सुचिरं चचार॥
मुखे प्रियायाः प्रणयानुबन्धा-
द्वालं मृणालांकुरमपर्यन्तम्।
सरोजिनी पत्र निषण्णमेकं-
हिरण्यमयं हंसमसौ ददर्श॥[2]

इहानुमीयते मृगयावृत्तं कविः नलचम्पूः काव्यानुसारं तथा च सरोवर तटे हंस चारणं नैषधादुद्धृतवान् इति।

४. मौलिक नलचरितस्य हंसो न किंचिदपि परिचयं प्रददाति। स तु ते प्रियं करिष्यामि, मां मुंचेति प्रार्थयति—

ततोऽन्तरिक्षगोवाचं व्याजहार तदा नलम्।
न हन्तव्योऽस्मि ते राजन् करिष्यामि हि ते प्रियम्॥[3]

परं प्रकृत ग्रन्थे हंसः स्वपरिचयं प्रजापतेर्ब्रह्मणः विमान वाहकत्वेन प्रददाति-

त्रैलोक्यभर्तुः कमलासनस्य, विमानधुर्याधिपतित्व लाभात्।
सयक्षरक्षः सुरकिन्नरेषु, लोकेषु पूज्या मम तात पादाः॥
स्वकर्म मां शिक्षयता विमाने, पित्रा नियुक्तं क्षणमप्यवेक्ष्य।
निजासनाम्भोरुह केसरेर्मे, श्रमापनोदं कुरुते विरंचिः॥[4]

---

१. म० भा० व० प० अ० ५० श्लोक १७-१८

२. सहृदयानन्द सर्ग २ श्लोक

३. म० भा० व० प० अ० ५० श्लोक १९

४. सहृदयानन्द सर्ग १ श्लोक ६५-६६

५. प्रसंगेऽस्मिन् कविरेकमन्यदपि कल्पितं वृत्तं समायोजयत् नलः यदा हंसं ग्रहीतुं प्रयतते, तदादृश्य वनदेवताभिरभिहितो यदयं हंसस्तवाभिलाषं पूरयिष्यतीति—

**तं धारयिष्यन्न त्रिपन्नमेव, सम्मोहनास्त्रं स समाददे च।**
**लताश्रितानां वनदेवतानां शुश्राव, वाक्यं च मनोज्ञमेतत् ॥**
**चापादपाकृष्य नरेन्द्रसूनो, शिलीमुखं तूणमुखे निधेहि।**
**संपादयिष्यत्ययमीप्सितं यत्तयानुरूपं तनुरूपलक्ष्म्याः ॥**[1]

कल्प्यते यदिदमितिवृत्तं नल चम्प्वां त्रिविक्रमेणाकाशवाण्या समाश्रावितं हंसमोचननिवेदनमिवात्रापि कविना संयोजितमिति।

भारते नैतद्वृत्तान्तमाप्यते।

६. महाभारते हंसः प्रथम दर्शन प्रसंग एव दमयन्त्याः समाकर्षणार्थं गच्छति। परमत्र प्रथम हंस समागमें दमयन्त्याश्चर्चा नाभूत्। हंसं प्रियं तव विधास्यामीति प्रतिज्ञायोत्पतितः—

**स्वस्त्यस्तु ते संप्रति साधयामि, निवेदितं यद्वनदेवताभिः।**
**संतर्पयिष्यामि दृशौ वयस्य भूयस्तवालोक रसायनेन ॥**[2]

७ सहृदयानन्दे वीरसेनस्य तृतीयाश्रमगृहणमुपकल्पितम्—

**अद्यप्रभृत्येव नरेन्द्र लक्ष्मीर्मयानुशिष्टास्तु वशंवदा ते।**
**श्रेयस्तपः साधनमेव राज्ञां ज्ञातानुभावेषु तनूद्भवेषु ॥**
**तदेष रक्षाविधये प्रजानां नक्तं दिवं जाग्रदवाप्तखेदः।**
**धुरं धरित्र्यास्त्वयि संनिवेश्य चिराय विश्राम्यतु वीरसेनः ॥**
**निवार्यमाणोऽपि मुहुः प्रणम्य नलेन बद्धांजलिसम्पुटेन।**
**निवेश्य तस्मिन्नवनीन्द्र लक्ष्मीमुपाददे लक्ष्यतपोधनानाम् ॥**[3]

महाभारते वर्णनमिदं नाप्यते।

८. द्वितीय सर्गस्तु पूर्णतः कविकल्पित एव किन्त्वत्रत्यं वृत्तं कवेर्मौलिकं कल्पनम्। दमयन्त्याः सौन्दर्य वर्णनार्थमस्य सृष्टिः। हंसः पुनः समागत्य नल समक्षं देवलोक वार्तां प्रस्तौति यत्र देवेन्द्रः मन्मथं पर्यपृच्छत् काधुना त्रैलोक्य

---

१. सहृदयानन्द सर्ग १ श्लोक ६१-६२

२. वही, श्लोक ७७

३. वही, श्लोक ८५-८७

सुन्दरी । कामेन दमयन्त्याः नाम गृहीतम् ।

**महाभारते नैतद्वृत्तमुपकल्पितम् ।**

९. दमयन्ती वर्णन प्रसंगे कविः काव्यवृत्त सम्पादनायैव कथावस्तु परिवर्त्य प्रार्युक्त् । भारते हंसो नल सकाशादुड्डीय विदर्भानगमत्—

**ते तु हंसाः समुत्पत्य विदर्भानगमस्ततः ।।**[1]

परं काव्येऽस्मिन् हंसः कामदेव मुखात्तस्याः सौन्दर्यमाकर्ण्य विदर्भे तां दृष्ट्वा नलं सर्वं वृत्तान्तं न्यवेदयत् यद्दमयन्ती तव चित्रं निरीक्ष्याकृष्टा जाताऽस्ति । हंसस्तदा दमयन्तीमवोचत्—

**त्वं माधवी मधुरसौ जगदेकवीर-**
**स्त्वं कौमुदी कुमुदवन्धुरयं नरेन्द्रः ।**
**आस्तां निरस्त सवृशान्तरयोश्चिराय-**
**संबन्ध एष युवयोरभिन्दनीयः ।।**[2]

श्लोकेस्मिन् महाभारतस्य निम्नांकितस्य श्लोकस्य छायात्वमपि परिलक्ष्यते-

**त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।**
**विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत ।।**[3]

१०. सहृदयानन्द काव्ये निषधान् प्रस्थिताय हंसाय दमयन्ती प्रतीकार्थं मौक्तिकमालां समर्पयति—

**आश्वास्य तामिति वचोभिरहं विदक्षु-**
**स्त्वां यावदम्बर पथं न समुत्पतामि ।**
**तावत्तया स्तनतटादपकृष्य हारः ।**
**स्वेनैव पाणिकमलेन समर्पितोऽयम् ।।**[4]

प्रसंगोऽयं नलचम्पूरिति काव्यादुदाहृत इति । वर्णनमिदं मौलिकेन नलचरितेन सह न साम्यमावहति ।

११. महाभारते नलस्य मदनव्यथा कुत्रापि सविस्तरं नोद्घाटिता दमयन्ती सकाशात्प्रतिनिवृत्य हंसस्तस्याः वृत्तान्तं नलं निवेदयामास इति तूपकल्पितं परं पुनरागत्य हंसः नलेन सह कां कथं च वार्तां चकारेति नोपन्यस्तम्—

---

१. म० भा० व० प० अ० ५० श्लो० २१

२. सहृदयानन्द सर्ग ३, श्लोक ४७

३. म० भा० व० प० अ० ५० श्लोक २९

४. सहृदयानन्द सर्ग ३, श्लोक ४८

तथेत्युक्त्वाण्डजः कन्यां वैदर्भस्य विशांपते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥[1]

परं सहृदयानन्दे हंसेन दमयन्त्याः मुक्ताकलापं सम्प्राप्य कामाग्निना ज्वलन्निव नलस्तां स्मरति । अन्ते हंसो नलं समाश्वासयति—

कुवलयदृशि तस्यामेष भावानुबन्ध-
स्तव निषधनरेन्द्र प्रीतये कस्य न स्यात् ।
भवति हि मधुलक्ष्म्याः साहचर्यं प्रपन्नः-
समधिक मभिनन्धश्चन्दनाद्रेः समीरः ॥[2]

धैर्यं निधाय मनसि प्रतिपालयेदं-
क्ष्मावल्लभ क्षणमणि क्षणदावसानम् ।
प्रत्यूष एव भवतोऽभिमतार्थ सिद्धे-
र्द्वारं भविष्यति विसंघटितापिधानम् ॥[3]

१२. महाभारते दमयन्त्याः प्रेमानुरागं नलं प्रतिनिवेद्य निषधायां पुनरावर्तितस्य हंसस्य कार्यपर्यवसानं भवति । ततः एव स प्रतिनिवर्तते ।

इह तु स नलमाश्वास्य पुनः दमयन्त्यै तस्य कामदशां वर्णनार्थं प्रतिगच्छति—

दशां तवेमां विनिवेद्य भैमीमाश्वासयिष्यामि निकामखिन्नाम् ।
श्रुतोऽपि खेदं शिथिलीकरोति प्रियानुरागः प्रमदाजनस्य ॥
तदेष गच्छामि नराधिनाथ मुहूर्तमात्रेण पुरीं बिदर्भान् ।
विलोकयिष्यामि दिनैः कियद्भिर्भैमीसनाथस्य मुखाम्बुजं ते ।[4]

१३. महाभारते नारदः दमयन्ती स्वयंवरस्य वार्तां स्वर्गे विनाय । देवास्तदनुसृत्य स्वयंवरे सम्मिलितुं गच्छन्तः नलमवलोक्य तं दौत्ये नियोजयन्ति । नलः सर्वं यथा ज्ञापितं कार्यमकरोत् । ततः देवाः स्वयंवरे नलाकृतिं संधार्य प्राविशन्—

ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान् पंच तुल्याकृतीनिव ॥

---

१. म० भा० व० प० अ० ५० श्लो० ३१

२. सहृदयानन्द सर्ग ४ श्लोक ४३

३. वही, श्लोक ४४

४. सहृदयानन्द सर्ग ५, श्लोक १६-१७

**तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।**
**संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ।।**[1]

प्रायशः सर्वैरेव कविवर्य्यैरस्मिन् पंचनली प्रसंगे स्वकवित्व पाण्डित्य प्रतिभादीनां प्रदर्शनमकारि । श्रीहर्षादेः तत्प्रसंगस्तु सर्वानतिशय्य विराजते । सम्भवतः बहुधा सुबहुशः वर्णनत्वात् महाकविः कृष्णानन्दः पंचनली वर्णनं नाकरोत् ।

सहृदयानन्दे नलं दूत कार्ये नियोज्य अभीष्टस्य निष्फलत्वं च परिज्ञाय देवाः स्वर्गं प्रति निवृत्ताः श्लोक द्वयेनैव—

**नलः सखेदोऽपि गिरं सुराणां, सत्वातिरेकाद्विदधे तथैव ।**
**अमुष्य यत्नेन विदर्भजा तु, सा निश्चयात् वारयितुं नशेके ।।**
**सुरास्तु तां निश्चित चित्तवृत्तिं, विशुद्धवृत्तं निषधेश्वरं च ।**
**वरैरुभौ प्रत्यभिनन्द्य भूयो, दिवं ययुर्म्लानमुख प्रकाशाः ।।**[2]

१४. भीमः स्वयंवरात्पूर्वं नलदमयन्त्योः परस्परानुरागं ज्ञातवानिति महाभारतेनोपवर्णितम् सहृदयानन्द काव्ये पुनः कविः इत्थं व्याजहार—

**अथात्मजां नैषधसक्तचित्तां, निशम्य शश्वन्मुदितोऽपि भीमः ।**
**दाक्षिण्यमात्रेण नरेश्वराणां, स्वयंवरं वर्तयितुं शशास ।।**[3]

अनुमानतो वृत्तमिदं कथा साहित्ये प्रतिपादितस्य नल कथा वस्तुनः प्रति गृहीतं यतो हि कथासरित्सागरे कथितं—

**भीमेनापि विचित्य क्ष्मां ददृशे तेन राजसु ।**
**न नलादपरो राजा तुल्यः स्वदुहितुः पतिः ।**[4]

१५. भारते विवाहानन्तरं नलदमयन्त्योर्निषधदेशे समागमनस्य विषये न किंचिदप्युक्तम् । परं काव्य वृत्त सम्पादनाय प्रत्येकेन महाकविना स्वनगरे प्रति निवृत्तयोः नायकनायिकयोः दर्शनार्थमागतानां पुरस्त्रीणां सम्भ्रम विभ्रमाश्चित्रिताः । प्रकृतकाव्येऽपि एवं वर्णनं यथा—

---

१. म० भा० व० प० अ० ५४, श्लो० १०-११

२. सहृदयानन्द सर्ग ५, श्लोक ४७-४८

३. सहृदयानन्द-सर्ग ५ श्लोक ४९

४. कथासरित्सागर-दृष्टव्य शोध प्रबन्ध षष्ठ अध्याय

बधूदृशौ रंजयितुं समुत्सुका, निवेश्य कालाँजनमंगुलीमुखे ।
त्वरावशान्तः परिलिप्य गण्डयोर्बहिर्गता कापि जनानहासयत् ॥[१]

१६. सहृदयानन्दे स्वयंवरानन्तरं हंसः पुनरागत्य नलं राजधर्ममुपदिशति—

त्वं बृहस्पतिरिवापरः सखे नीतितत्त्वविदुषाँ पुरस्सरः ।
सौहृदं तु मुखरीकरोति मां तेन किंचिदनुशास्मि ते हितम् ॥[२]

महाभारते नैतद्वर्णनमाप्यते ।

१७. महाभारते कलिः वृषरूपेण पुष्कर समीपमागत्य द्यूते नलं पराजयितुं प्रैरयत् । तद्व्याजेनैवद्यूतक्रीड़ा संजाता—

एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषोभूत्वा गवां पुष्करमभ्ययात् ॥
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद् भ्राता वृषेणेति मुहुर्मुहुः ॥[३]

परं सहृदयानन्द काव्ये कलिरेकस्य तपस्विनः वेषं संधार्य पुष्करं प्रैरयत्—

सहायं द्वापरं कृत्वा कलिस्तापसवेषधृक् ।
भ्रातरं निषधेन्द्रस्य प्रपेदे पुष्करं नृपम् ॥[४]

१८. महाभारते नलदमयन्त्यौ वने दुःखमनुभवतः । तत्र क्षुत्क्षामेन नलेन पक्षिग्रहणार्थं स्वोत्तरीयकं प्रक्षिप्तम् । खगास्ते वासांस्यादायोत्पतन्—

उत्पतन्तः खगास्तेस्तु वाक्यमाहुस्तदा नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः स वाससि गते त्वयि ॥[५]

प्रकृत काव्ये पुनः नलदमयन्त्योर्विश्लेषार्थं कविरमुमेव प्रसंगं परिवृत्य प्रायुक्तं—"कलिद्वापरौ स्वर्णपक्षयुक्तौ खगौ भूत्वा तयोः समक्षमागतवन्तौ । स्वर्णपक्षिग्रहणसमुत्सुकौ तौ कलिद्वापराभ्यां विभिन्नासु दिक्षु गहनं वनान्तरे

---

१. सहृदयानन्द-सर्ग ६ श्लोक ३३
२. वही, सर्ग ७ श्लोक ५
३. म० भा० व० प० अ० ५६ श्लो० ६-७
४. सहृदयानन्द सर्ग ८ श्लोक ५
५. म० भा० व० प० अ० ५८ श्लो० १४-१५

प्रापितौ । सुदूरं यावत् गत्वा तौ परस्परं वियुक्तावभूताम् । निर्जनेऽरण्ये न कथमपि परस्परान्वेषणे सक्षमौ जातौ ।" अनेनवृत्त परिवर्तनेन कविः आपाततोऽदृष्टवशाच्च द्वयोर्वियोगं प्रदर्श्य नायकस्य नलस्यौदात्यं रक्षति ।

१९. महाभारते दमयन्ती वने एकेनाजगरेण ग्रस्ता सती विलपन्ती व्याधेन परित्राता । परं तयाकृष्टचित्तो व्याधो यदा कामातुरो भूत्तदा दमयन्ती शापात्तं भस्मीचकार इति वर्णितम् ।[1]

परमिह खलु भैमी तमजगरमुखं गिरिगुहामुखं मत्वा स्वयं प्रविशति—

**विगलद्गरलान्धकारितं, पवमान ग्रहणाय जृम्भितम् ।**
**अवनीधरकन्दरभ्रमा दमयन्ती प्रविवेश तन्मुखम् ।।**[2]

ततः किरातानां बाणैः विद्धः कोऽपि मृगस्तन्मुखं विवेश । तं जिघृक्षवः किराताः काकोदरं तं परशुभिः कर्तित्वा दमयन्तीमरक्षयन् । परं मृतां तां मत्वा तत्रैवोत्सृज्य गतवन्तः ।

२०. महाभारते तपस्विभिः सा समाश्वस्ता ।[3] सहृदयानन्दे पुनः तापसः कोऽपि तामुपचर्यया स्वस्थां विधाय आशिषं च प्रयुज्य गत्वान् ।[4]

२१. महाभारते तापसाश्रमान्निर्गता भैमी वने सार्थवाहमवालोकयत् । तेन सह सा चेदिदेशं गन्तुं प्रवृत्ताभवत्, परं रात्रौ हिंसकाः वनकरिणः सार्थ समूहं परिमर्दितवन्तः, इति विस्तरेण प्रतिपादितम् ।[5]

सहृदयानन्दे तु सर्वं वर्णितं परं सार्थ वहानां नामोल्लेखनं विना पथिक दल शब्देन कविस्तान् समुद्बोधयत्—

**इत्थं पथिक कुलं प्रमथ्य यूथे,**
**नागानां गतवति ये हतावशिष्टाः ।**
**प्रातस्ते विपदि तथा कृतोपकारां,**
**वैदर्भी प्रणतिभिरर्चयांबभूव ।।**[6]

---

१. वही, श्लोक २०-३८
२. सहृदयानन्द सर्ग ११ श्लोक ५७
३. म० भा० व० प० अ० ६१ श्लो० ५७-९१
४. सहृदयानन्द सर्ग १२ श्लोक ५-२६
५. म० भा० व० प० अ० ६१, श्लोक १०६-१२५, एववं अ० ६२, श्लोक १-१०
६. सहृदयानन्द-सर्ग १२ श्लोक ५३

२२. भारते बनवासानन्तरं चेदिदेशे दमयन्तीं राजमाता स्वगेहे निवासं दत्तवती, ततः सुदेव नामकेन ब्राह्मणेन सा परिज्ञाता । ततः सः स्वयं विदर्भान-यासीदिति वर्णितम् ।[1]

सहृदयानन्दे सुदेव वृत्तान्तं विलुप्यात्र प्रसंगे संक्षेपणं समाललम्बे । कथमपि चेदिराजमातुर्गृहे वसन्तीं तामभिज्ञाय भीमस्तां स्वदेशमनैषीत्—

**अथ चरैर्विनिवेदित लक्षणां, विरह वेदनया विधुरां सुताम् ।**
**द्रुतमुपेत्य विदर्भमहीपतिर्गमयतिस्म निकेतनमात्मनः ।।**[2]

२३. महाभारते नलः ऋतुपर्णस्याश्वशालायां बाहुक नाम्ना परिज्ञातः सूद सारथ्य कर्मणि व्यापृतोऽभूदिति—

परं सहृदयानन्दे कर्कोटक वृत्तान्तानन्तरं शनैः शनैः नायकस्योत्कर्षं प्रकट-यितुकामः कविरवर्णयत् यन्नलः ऋतुपर्णस्य देशेऽमात्यो बभूवेति—

**स मन्त्रितां मन्त्रविनिश्चयेषु,**
**क्रीडारहस्येषु वयस्य भावम् ।**
**गजाश्वशास्त्रेषु विनेतृतां च,**
**जगाम तिग्मांशुकुलध्वजस्य ।।**[3]

२३. भारते पर्णाद नामकेन विप्रेण बाहुकत्वेन ज्ञायमानस्य नलस्य सूचना दमयन्त्यै प्रदत्ता । परं प्रकृत काव्ये तस्य नाम नोट्टंकितम् ।

२४. भारते नलः दमयन्त्याः वृत्तं पुनर्मिलनानन्तरमेव ज्ञातवान् । परमिह अयोध्यामागतेन केनापि सारथिना तद् वृशान्तं नलायाश्रावि ।

२५. नलचरितस्य पटाक्षेपदृश्यात्पूर्वस्मिन् वृत्ते कविः नाटकीयं परिवर्तनं व्यदधत् । महाभारते यथा पुनः स्वयंवरायोजनं, ऋतुपर्णनलयोः विदर्भगमनं तत्र बाहुकस्य दमयन्ती द्वारा विविध परीक्षणं ततश्च तयोर्मिलनं वर्णितं न तथात्र । इह तु ऋतुपर्णस्यैव दूतः कुण्डिनपुर्याः समाचारं श्रावयति—

**श्रुतं त्वया नाथ यथागतः पुरात्पुरा वनं क्वापि नलो न लक्षितः ।**
**अमुष्य पत्नी तु विदर्भ नन्दिनी यदृच्छया प्राप पितुर्निकेतनम् ।।**

---

१. म० भा० व० प० अ० ६१ श्लोक १८-४३, अ० ६५ श्लोक १-३३, अ० ६६ श्लोक १-२२

२. सहृदयानन्द सर्ग १२ श्लोक ५६

३. सहृदयानन्द सर्ग१४ श्लोक १४

मुहुर्मुहुर्दु सहतामुपेयुषा चिराय शोकेन हता तपस्विनी।
भवान्तरेऽपि प्रियदर्शनाशया जुहूषतीयंज्वलने निजं वपुः॥
तपस्विना केनचिर्दापितं वरं प्रतीक्ष्य निन्ये दिवसान्यूमन्यपि।
परेद्युरेषां गमयिष्यति ध्रुवं निजां तनुमिन्धनतां हविर्भुजः॥[1]

इत्थं दमयन्त्याः चिता प्रवेशननिश्चयं परिज्ञायोत्कण्ठितः ऋतुपर्णस्तत्र गन्तुमियेष। बाहुकेन स शीघ्रतया तत्र प्रापितः। मार्गे तयोः अश्वाक्ष हृदय विद्ययोरादानप्रदानं नोपवर्णितं यद्यपि तस्य चर्चा कृता—

स बाहुकं स्यन्दन वाहने तथा विलोक्य लोकोत्तर पौरुषं नृपः।
तमक्षलीला हृदयं व्यचिन्तयत्तवः प्रपेदेऽश्वरयस्य वेदिताम्॥
ततोऽक्षलीला हृदयं परीक्षितुं यदेव चक्रे··· ··· ॥[2]

कथमपि अयोध्यां तौ सम्प्राप्तौ। ततश्च संक्षेपतया केशिनी द्वारा नलस्य परीक्षां कृत्वाऽपि यदा वैरुप्यं प्रति शंकाकुला जाता दमयन्ती तदा सा मरणाय एव मतिं दधे—

अलं बिलम्बेन निशावसीयते,
हुताशनं दीपय दीपयेन्धनैः।
नलोपलाभाय भवान्तरेऽपि मे,
भवन्तु भृत्या सखि तस्य हेतयः॥[3]

चितायां प्रज्वलितायां सत्यामकस्मादेवाकाशवाण्या दैवैः कथितम्—

अलं नलप्रेयसि साहसेन ते,
सुदुष्करेणाशुविनाशकारिणा।
अनन्तरेऽस्मिन् क्षण एव ते प्रियः॥
प्रहीणशोकां भवतीं करिष्यति॥[4]

देववाणीं श्रुत्वा दमयन्ती स्तब्धा बभूव। तदनन्तर एव सर्पदत्तं वस्त्रं परिधाय नलस्तत्रोपस्थितः—

---

१. वही, श्लोक ४-६
२. सहृदयानन्द सर्ग १५ श्लोक १८-१९
३. वही, श्लोक ४१
४. वही, श्लोक ४८

**इदं निशम्य त्रिदशैरुदीरितं,**

**क्षणं बभूव स्तिमितेव भीमजा ।**

**पिनद्धनागेन्द्र निवेदिताम्बरः,**

**स्वरूपतः प्रादुरभूच्च नैषधः ॥**[1]

ततो नलदमयन्त्योर्पुनर्मिलनं समभूत । पुनः पतिमवाप्य प्रावृषि नूतन जलधाराभिषेकेण निदाघप्लुष्टा महीव आनन्दिता बभूव । अत्र कविः महाभारतीयामेवोपमां प्रायुंक्त । महाभारते —

**दमयन्त्यपि भर्तारमवाप्याप्यायिता भृशम् ।**

**अर्धसंजात सस्येव तोयं प्राप्य वसुन्धरा ॥**[2]

**ततो निदाघप्लवितेव मेदिनी,**

**नवाम्बु वाहैर्विहिताभिषेचना ।**

**प्रशान्त संतापमर रुमध्यमा,**

**प्रमोद जालं विदधे विदर्भजा ॥**[3]

अनेन साम्यवैषम्य समीक्षणेन परिज्ञातमेव यत्सहृदयानन्द काव्यं पूर्णतः नलचरितामाधारीकृत्यादितः फलागमपर्यन्तं पूर्वोक्तरनलचरितं कथावस्तु दृष्ट्या सुसम्यक् समभिहितवान् । वर्णिते नलचरिते यत्र कुत्र चिद् परिवर्तनं दृश्यते तत्सर्वं काव्यवस्तु सौन्दर्यविधानार्थमेव क्लृप्तं न तु पाण्डित्य प्रदर्शन दृष्ट्या । नास्तीह खलु यद्यपि श्रीहर्षस्य शब्दभावालंकारादिभारभारिता क्लिष्ट कल्पना गौरवान्विता विद्वत्तोषिणी शैली तथापि नलचरितस्य सहजया सरलया भावप्रवणया च कथावस्तुशैल्या नलकथावर्णनत्वेनात्रापि इतिवृत्तस्य माधुर्यं सौन्दर्यं, रसपरिपाकश्च सामाजिकान्तःकरणे मोदाय क्षमते ।

सहृदयानन्द काव्ये कविः कालिदासं बहुषु स्थलेषु समनुसस्रे । कालिदासस्य शैलीव सहृदयानन्दस्यापि शैली प्रवहति । वस्तुत इतिवृत्त दृष्ट्या काव्यमिदमतिरिच्य नान्यत्किमपि काव्यं पूर्णसाफल्यं भजते । वैदर्भीरीत्यामुपनिबद्धोऽयं ग्रन्थः नलचरितसाहित्यश्रियं वर्द्धयतीति निःसन्दिग्धम् ।

---

१. वही, श्लोक ५२

२. म० भा० व० प० अ० ७५ श्लोक २६

३. सहृदयानन्द सर्ग १५ श्लोक ५५

नैषधं नलचम्पूः, नलकीर्तिकौमुदी, सहृदयानन्द इति काव्य चतुष्टयस्य समीक्षात्मकाध्ययनेनेदं ज्ञायते यन्नलचरितं संस्कृत वाङ्मये पश्चात्तनैः कवितल्लजैः पौनः पुन्येन प्रशंसितं प्रयोजितं च । एकतः श्रीहर्षस्य नैषधमहाकाव्यं पूर्वनलचरितं महाकाव्येषु सर्वोत्तमस्थाने स्थापयति द्वितीयतस्तु महाकवेः कृष्णानन्दनस्य सहृदयानन्दः उत्तर नलचरितं काव्यकोटौ समाख्यापयति । वैदिके वाङ्मये यन्नलचरितस्य सूक्ष्मं बीजं नलोनैषधः इतिरूपे आसीत् तदैव काव्येषु स्वशाखिशाखप्रशाखप्रभेदैः नूतनकिसलयकलिका कुसुमादि वैभवबलेन सुसमृद्धीभूय विराजत इति । इदमपि सिद्धं यन्नलचरितस्यान्तः प्रसविनी कल्याणमतिः आवैदिक वाङ्मयात् इदानीं यावत् संस्कृत काव्य साम्राज्ये नैरन्तर्येण प्रवाहिता भवति । ऐतिहासिके पौराणिके, जैनादिवाङमये, कथासाहित्ये, ततश्च काव्य जगत्यपि नलचरितस्यामन्दानन्दमन्दाकिनी अनवरततया प्रवहति ।

त्रयोदश शताब्द्याः पूर्वं तथा च तस्याः पश्चात्तने कालेऽपि नैके कवयो नलचरितेनाकृष्टान्तः करणाः नलचरितमुपवर्ण्य स्वोक्तिवैदग्ध्यं सहृदयहृदयनिकषे संपरीक्षितुं कृतप्रयत्नाः वभूवुरित्यग्रिमेऽध्याये वक्ष्यामः ।

## अष्टमोऽध्यायः

निःसन्दिग्धतया नलचरितं वैदिक कालादारभ्य वर्तमान कालं यावत् स्वीयेन सहजेन जिजीवषावलेन पौराणिकानां, कथा संग्रह कर्तृणां, काव्य प्रणेतृणां, नाटककाराणां च मनसि संनिविश्य तेषां कविशेमुषीप्रयोगद्वारा सुरभारत्या अक्षय्यं कोशं शताधिकैः ग्रन्थैरपूरयत् । वस्तुतो हि चरितमिदं तादृशं सौन्दर्यसीमानं स्पृशति यत् सार्वदेशीयं सार्वजातीयं सार्वकालिकञ्चास्ति । जीवनेऽनुराग संयोगवियोग दैवदुर्विपाकेर्ष्याद्वेषादयः—उत्तमाधमाः भावाः सर्वैः सर्वत्रानुभूयन्ते अतस्तेषां मध्ये कथं वर्तितव्यं मानवेन इति प्रतिपादयिता नल चरितेन यादृशं वृत्तं चरित नायकस्य नलस्य नायिकायाः दमयन्त्याश्च प्रत्युपवर्णितं तत्प्रत्येकेन जनेन जीवने पौनः पुन्येन समनुभूयते दृश्यते च । इदमेव कारणं यन्नलचरितं न केवलं भारते वर्षे प्रत्युत् विदेशेष्वपि सहृदयानावर्जयति । चरितस्यास्य भावाविलाः प्रसंगाः कं नोद्भावयन्ति । नलचरितं प्रपठ्य मुग्धानलोऽपि दमयन्त्याः विरहव्यथामवलोक्याद्रवत् । प्रकृत चरितस्य विषये तस्य टिप्पणं सुसमीचीनम्—

"There are also several nerrative Episodes—one of them oldest and most beautiful of these is the story of Nala and Damyanti, two lovers who after enjoying several years of happy married life became separated by misfortune, but after many trying adventures are reunited in the and. The story contains numoures fine and petratic passages. The emiciations and grief stricken plignt of Damyanti, as she wanders alone in the forest is described as follows, She appears—

Like the young moon slender crescent
Obscured by black clouds in the sky;
Like the lotus flower uprouted
All parched and withered by the sun,

Like the pallid night when Rahu
Has swalloed up the darkened moon.[1]

नलचरितस्य सुप्रसिद्ध व्याख्याकारेण डा० एन० पी० उन्नि महाशयेन यदालोचितं तत्सत्यम्—

The theme captivated the Indian mind so much so that poets and dramatists adopted the story again and again in their composition. Now there is a vast literature on the them in toe several regional languages .. Among the various forms of literature Kavya and Nataka take the premier position.

We meet with a wide varity of compositions on the theme from a very early period down to the present day. Poets and dramatists all over India have shown a predilection to the theme since it contains all the trials and tribulations of human dramalove, intrigne, separation and excstement ",[२]

पूर्वेष्वध्यायेषु सविस्तरं नलचरितस्य इतिहास पुराण काव्यादिषु यत्स्वरूपं प्रतिपादितं तत्सर्वं समीक्षितम् । वर्णितस्य काव्यचतुष्टयस्य समीक्षकात्मकाध्ययनानन्तरं संस्कृत वाङ्मये नलचरितमाधारीकृत्य रचितानामन्येषां काव्यानां, नाटकानां च संक्षेपेण वर्णनं प्रस्तूयते येन नलचरितोपरि विरचितस्य साहित्यस्य किंचिद् दिग्दर्शनं सम्भवेत्—

**१. नलोदय:**

दशमशताव्द्यां समुत्पन्नेन केरलप्रदेशीयेन कविना वासुदेवेन यमककाव्यस्य रूपेऽस्मिन् ग्रन्थे आश्वासचतुष्टयेषु नलचरितमुपनिबद्धम् । आर्याछन्दसि सप्तदशाधिक शतद्वयेषु पद्येषु विभिन्नभावालंकारै: नल कथा आख्याता । काव्य काठिन्येन विदुषां मनोमोदायैवास्य ग्रन्थस्य सुप्रसिद्धि: । नात्र कवे: प्रयोजनं कथावस्तु वर्णनमात्रमपितु स्वबुद्धि वैशद्य प्रदर्शनम् । पठनीयस्यास्य काव्यस्योपरि नैके टीकाकारा: व्याख्यामपि चक्रु: ।

---

1, A. A. Mac Donell-Indias past-page 91 & 92 para-II & I, 1956

2. Dr. N, p. Unni, Nala EPisode in Sanskritic Literature—page-22

**२. नलायन महाकाव्यम्**

माणिक्यचन्द्र सूरि विरचितं नलायन महाकाव्यं सम्भवतः नलकथा साहित्येऽतिविस्तृतं वर्तते । शतसर्गेषु समुपवर्णितमत्र नलचरितम् । कुवेर पुराणमिति नाम्नापि ग्रन्थोऽयं ख्यातः । जैन परम्परानुसन्धानेनापि अस्मिन् खलु काव्ये नलः कुवेरस्य भ्रातृरूपेण परिकल्पितः । द्वादश शताव्द्यां समुत्पन्नोऽयं कविः मम्मटस्य काव्यप्रकाशस्योपरि संकेतनामिकां टीकामपि व्यरचत् । ग्रन्थोऽयमप्रकाशितः । प्रकाशनं भवेच्चेत्तर्हि संस्कृत वाङ्मयस्य महती श्रीवृद्धिर्भवेत् ।

**३. दमयन्ती चम्पूः**

भोज विरचिते श‍ृंगार प्रकाशे कविः दमयन्ती चम्पूरिति नाम चम्पू काव्यं समुट्टंकितवान् । एकं पद्यं तत्र समुदाहृतं यत्र हंसस्य दौत्यं वर्णितम् ।

**४. नलाभ्युदयः**

वामन भट्ट बाण विरचितोऽयं नलाभ्युदयः वस्तुतः काव्यमयताया साक्षान्निदर्शनमिव प्रतिभाति । पंचदश शताव्द्यां वत्सगोत्रीयस्य वरदाग्निचित् महोदयस्य वंशे कोमतियज्वनः पुत्ररूपेऽयं कवि समुत्पन्नोऽभूत् । वामन भट्ट वाणेन स्वाश्रयदातुः वेमभूपालस्य विरुदरूपेण यत्काव्यं गद्ये समुपन्यस्तं वैमभूपालचरितम् इति तस्य कृतेऽयं कविरभिनव भट्टवाण इति उपाधिमलभत् ।

दौर्भाग्येन नलाभ्युदय काव्यं खण्डतयैवोपलभ्यते । नवम सर्गस्य श्लोकत्रयं यावदेव अष्टाधिक पंचशतानि पद्यानि सन्ति यत्र पूर्णतया मौलिकं नलचरितमनुसरत् कथावस्तु नलदमयन्त्योः पूर्वरागादारभ्य क्रमशः हंसदौत्यं, पंचनलीवर्णनं, स्वयंवरे नलवर्णनं कलिद्वापराभ्यां कृतो नायकनायिकयोः विप्रयोगः कर्कोटकवृत्तं, दमयन्त्याः चेदिदेशे सम्प्राप्तिः ततश्च स्वदेशगमनं, भीमाज्ञया दूतैः नलान्वेषणं, पर्णादमाध्यमेन वाहुकद्वारा दमयन्त्याः गाथाया उत्तरं श्रुत्वा तद्वृत्तान्तस्य दमयन्त्यै निवेदनमिति प्रसंगा उपकल्पिताः । अत्रैव खण्डितोऽयं ग्रन्थः । ग्रन्थे श्री हर्ष कालिदासयोः प्रभावः शैल्यां निःसन्देहतयानुभूयते । "दीपशिखा" कालिदासस्योपमानं कविः स्वकाव्येऽपि तथावदनुसस्त्रे —

**अतीत्य सा यं यमरालकेशी जगाम भूपं शशिनः प्रभेव ।**
**स स प्रपेदे मुकुलीकृतश्रीः प्रातः कुमुद्वानिव दीन भावम् ॥**[1]

**५. दमयन्ती परिणयः**

चक्रकविः प्रकृत काव्ये दमयन्ती स्वयंवरस्य कथां समुल्लिखितवान् । सप्तदश शताव्द्यां समुत्पन्नोऽयं कविः रुक्मिणी परिणय, जानकी परिणय, पार्वती

---

१. टी० एस० एस० नं० ३ पृष्ठ २४

परिणय, दमयन्ती परिणयादि चतुष्टय परिणय काव्यानि रचयामासेति तस्य चित्रनाटके उट्टंकितम् ।[1]

**६. नलचन्द्रोदयः**

वर्तमाने दशके केरलस्थया विज्ञानकेरलीति नामिकया संस्थया समुद्घाटितं नलचन्द्रोदय काव्यं सप्तदशशत्ताब्द्यां करुणाकरः कविः विरचितवान् । कवेर्नाम 'शूलपाणिदास' इति पदेनापि समभिहित आसीत इति ग्रन्थेनैव व्यज्यते । कवि-रयं वैरियार जात्यां मन्दिर सेवककुले जन्मलेभे । दक्षिणमालावार जनपदस्य करिकाननमिति नामके ग्रामेऽस्य जन्म अभूत् ।

नलचन्द्रोदय नामको ग्रन्थोऽयं द्वादश सर्गेपु द्विसहस्त्राधिक पद्यैः नलचरित-मुपवर्णयति । श्रीहर्षस्य काव्यानन्तरं न केनापि एतावता सम्भारेण नलचरितं समुपन्यस्तम् । प्रत्येकस्मिन् सर्गेऽन्ते कविः नैषध इव सर्ग समाप्ति द्योतयति । यथा—

**'सर्गोऽयं प्रथमो गतः ।'** इत्यादि । अन्तिम सर्गे परिसमाप्तो—

**'श्री शूलपाणिदासाय नलचन्द्रोदये कृतौ ।**
**अवोषालेश संसर्गः सर्गोऽयं द्वादशोऽध्यगात् ।।'**[2]

इति प्राप्यते । प्रकृत काव्ये सम्पूर्ण नलचरितं महाभारतवदेव समुपन्य-स्तम् । प्रथमेषु सप्तसर्गेष् नलदमयन्त्योर्विवाहावधि प्रसंग उपवर्णितः । ततः पर मुत्तर नलचरितस्याख्यानं प्रस्तुतम् काव्यारम्भ एव नलमुद्दिश्य लिखितमिदं पद्यम्—

**'आसीदधीतिः निगमेषु धीमान्,**
**नलाभिधानो परलोकनाथः ।**
**विस्तारयिष्यन् निजरूपमुर्व्यां,**
**धर्मः स्वयं देहमिव प्रपन्नः ।।'**[3]

काव्यस्यान्ते कविः ग्रन्थसमाप्तिद्योतनपूर्वकं शुभाशंसनं विदधाति—

**:आपूर्णामलपक्षमण्डलतया,**
**वत्तोत्सवो देहिनाम,**
**सद्यः सावितः पुष्करः कुमुदिनी**
**सम्पत्ति सम्पावकः ।**

---

१. टी० एस० एस० नं० २२० पृष्ठ २

२. नलचन्द्रोदय सर्गं १२ समाप्ति

३. नलचन्द्रोदय १।१

पादाक्रान्त समस्त भूभृदनिद-
मपूर्वो मनोज्ञान्वये,
भासिष्टानुदिनं क्रमेण नल-
चन्द्रोऽयं बभारोदयम् ॥[1]

७. नलाभ्युदय (द्वितीयः)

अष्टादश शताब्द्यां नायक वंशोद्भवेन दक्षिणदेशे तंजौर नामकस्य स्थानस्य राजपदमलंकुर्वता रघुनाथेन रचितेऽस्मिन् काव्ये नलचरितं वर्णितम् । काव्यस्यास्य अभिनयार्थं नृत्यगीतादि समावेश पूर्वकं संस्करणमपि तेन कृतम् ।

८. नैषधपारितजातम्

तंजावूर राज्ञः रघुनाथस्य राजकविः कृष्णःनैषधपारिजातं काव्यं द्वाश्रय काव्यरूपे उपनिबद्धवान् । इह पारिजातहरणस्य नलस्य च कथा सह भावेन गच्छति ।

९. अबोधाकरः

घनश्याम कवि कृते अबोधाकरे त्र्याश्रयत्वं प्राप्यते । अत्रत्या कथा नल कथां, कृष्ण कथां, हरिश्चन्द्रस्य कथां च सहैवाभिव्यनक्ति । कविः काव्यस्योपरि टीकामेकां विरचितवान् । कविरयं तंजौर राज्यस्य पुक्कोजी नाम्नः राज्ञः अमात्योऽभूत् । अनेन संस्कृते चतुःषष्टि, प्राकृते विंशति, अन्यासु देशीयासु भाषासु च पंचविंशति संख्याकानि काव्यानि प्रणीतानि ।

१०. राघव नैषधीयम्

हरदत्त सूरि विरचितं काव्यमिदं नल कथया सह रामकथामपि वर्णयति । सर्गद्वयात्मकेऽस्मिन्काव्ये प्रथम सर्गे षडविंशत्यधिकैकशतानि द्वितीये सर्गे द्वाविंशति पद्यानि च सन्ति । अत्र नल पुत्रः इन्द्रसेनः राज्यमलभत् यथा कुशः रामस्य राज्यमवाप इति वर्णितम् । कविकृता टीकाऽपि ग्रन्थेन सहैव प्रकाशिता ।

११. प्रति नैषधम्

विद्याधरलक्ष्मणाविति कविद्वयेनोपरचितं काव्यं सम्वत् १७०८ इति समये प्रकाशमानीतम् । मुगलसम्राजः शाहजहानस्य समये काव्यं रचितम् ।

१२. कल्याण नैषधम्

केरल प्रान्तीयः कविः वासुदेवन् नम्पूत्तिरिः कल्याण नैषध काव्ये स्वाश्रयदातारं रविवर्मन् नामकं कंचिद् राजानमपि संस्तौति—

---

१. नलचन्द्रोदय सर्ग १२ समाप्तौ

'अस्ति देववरश्लाघ्यो भीमभूपजयादृतः ।
प्रकाशराजो धर्मात्मा रविवर्मा नलोज्ज्वलः ॥'[1]

कविरयं गोविन्द चरितं, संक्षेप भारतम्, संक्षेप रामायणं चापि रचितवान् ।

**१३. नैषधानन्दः**

श्रीनिवास दीक्षितेनोपवर्णितेऽस्मिन् काव्येऽपि नलचरितमस्ति । परं नास्य विषयेऽधिकं ज्ञातम् ।

**१४. नलवर्णन काव्यम्**

लक्ष्मीधर कविकृतं नलवर्णन काव्यं साम्प्रतमप्यप्रकाशितं वर्तते । अतो नास्य विषये किमपि विशेषं ज्ञातुं शक्यते ।

**१५. नलकथार्णवः**

केनाप्यज्ञातेन कविना प्रणीतमिदं पद्यकाव्यम् ।

**१६. नलहरिश्चन्द्रीयम्**

अज्ञातनामा कोऽपि कविः द्वाश्रय काव्यरूपे लिखितवान् काव्यमिदम् ।

**१७. नलयादव राघव पाण्डवीयम्**

अस्यापि प्रणेताज्ञातः । दक्षिण भारते संस्कृत पाण्डुलिपि सूच्यामुद्धृतमिदं काव्यम् । ग्रन्थाभिधानेन ज्ञायते यत्कथावस्तु चतुरस्रतामवाप्य नल, कृष्ण, राम, पाण्डवानां चरितानि प्रस्तौति[2] ।

**१८. दमयन्ती परिणय काव्यम्**

तत्रैव संस्कृत पाण्डुलिपिसूच्यामिदमपि काव्यं परिगणितम् । नास्य रचयितुर्नाम तत्र वर्णितम् ।

**१९. नलचरित काव्यम्**

प्रकृत काव्यमपि तत्र सूच्यां सन्निविष्टं वर्तते । नास्य ग्रन्थकारस्य नाम प्रदत्तम् ।

**२०. नलचरित प्रबन्धः**

ग्रन्थोऽयं चम्पू काव्य शैल्या एव समुपवर्णितः । ग्रन्थारम्भे --

**श्रीमान् पुरानिषधनीवृत्ति पुण्यकीर्तिः ।**
**कामोपमः कमलवैरिकुलावतंसः ।**

---

१. कल्याण नैषधम् १।१

२. Oppert 6695 H. G. L. Page 1002

**सामादिवित् सममतिः श्रितकामदायी,**
**राजा बभूव विमलो नल नामधेयः ।**

इत्यनेन पद्येन नलस्य प्राशस्त्यं तदनन्तरं पुनः नलदमयन्त्योर्विवाहपर्यन्त-मितिवृत्तं समाख्यातम् । ग्रन्थपरिसमाप्तौ देवाः वरं प्रदाय स्वर्गमगच्छन्—

**एवं दत्वा वरं ताभ्यां ते तिरोदधुरग्रतः ।**
**एवं वादित्र मुखरं दम्पती पुरमीयतुः ॥**

## २१. सारशतकम्

निर्णय सागर मुद्रणालयात्प्रकाशितोऽयं ग्रन्थः श्रीकृष्णराम कविना प्राणायि । अस्मिन् खलु काव्ये संस्कृत वाङ्मयस्य पंच महाकाव्यानां रघुवंश, कुमार सम्भव, किरातार्जुनीय, शिशुपाल वध, नैषधीय चरितानां कथावस्तु सारः संक्षेपेण वर्णितः । ग्रन्थारम्भे—

**अथ कालिदास-भारवि-माघ-श्रीहर्ष रचित काव्यानाम् ।**
**संक्षिप्य साधु सारं श्रीकृष्णः प्राह पद्यशतकेन ॥**

अत्र द्वाविंशति शार्दूल विक्रीडित छन्दोभिः नैषधीय चरितं संक्षिप्तम् । प्रथम सर्गस्य सक्षेपणं द्रष्टव्यम्—

**भूपः कोऽपि नलो नलाद्युतिरभूत् तत्रानुरागं दधौ,**
**वैदर्भी दमयन्तिका गुणरुचिः सोऽप्यास तस्यां स्पृही ।**
**जातु स्वान्त विनोदनाय विरही लीलाटवीं पर्यटन्,**
**हैमं हंसमसौ निगृह्य तरसा दूनां दयालुर्जहौ ।**

## २२. उत्तर नैषधीय चरितम्

केरलीयः कविः, त्रिचूर जनपदान्तर्गते पेरुमननमित्याख्य ग्रामवास्तव्यः वन्दारु भट्टः माधवन् अतित्तिर इत्युपनामधारी एकोनविंशति शताब्द्यां पूर्वार्द्धे षोडशसर्गात्मकं काव्यमिदं प्रणीतवान् । कालीकट राज्यस्य मनोरमाख्यायाः राजकुमार्याः कविमण्डले वन्दारुभट्टोऽपि बभूवेति सुविदितमेव ।

ग्रन्थोऽयं नैषधीय चरितस्य कथां पूरयितुमेव रचित इति निश्चयेन वक्तुं शक्यते । नैषध इव कविरिहापि सर्गान्ते "वन्दारुद्विजमाधव" इत्यादि श्लोकेना-त्मानमुद्बोधयति । यथा नैषधे श्रीहर्षः चिन्तामणि मन्त्रं साधयति अवामावा मार्द्धे इत्यादिनापद्येन तथैव वन्दारु भट्टोऽपि "बालमन्त्रं" साधयति । नल-विवाहानन्तरं सौराज्य वर्णनात्काव्यारम्भः ततश्च दमयन्त्याः पुत्रस्य पुत्र्याश्च जन्म, द्यूतक्रीड़ा, बनवासः, कथमपि पुनर्मिलनादिकं सर्वं वृत्तं कविना सम्यगु-पन्यस्तम् । काव्ये श्रीहर्षस्य कालिदासस्य च प्रभावो दृश्यते । ग्रन्थोऽयं वस्तुतः श्लाध्यः ।

## २३. कलिविडम्बनम्

कृष्णमाचारियर महोदयः स्वीये काव्यसाहित्येतिहासे काव्यमिदमुल्लिखन्स्मृतवान् । नारायण शास्त्री महोदयोऽस्य रचयिता ।

## २४. नलोदन्तम्

काव्यमिदं वी० एस० वी० गुरुस्वामि शास्त्रि विरचितं सर्ग चतुष्टयेषु एकचत्वारिंशदधिक त्रिशतेषु पद्येषु सम्पूर्णं नलचरितमनुष्टुभ् छन्दसा वर्णयति ।

## २५. आर्य नैषधम्

नलस्य पद्यात्मकं संक्षिप्तचरितं ए० वी० नरसिंहाचार्य महोदयः वर्तमान शताब्द्यां समुल्लिखितवान् ।

एतेषां काव्यानामतिरिक्तं संस्कृत वाङ्मये नाटकेषु नलचरितस्य प्रभूततरः प्रयोगोऽभूदिति दृश्यते । नलचरितमाधारीकृत्य रचितानां नाटकानां विवेचनं क्रमेण प्रस्तूयते—

## १. नलविलासनाटकम्

द्वादशशताब्द्यां समुत्पन्नः रामचन्द्रसूरिः नलविलासनाटकस्य सप्तष्वकेषु नलचरितमवर्णयत् । नाटककारः संस्कृत वाङ्मये आलोचकत्वेनख्यातस्य हेमचन्द्राचार्यस्यान्तेवासी आसीत् । राजकोपानले लेखकस्य जीवनमत्यन्त कष्टतया स्मृतिशेषतां गतमिति श्रुतम् । रामचन्द्रेण शताधिकानि काव्यानि रचितानि येष्वद्य कानिचिदेवोपलभ्यन्ते ।

नल विलास नाटके वर्णितं कथावस्तु कवि कृत वृत्त परिवर्तनेन न मौलिकं नलचरितं पूर्णतयाऽनुसरति । जैन सम्प्रदायानुरोधत्वात् तेन पूर्णमितिवृत्तं स्वमतानुरूपमेव व्याख्यायितम् । चतुर्थेऽध्याये सर्वमेतत् वृत्तं दृष्टव्यम् । केवलमेक परिवर्तनमिहोपवर्ण्यते । भारते नलान्वेषणार्थं दमयन्ती चारान् प्रैषयत् किन्तु नलविलासे "सा नाट्य मण्डलमेकं देशेषु प्रैषयत् यन्मण्डलं तत्र तत्र "नलान्वेषण" नामकं नाटकमभिनीतवत् ।

नल विलास नाटके सुबहु परिवर्तनेन नूतनानां पात्राणामपि प्रादुर्भावोऽभूत् येषु किंपुरुषः, नलामात्यः, कुबेरः, पुष्पवती, कलहंसकः, खरमुखः विदूषकः, कोरकः कोषाध्यक्षः, सिंहलकमकरन्दौ नलसेवकौ, चित्रसेनः चेदिराजः, मेषमुखः कापालिकः यस्य वास्तविकं नाम घोरघोण आसीत् । कापालिकभार्या लम्बस्तिनी विजयवर्मा, दधिपर्णादिकाः नवीन प्रसूताश्चरिताः नाटके वर्तन्ते । सम्पूर्णत्वेनेह सप्तविंशति पात्राणि रंग मंच उपस्थापितानि ।

**२. नलविजय नाटकम्**

अस्यः कः प्रणेता इति न ज्ञातः। अलंकार सार संग्रह नामके ग्रन्थेऽस्य परिगणनं दृश्यते। अष्टांकेषूनिबद्धं नाटकमिदं नलविक्रमनाटकमिति नाम्नापि शारदातनयेनोट्टंकितम्। अलंकार सार संग्रहे—

**शाकुन्तलं तु सप्तांकम्; अष्टांको नलविजयः। इत्युद्धृतम्।**

**३. विधिविलसितम्**

**नाट्यदर्पणेऽज्ञातकविरचितस्यास्य नाटकस्य विषये—।**

"दैवतो यथा विधि विलसिते पंचमांके" कंचुकी : हा धिक्! कष्टम्, नैवोल्लंध्यः प्राक्तनः कर्मविपाकः—

**वार्ताऽपि नैव यदिहास्ति स राजचन्द्रः,**
**तेनोज्झिता विधि विमोहित चेतनेन।**
**नैवा वने त्रिदशनाथ विलासिनीभिः,**
**कर्तुं गता जगति सख्यमिति प्रवादः॥**

इत्युद्धरणं प्राप्यते।

**४. नैषधानन्दः**

महाकवि क्षेमीश्वर विरचितमिदं नाटकम्। क्षेमीश्वर एव क्षेमेन्द्रः यस्य संस्कृत वाङ्मये सुप्रतिष्ठा वर्तते।

**५. नलानन्दः**

सप्तांकेषूपनिबद्धोऽयं ग्रन्थः जीव विबुध नामकेन कविना प्राणायि।

**६. दमयन्ती कल्याणम्**

नल्लान चक्रवर्ती शठगोपाचार्य कृतं पंचांकेषु नलचरितमुपवर्णयतीदं नाटकम्।

**७. नलविजयः**

दशरूपकस्य टीकाकारेण बाहुरूपमिश्रेणाज्ञातकविकृतं नाटकमिति सन्दर्भे संयोजितम्। सागर दण्डिन् कृते नाटक लक्षणरत्न कोशे—"नल विजये चतुरिका मालवीभ्यां नलस्य राज्य भ्रंशः" इत्युल्लिखितं यत्तत् नाटकमिदमेव द्योतयतीति सम्भाव्यते।

## कलिकेलि प्रहसनम्

शिंगभूपालस्य रसार्णवसुधाकरे अज्ञातकविकृतस्य नाटकस्यास्य परिचयं प्रदत्तम्। तत्रैकं पद्यमपि समुदाहृतम्—

स्तम्भस्तथालम्भितमां नलेन,
भैमीकरस्पर्शमुदः प्रसादः ।
कन्दर्पलक्षीकरणार्पितस्य,
स्तम्भस्य दम्भं स चिरं यथापत् ॥

**९. नलविक्रमः**

शारदा तनयस्य भावप्रकाशने नाटकमिदं सन्दर्भायितं यत्र—"अष्टांकं नल विक्रमम्" इत्युल्लिखितम् ।

**१०. नलविक्रमः**

अज्ञात कविरचितस्यास्य नाटकस्य विषये नेदं ज्ञायते यदिदं शारदा तनयेनोक्तमेव नाटकं वर्तते न वा ।

**११. नलभूमिपालरूपकम्**

औफ्रेखट महोदयस्य सूच्यामज्ञातकविरचितमिदं रूपकमुल्लिखितम् ।

**१२. कविताण्डवम्**

कर्ता त्वस्यापि नाटकस्याज्ञात एव । तंजौर ग्रन्थालये पाण्डुलिपिः वर्तते ।

**१३. दमयन्तीकल्याणम्**

श्री रंगनाथ विरचितमिदं नाटकं पंचाकं यावत् भूर्जपत्रेषूल्लिखितमेवाप्यते ।

**१४. भैमीपरिणयः**

रत्नखेटाभिधः श्रीनिवास दीक्षितो नाटकस्यास्य प्रणयनं कृतवान् । लेविस रायस महोदयः स्वसूच्यां समावेशयदस्य नाम ।

**१५. भैमीपरिणयः**

आफ्रेखट महाशयेनान्यदपि भैमीपरिणय नाटकं सूच्यामुपन्यस्तम् । सम्भाव्यते यत् शठकोपाचार्य विरचितमेवेदम् ।

**१६ भैमीपरिणयः**

वैंकटाचार्य कृतमपि नाटकमेकं "भैमीपरिणयः" इति प्राप्यते ।

**१७. नलचरितनाटकम्**

श्री नीलकण्ठ दीक्षित कविकृतं नलचरित नाटकं सप्तभिरंकैः नलचरितमुपवर्णयति । अयं कविः सुप्रसिद्धस्य विदुषः अप्पयदीक्षितस्य भ्रातुः पुत्र आसीत् विंशति सर्गात्मकं शिवलीलार्णवम् तथा च अष्टसर्गात्मकं गंगावतरणं महाकाव्यमस्य प्रसिद्धे द्वे महाकाव्ये स्तः ।

नाटकमिदं षष्ठांक एव पर्यवस्यति । कविः स्वयमेवापूर्णमिदं नाटकं कोऽपि वीरराघव कविः पूरयिष्यतीतित्युक्तवान् । पश्चात्तने काल एकोनविंशतितमायां शताब्द्यां वीर राघव कविः ग्रन्थमपूरयत् ।

नाटके पंचषु अंकेषु नलदमयन्त्योर्विवाहावधि यावत् वृत्तमुपकल्पितम् । कथावस्तु त्वत्र परिवर्तितं दृश्यते "ब्रह्मा दमयन्त्याः निर्माणात्परं तस्याः कृते यदा वरं चिन्तितवांस्तदा नलमेव योग्यममन्यत । ततः तेन सरस्वती प्रेषिता, सा स्वप्ने परस्परं तयोर्दर्शनं कारयित्वा कथमपि च गौरी मन्दिरे तयोर्मेलनमप्य-कारयत् । ब्रह्मणः हंसोऽपि दौत्ये कर्मणि नियुक्तोऽवलोक्यते नाटके षष्ठें ऽके इन्द्रः नलायासूयति । स एव पुष्करं नलस्य क्षतिं कर्तुं समुत्साहयति । अग्रिमं वृत्तान्तं नाप्यते । इन्द्रो नलस्य मुख्यः प्रतिद्वन्दी बभूवेत्यस्मिन् नाटके वर्णितम् ।"

अच्चादीक्षितः, कवेर्भातृचतुष्टयेऽन्यतमः नाटकोपरि टीकामपि लिखिवान् ।

**१८. मंजुलनैषधम्**

वैंकट रंग नाथ प्रणीतं मंजुल नैषधं एकोनविंशतिशताब्द्यां रचितम् । नाटकेऽस्मिन् शिल्पकार, ऐन्द्रजालिकादीनिः नूतनानि पात्राणि समावेशितानि । कथावस्तुनि परिवर्तनमपि लक्ष्यते ।

**१९. नैषधम्**

केरल प्रदेशीया संस्कृत कवियित्री श्रीदेवी कुट्टी तम्पुरत्ती रचितवती नाटकमिदम् । अस्याः चम्पू भागवतं मधुरापुर विलासः भामा परिणय चम्पू-रिति काव्यत्रयं प्राप्यते ।

**२०. अनर्घनलचरितम्**

महानाटक रूपेण प्रस्तुतं नलचरितं पंचनदस्थेन सुदर्शनाचार्येण प्रकाशितो ग्रन्थोऽयम् ।

**२१. कलि विधूननम्**

दशांकेषूपवर्णितेऽस्मिन् ग्रन्थे कविः नारायण शास्त्री नलचरितं प्रस्तुतवान् । कविरयं द्विनवति संख्याकानि नाटकानि प्रणीतवान् । येषु दशप्रकाशितानि ।

**२२. कलिविजयः**

नारायणशास्त्रि विरचितमिदं काव्यम् ।

**२३. नलचरितम्**

वाराणसीस्थेन कवि चक्रवर्तिना श्री देवी प्रसाद शुक्लेन सुप्रभात नामके पत्रे प्रकाशितम् ।

**२४. भैमीपरिणयः नलविजय वा**

रामशास्त्री माण्डिकल प्रणीतं नाटकमिदं दशांकेषु नलचरितमुपवर्णयति । प्रथमांके स्वप्ने भैम्याः दर्शनं कृत्वा मन्मथोन्मथितो नलः एकदा तस्याश्चित्रं प्राप । तदैव स तस्याः स्वयंवर वार्तामवगत्य तत्र गन्तुमियेष । कामातुरस्य व्याधस्य नाम दुर्गसेनेति नाटके वर्णितं । सार्थवाहाध्यक्षोऽपि "कामदास" नाम्ना

वर्णितः । वने दमयन्ती स्व पुत्रमपि चातुर्येण रक्षति यत्र किरातास्तं घातयितु मैच्छन् दमयन्ती हरिद्रा कुंकुभाभ्यां शरीरं विलिप्य काली स्वरूपे परिवर्त्यात्मानं किरातान् त्रासयति । परिसमाप्तौ अन्यदप्येकं परिवर्तनं वृहत्तरं वर्तते यत्र दमयन्ती न्यायालय उपस्थाप्यते । तत्र सर्वे साक्षिणस्तस्याः वैपरीत्यं भजन्ते । दमयन्ती कथमपि तत्र स्वपितुः पत्युश्चविषये नाब्रवीत् । परं तदैव समये एकेन भृत्येन सा स्वरेणाभिज्ञाता आख्यापिता च न्यायालय एव । अन्ते सा स्वपरिचयं दत्तवती ।

**२५. नलदमयन्तीयम्**

कालीपद तर्काचार्य विरचितं नाटकमिदं कलिकातः प्रकाशितायां संस्कृत साहित्य पत्रिकायां प्रकाशितमभवत् । कवेरस्य स्यमन्तोद्धारः काव्यचिन्ता चेति नामके द्वे नाटके वर्तेते । ग्रन्थेऽस्मिन् सविस्तरं नलचरितं सप्तभिरंकैरुपनिबद्धम् । कविः काम धर्म, विवेक, मोहादि भावानामपि पात्रत्वेन चित्रणमत्र चकार । काममोहौ कलेः साहाय्यं कृतवन्तौ धर्मविवेकौ च नलस्य । परिवर्तनान्यपि कथावस्तुनि संलक्ष्यन्ते यथा देवदौत्य व्याजेन नलः दमयन्त्याः हर्म्ये प्रविश्य नात्मानं प्रकाशयत् नलकीर्तिकौमुदीवत् । वने काकोदरेणाजगरेण व्याधेन च परिक्लान्ता भैमी किरातदलेनैकेनैव रक्षिता तद्गृहे प्रापिता च । शाकुन्तलमनुसृत्य इहापि स्वपुत्रमिन्द्रसेनमेकेन महिषेण सह क्रीडा युद्ध कर्मणिरतमवालोकयन्नलः तमरक्षच्च । पुष्करस्य विषयेऽपि कविः कले कौटिल्यं दूषयन् नाटके वारं बारं पुष्करस्य पश्चात्तापं वर्णयति समाप्तौ च पुष्करेण सह नलस्य युद्धोऽपि वर्णितः ।

संक्षेपेणं नाटकमिदं सुरुचिपूर्णमभिनेयं पठनीयं चास्ति ।

**२६. धीर नैषधम्**

रामावतार शर्म रचितं प्रकृतिनाटकं वाराणसीतः प्रकाशितम् ।

**२७. पुण्यश्लोकोदय नाटकम्**

देवीशरण चक्रवर्ति विरचितं नाटकमिदं साम्प्रतमेव प्रकाशितम् ।

**७८. दमयन्ती चरितम्**

उत्तर प्रदेशे इटावा मण्डलान्तर्गते भरथना नामके स्थाने माध्यमिक विद्यालयस्याध्यापकेन डा० मिजाजीलाल शर्म महोदयेन साम्प्रतमेव नाटकमिदं प्रकाशितम् । अस्य चर्चा श्री लालबहादुर शास्त्री केन्द्रीय संस्कृत विद्यापीठस्य शोध पत्रिकायां डा० कैलाशनाथ द्विवेदी महोदयेन कृता ।

एतेषां काव्यानां नाटकानां चातिरिक्तान्यन्यान्यपि काव्य नाटकादीनि इतस्ततोऽवश्यमेव श्रूयन्ते परं तेषामुपलब्धिर्नाभूत् । बहूनि काव्यानि साहित्येति-

हासकारैः दर्शितानि किंतु साम्प्रतं कस्यापि स्नातकस्य कृते प्राचीनानां पाण्डुलिपीनां पूर्णतयावालोकनं बहुकष्टकरम् । तेन यथा शक्ति प्रयासानन्तरं यानि काव्यान्युपलब्धानि तेषां निदर्शन पूर्वकं ग्रन्थोल्लिखितानां काव्यानामपि समावेशोऽत्रविहितः ।

काव्य साहित्य साम्राज्ये नलचरितस्यैतादृशी प्रतिष्ठा तस्य कालजयित्वं द्योतयति । आवैदिक वाङ्मयात् इदानीं विंशतिशताब्दी पर्यन्तं कवयो नाटककाराश्च नलचरितेनाकृष्टान्तःकरणाः सन्तः स्व वाग्विलासशेमुषीं पोषयन्ति । नलचरित साहित्यस्यान्यतमोऽध्येता डा० एन० पी० उन्नि स्वीये ग्रन्थे लिखति—

"In the case of the Nala Episode it must be admitted that the story appealed even to 20th centnry play-wrights. This is because of the chain of the story centering round the theme of love—an Emotion prominantly agreeable to human beings as long as they exist. The story contains all facts of human life-trials and tribulations of the human race and poignant emotion packed scenes which are the part and Parcel of our everyday life. There is nothing that is unreal and unbelievable despite the supernatural halo that glorifics that theme. In fact the theme is second to none in the world of classics because of its parennial charm."[1]

वस्तुतः पुण्यश्लोकस्य नलस्य चरितं स्वप्रभावान्वितौ राम कृष्ण चरितमिव सर्वाणि पौराणिकैतिहासिकानि चरितानि अतिशय्य विराजत इति नास्ति काप्यत्युक्तिः । उक्तं चाभियुक्तैः

श्रुतीनां पीयूषं कविकुलगिरां कीर्तिपटहो;
रसापीतेः पात्रं रघुयदुचरित्रं विजयते ।
परं किंचित् किंचिन्नल ललितमप्येदमृत-
स्रवन्तीं श्रोतॄणां स्वरसि विनिधातुं प्रभवति ।[2]

---

१, Nala Episode in Sanskritic Literature, Dr. N. P. Unni p. 60

२. नलविलास रामचन्द्र सूरि १।६

## नवमोऽध्यायः

'नमोऽस्तु ते व्यास विशालबुद्धे,
फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारत तैल पूर्णः,
प्रज्वालितो ज्ञानमयः प्रदीपः ॥'[1]

महर्षेः व्यासस्य कृते यदि संस्कृत वाङ्मयस्य, भारतीय संस्कृते आर्य सभ्यतायाश्च विधाता इति शब्दः प्रयुज्येच्चेर्त्तर्हि नास्ति काप्यत्युक्तिः । वैदिक संहितायाः विभाजनं, ब्रह्मसूत्रस्य प्रणयनं, पुराणानां सृष्टिः महाभारतस्य परिकल्पनं चैतत्सर्वं भारतीय जीवनपद्धतयेऽवदातं श्रेष्ठतमं च दानं महर्षिणोद्भावितमस्ति । अतुलनीया तस्य महिमा । अष्टादशधा विभक्तं पुराणसाहित्यं यद्यपि विभिन्न रूमे नैजं वैशिष्ट्यमापादयति तथापि महाभारतस्य तुलना विश्वसाहित्ये न केनापि ग्रंथेन कर्तुं शक्यते । महाभारतन्तु विविधविधरत्ननिचयपरिपूरितः रत्नाकर इव वर्तते यस्यागाधसान्द्रप्रवाहेऽवगाहनपरायणाः महाकवयः, नाटक प्रणेतारः, गद्यप्रबन्धकाः, चम्पूकाराश्च किं वहुना अधुना चलचित्रनिर्मातारोऽपि युगीन दृष्टि कौशलेन सुबहुमूल्यवतो वस्तु चरित्रादिमणीनन्विष्य तानि च काव्यमाध्यमेन अथ च चलचित्र माध्यमेन प्रस्तुवन्ति ।

आर्यधर्माणो मनीषिणः ऐहिकमामुष्मिकं चेति सुखं दुःखं साधु विविच्य तयोर्निदानमप्यूहापोहात्मिकया दर्शनशास्त्र सरण्या प्रतिपादितवन्तः । सकले जगति प्राणिमात्रेणानुभूतदुःखानि आध्यात्मिक, आधिदैविक, आधिभौतिकश्चेति भेदत्रयेण वर्गीकृत्य तन्निरसनार्थं ते पुरुषार्थं चतुष्टयं धर्मार्थं काममोक्षाख्यं विविच्य सुखानामपि वर्गीकरणं चक्रुः । आसमुद्रं सप्तद्वीपायां वसुन्धरायां नाप्यते कोऽप्येतादृशो बद्धमूलो ग्रंथः यो हि केन्द्रविन्दौ स्थितः पुरुषार्थं चतुष्टयं समुपपाद्यति । महाभारतस्य मूल्यमुन्मीलयन् व्यासः कियता संरम्भेण विश्वासभावेन च समभिव्याहरति --

---

१. सुभाषितम्

**'धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।।'**[1]

अस्मादेव वचनाद् 'यन्नभारते तन्नभारत'' ''इत्युक्तिः प्रसिद्धिमगमत् । ज्ञान विज्ञानयोराकरग्रंथः महाभारतं लोकोपयोगिनः विषयान् स्वीयया विशिष्ट-शैल्योरीकृत्य प्रतिपादयति । फलतः प्रकरण-प्राप्त-प्रसंगवलेन महाभारतीय नलचरिते संगुम्फितानि व्यवहारशास्त्राण्यप्यनुसन्धेयानि समीक्षणीयानि च—

नलचरिते विशेषतः द्वयोर्विधयोरुल्लेखनं व्यासेन सम्पादितमश्वहृदयस्याक्ष-हृदयस्य च । अश्वाक्षविद्ययोरनन्तरमेकत्र पाक विद्या विषयेऽपि सांकेतिकं वर्णनं दृश्यते । अयोध्याधिपः ऋतुपर्णः 'अक्षहृदयज्ञत्वेन' प्रख्यात आसीत् । एतयोर्द्वयोरपि राज्ञोः परस्परं विषयोरादानप्रदानं तात्कालिके समाजे घटना-वैशिष्ट्यमिवाभूत् यतो हि सर्वेष्वेव पुराणेषु प्रायशः वृत्तमिदं स्थानं प्राप । अश्वशास्त्रं, अक्षशास्त्रं चेमे द्व एव व्यावहारिक आस्ताम् । अतः क्रमेण द्वयोरपि विवेचनं प्रस्तूयते—

## नलचरितेऽश्वशास्त्रम्

राज सत्तायाः आविर्भावेन सहैवाश्वानां महत्वमपि प्रतिपादितमस्ति । अश्वः तात्कालिक व्यवस्थायारभिन्नमंगमासीत् । सहस्त्राधिक वर्षेभ्योऽश्वप्रयोगः सैन्यसाधनरूपेण क्रियते । औद्यौगिक क्रान्तौ सत्यामपि अश्वानां महत्वमेकोन-विंशति शताब्दी पर्यन्तमक्षुण्णतया स्वीकृतमासीत् । विंशति शताब्दयां आधुनिक परमाणुशस्त्र विकासेन सैन्यबलरूपेऽश्वानां प्रयोगो न्यूनतामाप । तथापि दुर्गमेषु पर्वतीय स्थलेषु यातायात पत्रप्रेषणादि व्यवस्थायै अश्वानां प्रयोगः क्रियत एव । एकस्मिन समयेऽश्वान् विना राजसत्तायाः कल्पनापि दुष्करासीत् । फलतोऽश्व-विषये मनीषिभिः विद्वद्भिश्च विचार कृतः । यथा—चरक सुश्रुतादिभिः मान-वानां कृते आयुर्वेदस्य विकासः कृतः तथैव अश्वानां लक्षण परीक्षणायुष्य स्वास्थ्य प्रभृतीनां विषयेऽपि संस्कृत वाङ्मये पर्याप्तः विचारो जातः । अश्वायु-र्वेदाश्वशास्त्र प्रवर्तकस्य शालिहोत्रस्यापि कृते "मुनीश्वर" इत्यभिधानं प्रद-त्तम् । एतेन स्पष्टं भवति यद् भारतीय समाजे प्रति विद्याविशेषज्ञानां सम्मानं क्रियते स्म ।

श्रीमद्भागवते समुद्रात् उच्चैःश्रवसः अश्वस्योत्पत्ति प्रसंगः समुद्रमन्थन कथा प्रसंगे समागतः

---

१, म० भा० आदि पर्व अ० ६३ श्लोक ५३

'ततः उच्चैः श्रवा नाम हयो भूच्चन्द्र पाण्डुरः ।'[1]

शालिहोत्रमुनिः शक्रस्य सभासद आसीदिति कथितम्—

'शक्रः प्रोवाच पार्श्वस्थः शालिहोत्रं मुनीश्वरम् ।।'[2]

अश्वशास्त्राचार्याणामेका समृद्धापरम्परा सीत् । नकुल कृत अश्वशास्त्रानुशीलनेन प्रतीयते यत् भगवान् श्रीकृष्ण, युधिष्ठिर-अर्जुन-नकुल-सहदेव-भीम-सुश्रुत-गर्गादयो आचार्या अश्वविज्ञानस्य ज्ञातारः आसन्—

जयति स पाण्डवनाथः कृष्णो राजा युधिष्ठिरो भीमः ।
पार्थं नकुल सहदेवास्तदनु वाजिशास्त्रतत्वज्ञः ।।
दृष्ट्वा समस्तं नकुलः शास्त्रं तच्छालिहोत्रीयम् ।
ब्रूते तत्वार्थमनघं शास्त्रं कृत्वा समासतः ।।
प्रणिपत्य धवलतनु तिमिरहरं गोपतिं शशांकं च ।
अश्वायुर्वेदनिधिं महामुनिं शालिहोत्रं च ।।
ये शालिहोत्र सुश्रुत गर्गादि महर्षिभिः पुरागदिताः ।
स्वे स्वे तुरंग शास्त्रे योगाः शान्त्यै विकाराणाम् ।।'[3]

उपर्युक्तैः श्लोकैरिदमपि सिद्ध्यति यच्छालिहोत्रातिरिक्ते सुश्रुतगर्गादिभिरपि अश्वशास्त्र विषये स्वतंत्राः ग्रंथाः लिखिताः । एवमादिपदेनान्याश्वायुर्वेदसम्बन्धिनां ग्रंथानामाचार्याणां च कल्पना क्रियते । एतेन निःसन्देहं प्रतीयते यदश्व एकं महत्वपूर्णमुपादानमासीत् । अश्वप्रशंसायां भवन्ति चेमे श्लोकाः—

'धर्मार्थ कार्य सिद्धिः यथा तुरंगैः भवेत्तथा पूर्वैः ।
कथितैव महामतिभिः तथापि वक्ष्ये समुद्देशम् ।।
राजा राष्ट्रं यशो लक्ष्मीः धर्मकामार्थं सम्पदः ।
वाजिनो यत्र तिष्ठन्ति सर्वलक्षण संयुताः ।।
तस्य सागर पर्यन्ता हस्ते तिष्ठति मेदिनी ।
एकाहमपि यस्याश्वा निवसन्ति महाजिरे ।।
विष्णोर्वक्षःस्थलं मुक्त्वा लक्ष्मीस्तस्य गृहे स्थिता ।
निवसत्यश्वसंघातैः संपूर्णा तस्य मेदिनी ।।
कोऽन्यस्तुरंगमं हित्वा प्रविशेद्रिपुवाहिनीम् ।
अश्वेन पुनरभ्येति कृत्वा परपराभवम् ।।

---

१. श्रीमद् भागवत स्कन्ध ८ अध्याय ८ श्लोक ३

२. अश्वशास्त्रम् प्रश्नाध्याय श्लोक २ नकुलकृत

३. अश्वशास्त्रम् प्रश्नाध्याय

रणे शस्त्रविभिन्नांगान् गतास्त्रान् व्रणविह्वलान् ।
स्वामिनो वाजिनं मुक्त्वा को निर्वाहयितुं क्षमः ? ।।
पवित्रं परमं स्थामं मांगल्यमपि चोत्तमम् ।
दूराध्वानं गमयतां तथा सन्धानकर्मणि ।।
अश्वेभ्यः परमं नास्ति राज्ञो विजय साधनम् ।
आशुकार्याणि भूपानां यथाश्वाः पृथिवी तले ।।
कुर्वन्तीह यथाशीघ्रं न राजा न पदातयः ।
चन्द्रहीना यथा रात्रिः पतिहीना पतिव्रता ।।
हयहीना तथा सेना विस्तीर्णापि न शोभते ।
तस्मादश्वान् प्रशंसन्ति सेनांगेषु न संशयः ।।
अश्वैर्विहीना यान्त्यन्तं छिन्नमूला इव द्रुमः ।।
सर्वाम्भोनिधिमेखलां सुरसरिद्रोमावलीभूषितां ।
उत्तुंगाद्रिपयोधरां पुरवरप्राकारहारोज्वलाम् ।
निःशेष प्रतिपक्ष दोषरहितां विद्वज्जनोच्चाननां,
पृथ्वीं स्वां वरकामिनीव सुचिरं भुंक्तेऽश्वसेनापतिः ।।
'एते चान्ये च राजन् प्रकट गुणगणाः सन्ति मर्त्ये हयानां,
स्वर्गेऽप्येषां गुणा ये सुरपतिसहिताः सूर्यचन्द्रादयश्च ।
देवा जानन्ति येषां प्रवर गुणवतां रोगनाशस्य हेतुं,
सिद्धैः स्वप्नैश्च योगैर्मुनिवरगदितैर्व्याहृतैषा चिकित्सा ।।'[1]

अश्व शास्त्रेऽश्व विषयक गुणदोष निदान चिकित्सादि विषयाणां सूक्ष्माति सूक्ष्मविवेचनं जातमस्ति । अतः नलचरिते व्यासद्वारा यत्र राज्ञो नलस्य सम्बन्धे अश्व परीक्षण चर्चा कृतास्ति तदध्ययनेन स्पष्टं प्रतीयते यत् महर्षिः व्यासोऽपि अश्वशास्त्रस्य विशेषज्ञ आसीदिति । अन्यथा इयत्सूक्ष्मपरीक्षणं न सम्भवति । महाभारतीये नलचरिते राज्ञो नलस्य परिचयारम्भे प्रोक्तमस्ति—

'आसीद्राजा नलो नाम वीरसेन सुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ।।'[2]

नलमश्वकोविदमित्युक्त्वा सम्बोधनमत्र विहितमस्ति । राज्ञः ऋतुपर्णस्य गृहे बाहुकरूपे स्वकीयं परिचयं ददता नलेनोक्तं—

---

१. अश्वशास्त्र नकुल वाजि प्रशंसाध्याय श्लोक ९, ११, १२, १३, १५, १६, १७, २१, ३२, ३४, ३७, ४१

२. म० भा० व० पप अ० ५१ श्लोक १

**'स राजानमुपातिष्ठद् बाहुकोऽहमिति ब्रुवन ।**

**अश्वानां बाहने युक्तः पृथिव्यां नास्ति मत्समः ।।'[1]**

ऋतुपर्णः अक्षविद्यायाः आचार्य आसीत् । तेन स्व गुणग्राहकतापरिचयपूर्वकं नलः दश सहस्त्र मासिकं वेतनं प्रदाय तत्र नियुक्त आसीत्—

**'स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।**

**भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः ।।'[2]**

तात्कालिक समाजेऽश्वविद्याविदां पूर्णः समादरः आसीदिदमुक्तश्लोकेन स्पष्टं भवति । यदा ऋतुपर्णेन इदं ज्ञातं यद् दमयन्त्या पुनः स्वयंवरस्यायोजनं क्रियते तथा अपरेद्युरेव विदर्भे दमयन्त्याः स्वयंवरो भविता तदार्तुपर्णः तत्र गन्तुं व्यग्रो बभूव । मार्गस्य दूरवर्तितत्वमनुमाय ऋतुपर्णेनाश्वाध्यक्षं बाहुकमाहूय कथितं—

**'विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।**

**एकाह्ना हयतत्वज्ञ मन्यसे यदि बाहुक ।।'[3]**

बाहुकेनोत्तरितं—यदहं भवन्तमेकस्मिन्नेव दिने कुन्डिनमुपस्थापयिष्यामि—

**'प्रतिजनामि ते सत्यं गमिष्यसि नराधिप ।**

**एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ।।'[4]**

तदनन्तरं बाहुकः गन्तुमुद्यतो बभूव । रथे योजयितुं तेनाश्वशालायां गत्वा अश्व परीक्षा कृता । तथा अत्यन्त सूक्ष्मेक्षिकया तीव्रगामिनामश्वानां चयनं कृतम्—

**'ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।**

**अश्वशालामुपागम्य भांगस्वरिनृपाज्ञया ।।**

**स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।**

**अध्यगच्छत्कृशानश्वान्समर्थानध्वनिक्षमान् ।**

**तेजोबल समायुक्तान् कुलशीलसमन्वितान् ।**

**वर्जिताल्लक्षणै र्हीनैः पृथुप्रोथान् महाहनून् ।।**

**शुद्धान् दशभिरावर्त्तैः सिन्धुजान् वातरंहसः ।।'[5]**

---

१. म० भा० व० प० अ० ६४ श्लोक २

२. म० भा० व० प० अ० ६४ श्लोक ६

३. म० भा० व० प० अ० ६९ श्लोक २

४. म० भा० व० पा० अ० ६९ श्लोक ९

५. म० भा० व० प० अ० ६९ श्लोक १०, ११, १२

उपर्युक्तैः श्लोकैः नल द्वारा अश्वपरीक्षण सम्बन्धेऽश्वशास्त्रे कतिचित् पारिभाषिक लक्षणानां प्रयोगः कृतः । कृश-तेजोबल समायुक्त-कुलशीलान्वित ही-नलक्षणवर्जित-पृथुप्रोथ-महाहनु-दशावर्त्तविशुद्ध-सिन्धुज-वातरंहसादिसमस्तपदानि वाजिशास्त्रे यथावदुपलभ्यन्ते । अश्वशास्त्रानुसारेणैतेषां विवेचनं प्रस्तूयते—

यद्यपीह खलु नलचरितेऽश्वविषये प्रयोजितानां शब्दानां क्रमः वाजि-शास्त्रीयां परम्परां न पूर्णतया संस्पृशति तत्र कारणं केवलं काव्यमयत्वमेव प्रतिभाति । वाजिशास्त्रे प्रथमं घोटकस्यांगोपांग लक्षणानां वर्णनं क्रियते । अंग-वाचिनौ द्वौ शब्दौ उपर्युक्तेषु श्लोकेषु प्राप्येते 'पृथुप्रोथान्' "महाहनूनिति" च—

'वर्जितांल्लक्षणैर्हीनैः पृथुप्रोथान् महाहनून् ॥'[1]

लक्षणपरीक्षणस्य विषये च यत्कथितं तदित्थम्—

'अशुभैर्लक्षणैर्युक्ताः हया न वाहनोचिताः ।
अतो लक्षणमेवादौ तेषां व्याख्यामि देहजम् ॥
ओष्ठयोः सृक्विणोश्चैव जिह्वायां दशनेषु च ।
वक्त्रे तालुनि नासायां गण्डयोर्नेत्रयोस्तथा ॥
ललाटे मस्तके चैव केशकर्णपुटे तथा ।
ग्रीवायां केसरे चापि स्कन्धेवक्षसि बाहुके ॥
जंघायां जानुनोश्चाधः कूर्चे पादे तथैव च ।
पार्श्वयोः पृष्ठभागे च कुक्षौ कट्यां च बालधौ ॥
मेहने मुष्कयोश्चापि तथैवोरुद्वयेऽपि च ।
आवर्ते च खुरे पुच्छे गतौ वर्गे स्वरे तथा ॥
महादोषं त्यजेत्प्राज्ञश्छायायां गतिसत्वयोः ।
प्रधानस्यैव वाहानां लक्षणं यत्प्रतिष्ठितम्'।

अश्वशास्त्रे प्रदेशाध्याये प्रोथस्य विषय उल्लेख आप्यते—

'उत्तरोष्ठः प्रपाणाख्यं तदूर्ध्वं प्रोथउच्चते ॥'[3]

उत्तरोष्ठ एव प्रपाण इत्युच्चते तदूर्ध्ववर्तिन भागस्य प्रोथ संज्ञाभवति । अंग विशेषोऽयं कैर्लक्षणैः लक्षितं तथा किंच शुभाशुभं फलं प्रयच्छतीति विषये यदभिमतं वाजिशास्त्रस्य तदित्थं वर्तते—

---

१. म० भा० व० पा० अ० ६९ श्लो० १२

२. अश्वशास्त्र अंगलक्षण प्रकरण २, ३, ४, ५, ६, ७

३. अश्वशास्त्र प्रदेशाध्याय श्लोक ६

'आताम्रौ पूजितौ चोष्ठौ बालहीनौ मृदुत्वचौ ।
सुप्रोथस्तु नतः शस्तो विपरीतं विवर्जयेत् ।।'[1]

सुप्रोथ शब्दोऽस्मिन् श्लोके पृथुप्रोथस्यैव पर्यायत्वेन स्वीकर्तुं शक्यते । स्पष्टमेवेदं यल्लक्षणं व्यासेनोद्‌गीरितं पृथुप्रोथानिति तदुचितं वाजिशास्त्रानुरूपं चास्ति ।

**महाहनून्**

ओष्ठ फलकयोः पार्श्ववर्तिस्थानं हनुशब्देनाभिहितं भवति—

'चिबुकस्योपरिष्टात्तु अधरोष्ठः प्रकीर्तितः ।
चिबुकात्पार्श्व भागे तु हनुर्नामाभिधीयते ।।'[2]

**अध्यगच्छत्कृशानश्वान्** —

महाभारतीये नलचरिते वाजिनां कृतं एतल्लक्षणं शास्त्रानुसारि वर्तते । कृशता वाजिनां कृते गुणाधायिका भवति । स्थूलाश्वाः स्वशरीरेणैव भारायितत्तः सन्तः पन्थानं द्रुततयोल्लंघयितुं न प्रभवन्ति । पर्युपचित गात्रा एव घोटकाः तरसा तीव्रतमां गतिं प्राप्याश्ववाहस्य कार्यं साधयन्ति—

'अवक्रा मांसहीना च वाजि जंघा प्रशस्यते ।
शुभं स्मृतं सुवृत्तं च समं चैव नतोन्नतम् ।।
आयतं तुरगाणां च निर्मांसं प्रियदर्शनम् ।
सुगन्धं पूजितं वक्त्रं विपरीतं सुगर्हितम् ।।'[3]

**शुद्धान् दशभिरावर्त्तैः** —

प्रकृतलक्षणे आवर्त्तानां चर्चा वर्तते । आवर्त्ताः भिन्नप्रकारकाः भिन्न प्रदेशेषु स्थिताः पृथक्-पृथक् च फलानि यच्छन्ति । वाजिनां विशिष्टलक्षणाध्याये यत्राष्ट विधानि लक्षणानि प्रोक्तानि तत्रावर्त्ता अपि परिगणिताः—

इदानीं लक्षणं कृत्स्नं तुरंगाणां प्रवक्ष्यते ।
आवर्त्तवर्ण सत्वानि छायागन्ध गति स्वराः ।।
शरीरं चैव वाहानां प्रोक्तं लक्षणमष्टधा ।
शरीर गामि तत्सर्वं लक्षणं शुभनिन्दितम् ।।
श्रेष्ठ तस्मात्तुरंगाणां शरीरं त्वाद्य लक्षणम् ।
सत्वं ततो द्वितीयं च तृतीयो वर्ण उच्यते ।।

---

१. अश्वशास्त्र अंगलक्षण प्रकरण-श्लोक ६

२. अश्वशास्त्रम् प्रदेशाध्याय श्लोक ५

३. अश्वशास्त्रम् अंगलक्षण प्रकरण श्लोक १२ एवं २१

चतुर्थो तु गतिर्ज्ञेया पञ्चमस्तु स्वरस्तथा ।
गन्धः षष्ठस्तु विज्ञेयश्छाया चैव तु सप्तमी ॥
आवर्त्ताष्टमं ज्ञेयमेतल्लक्षणमष्टधा ॥'[1]

एतेषामावर्त्तानां शुद्धाशुद्धिविवेचनं प्रत्येकस्मायश्वारोहिणे आवश्यकमिति । यतोहि दुष्टावर्ताः वाजिवाहमेव विनाशयन्ति । आवर्तस्य लक्षणं निरूपयता नकुलेन भणितं – यथा प्रबल 'पवन वेगेन भूमौ तृणानि जलावर्तवत् मण्डलायितानि आवर्तयन्ति तथैवाश्वस्य रोमाणि शरीरे यत्रावर्तितानि अथ च मण्डलायितानि चक्रवादिव गोलकानीव च प्रतीयन्ते तत्स्थानानि तदाकारप्रकाराणि चावर्तेति संज्ञया व्यपदिश्यन्ते —

'अद्य तावत्प्रवक्ष्यामि पूर्वमावर्तलक्षणम् ।
यथा महीतले वायुश्चरन् वेगं तृणांकुरान् ॥
आवर्तरूपं कुरुते तथावर्ता हयोद्भवाः ।'[2]

दशावर्त्तानां कृते तेषां निश्चितेषु दशसु स्थानेष्वेव प्राप्तिर्भवति चेत्तर्हि ते आवर्ताः ध्रुवा इति कथ्यन्ते परं ते निन्द्याः —

'आवर्तास्तु तुरंगाणां ध्रुवानिन्द्याः शुभास्त्रिधा ।
तेषां ध्रुवा दशमताः स्थानानि च दशैव हि ॥
उरसि द्वौ शिरसि द्वौ तथैव रन्ध्रोपरन्ध्रयोर्द्वौ द्वौ ।
एकं ललाटमध्ये विद्यादेकं प्रपाणे तत् ॥
एते स्वस्थान स्थाः प्रदक्षिणाः सुप्रभाः शस्ताः ।
एतैर्विना तुरंगः स्वल्पायुः पापलक्षणस्त्वशुभः ॥'[3]

उपर्युक्तेषु दशषु भागेषु आवर्त्तस्थितिः न शुभा । अतएव भगवता व्यासेन समभिहितम्-शुद्धान्दशभिरावर्त्तैरिति ।

**वर्जितांल्लक्षणैर्हीनैः—**

हीनलक्षणैः समवेताः अश्वाः परित्याज्याः । परीक्षणानन्तरं नलः हीनलक्षणैः वर्जितानश्वान् स्यन्दने न्ययोजयत् । हीन लक्षणानि यथा—

'पुंसां प्राणहरा ये च महादोषतमास्तथा ।
नामतः फलतश्चैव प्रवक्ष्याम्यनुपूर्वशः ॥'

---

१. अश्वलक्षणोपोद्घाताध्याय-१-४

२. वही, आवर्ताध्याय-१

३. वही, आवर्ताध्याय-६-८

असितविषमदन्तः शुक्तिदन्तः कराली
तथा हीनदन्तो हयो भग्नदन्तः।
चतुर्तैश्च द्विजैश्चाथ एकारदन्तः
कुकुज्जानुहृत्काकसार्वाततश्च ॥
वृषभदशनयुक्ता ये च जाता दिने च
दीनाधिकांगैकमुष्कास्त्रिमुष्काः ।
तथा लम्बमुष्काः कपेः सन्निभौ यस्य
मुष्कौ भवेतां तथा रोमशौ बिन्दुभिश्चित्रितौ ॥

"नकुलमहिषकंकगृध्राखुनेत्रैकपिगेक्षणाः काकनेत्राहिनेत्राः तथा वानराक्षाः तथा सूकरोलूकमार्जारनेत्रा जडा मिश्रकेशाश्च सीमन्तकेशास्तथा गूढशार्दूल-राजीयुतो श्वोऽवगण्डः खरासारमार्जारपादा विना वालकेशै श्व जाता तथा प्रोथतात्वोष्ठजिह्वाशिरः सृक्वमेढ्राण्डकृष्णा हयाः अन्यवर्णेन शीर्षेण पुच्छेन वा प्रदीप्तपुच्छो ललाटलिप्तः श्वित्री तथा गौरखराभपृष्ठः नपुंसकश्च त्रिसरी च मौसली करोति वाहोहतमात्मपृष्ठगम् ॥"

प्रेतोपनीतास्तुरगाश्च ये स्युः
ये दग्धचर्मोपमगन्धिनश्च ।
हया द्विगर्भा बहुभिश्च गर्भैः
एते महान्तः कथितास्तु दोषाः ॥
भृंगी त्रिकर्णी द्विखुरस्तनी च
स्याल्लम्बनः पंचशफो जनी च ।
एते महादोषतमा हयानां
नृपं च राष्ट्रं च विनाशयन्ति ॥

एते सर्वे महादोषा महादोषतमास्तथा ।
नामतः कथिताश्चैव अधुना फलमुच्यते ॥
असितैर्दशनैर्वाजी भर्तुः सर्वार्थनाशनः प्रोक्तः ।
विषमदशनः सुतघ्नः शुक्त्याभैः क्षुत्पिपासकरः ॥
उभाभ्यां दन्तपालिभ्यां यस्यैका अधिका भवेत् ।
तं करालीति जानीयादधरोत्तरसंयुतम् ॥
अधरकराली भर्तुः क्षुब्दयकृच्चोत्तरेषु दशनेषु ।
यस्तु कराली वाजी भर्ता जीवेन्न वै तस्य ॥

विरला विषमा दन्ताः तीक्ष्णाग्रा यस्य वाजिनः ।
कुलश्रेष्ठं निहन्त्याशु स्वामिनं तुरगाधमः ।।
हीनैर्दन्तैर्वाजी मित्रघ्नो दारदूषणः कथितः ।
अधिकदशनः प्रजाघ्नः वृषभदशनश्च वर्जितस्तद्वत् ।।
दंष्ट्रास्त्वथवा दन्ता भज्यन्ते यदि वा पतन्ति वा श्वस्य ।
एकद्वित्रिचतुर्भिर्निनेर्भयं तत्र जानीयात् ।।
एकारतुल्यदशनो वाजी वित्तापहो भर्तुः ।
यत्फलमावर्तानां आवर्ताध्याये तत्फलं प्रोक्तम् ।।
दन्तैर्हयस्य तुरयैः भग्नैर्न तु शोभनं फलं तत्र ।
एवं लक्षणतन्त्रं मिश्रकमेतत्तु लक्षयेन्मतिमान् ।।
यदि पंचसमे मुष्कौ लक्ष्येते न स्फुटौ तुरगस्य ।
न च बडवामधिगच्छिति स षण्डवृत्तिः कुलान्तकरः ।।
अथ पंचमे तु वर्षे प्रवर्तिते श्वस्य गूढवृषणोऽसौ ।
समरगृहे स यस्य शुभावहे नैव राजवाहस्तु ।।
वृषणौ कठिनौ सूनोः प्रजातमुष्कस्य रोमशौ स्याताम् ।
सर्वक्षयकर्तासौ सदन्तजातो दिनेजश्च ।।
विषमा ह्रस्वास्तनवः स्थानेषु संस्थिता विवर्णाश्च ।
ईदृग्विधाश्च दशना अशुभा जातस्य सह दशनैः ।।
दिवाजातो रसक्षीणो न च स्थिरपराक्रमः ।
एतद्भवति विज्ञानं दिवाजातस्य वाजिनः ।।
न खरो नाति च पटुः सत्वसारविवर्जितः ।
अल्पायुर्न च तेजस्वी सन्ध्ययोरुभयोरपि ।।
तस्मात्सर्वेषु कालेषु रात्रिजातः प्रशस्यते ।
अधिकांगो हीनांगो न शुभावेतौ हयाधमौ स्याताम् ।।
एकवृषणात्रिमुष्कौ द्वावेतौ ससुतभर्तृघ्नौ ।
लम्बवृषणस्तु वाजी कपिमुष्को यस्य रोमशौ वृषणौ ।।
ये च स्युश्चित्रफला घ्नन्त्येते स्वामिनं सकुलम् ।
न कुलमहिषाभनेत्रा गृध्रोलूकाखुकाकनेत्राश्च ।।
मार्जारवानराक्षाः सूकरकोकाक्षिणो येऽश्वाः ।
एते सर्वे पापाः सर्वे शुभकारिणो हयाः कथिताः ।।

भर्तुश्च कलान्तकराः क्षीयन्ते चैव सङ्ग्रामे ।
अथ पिंगलैकनेत्रो युद्धे मृत्युप्रदो भर्तुः ॥
तस्मान्नगरे समरे स तुरंगो न प्रवेश्यस्तु ।
यः स्पर्धते तुरंगैरन्यैः स हयस्तु केवलं मूढः ॥
बंध वधं न बुध्येत्स जडोऽश्वस्तं संत्यजेद्दूरम् ।
सीमन्ती च जटी मुंजकेशाश्च मिश्रकेशाश्च ॥
एते वर्ज्याश्चैषां न नन्दति कदाचन स्वामी ।
शार्दूलाभो वाजी विभाव्यते राजिभिर्विवर्णाभिः ॥
यस्तुसवर्णोऽपि स्याद्वगण्डमेनं विजानीयात् ।
एष स्वामिनमाजौ क्षिप्रं हन्यादकार्यसिद्धिः स्यात् ॥
नगरे राष्ट्रे निवसेद्यस्य विनश्यत्यसौ राजा ।
खरसारः खरवर्णैस्तु मण्डलैर्यो भवेत्तथा हीनैः ॥
सकुलं भर्तुः खादति सपुत्रपशुबान्धवं वाजी ।
मार्जारचित्रचरणो भर्तुः कुर्यान्महद्भयं क्लेशम् ॥
केशैर्बालैश्च विना जाता अनपत्यतां कुर्युः ।
कृष्णप्रोथः क्षपयति स्वामिनमश्वः सबान्धवं ससुतम् ॥
ओष्ठौ यस्य तु कृष्णौ विज्ञेयः सोऽपि भर्तृघ्नः ।
कृष्णेन तालुना श्वः स्वामिनमात्मानमेव विषये वा ॥
क्षुत्तृट्दोषैर्युक्तस्त्यजति तमचिरात्स पापात्मा ।
यस्मिन्यस्मिन्वर्णे सकृष्णाजिह्वस्तुरंगमो भवति ॥
न भवति स शुभो भर्तुः लक्ष्मीसर्वार्थनाशकरः ।
कृष्णाण्डो वधबन्धो खड्गाद्युपद्रवं स्वामिनः कुर्यात् ॥
सृक्किशिरोमेढ्रेषु च ये कृष्णास्तेऽपि भर्तृघ्नाः ।
वर्णेनान्येन हयः शिरसा पुच्छेन चान्यवर्णेन ।
भर्तृघ्नः स तु समरे विवर्जितो भूतिमिच्छद्भिः ॥

यस्यैकवर्णस्य हयस्य दृश्यते
पुच्छस्य चाग्रे शितमन्यवर्णम् ।
प्रदीप्तपुच्छस्तुरगः स उच्यते
सुखादृतैर्वै परिवर्जनीयः ॥

अलाबुपुष्पोपमरोमजं हि
गुह्ये मुखे वा नयनेऽथवा स्थितम् ।

श्वित्रं सितं यस्य हयस्य दृश्यते
सस्वामिनं हन्ति सपुत्रबान्धवम् ।।
गौरी खरस्येव हयस्य यस्य
राजी विवर्णा त्वथ पृष्ठवंशे ।
तं विद्धि गौरीखरपृष्ठवंशं
त्यजेद्विदूरं हयलक्षणज्ञः ।।
मेढ्रं मृदुनिस्पर्शं यस्य बहिर्गच्छति हयस्य ।
अशुभं नपुंसकं तं विवर्जयेदिन्द्रवृद्धिसमम् ।।
सर्वश्वेतस्य शिरो यस्य भवेत्कृष्णवर्णमश्वस्य ।
स हयस्त्रिसरीनामा भर्तुः सर्वार्थनाशकरः ।।
आरोहकं च पृष्ठे वहति हतं तुरंगमो यो ऽसौ ।
प्रेतोपनीतमश्वं विवर्जयेत्सर्वदोषकरम् ।।
बालाः केशाश्च शिरो यस्य विदग्धचर्मगन्धाः स्युः ।
तस्य तुरगस्य भर्तुः नित्यं ज्वलनप्रियं भवनम् ।।
वर्ज्या तुरंगी ह्यमलप्रसूर्वा दद्याच्छिशुभ्यां सह तां द्विजभ्यः ।
भवेयुरेवं बहवोऽपि यस्या दूरं त्यजेत्तामपि तैः समेताम् ।।
ललाटदेशे शिरसि भ्रुवोर्वा कर्णस्य मूलेऽथ समुच्छ्रितं वा ।
खरोर्विषाणाग्रनिभं बलिर्वा आम्रास्थिवद्गोस्तनसन्निभं वा ।
स्याच्चर्मकीली त्वथ चार्बुदं वा शृंग तु हस्ताङ्गुलसन्निभं वा ।
स्वाद्यस्य तं श्रृंगिणमश्वमाहुः राज्ञः सदा राष्ट्रविनाशहेतुः ।।
कर्णाभ्याशे कर्णो यस्यान्यो जायते त्रिकर्णोऽसौ ।
नृपतिं बान्धवसहितं राष्ट्रं कृत्स्नं विनाशयेत्क्षिप्रम् ।।
गोशफतुल्यो द्विखुरी गोऽग्रखुरोपमस्तथोपखुरी ।
एतावपि भर्तृघ्नौ श्रृङ्गिसमावेव वाजिनौ स्याताम् ।।
गोस्तनसन्निभौ द्वौ मूत्रकोशस्य पार्श्वयोर्यस्य ।
अश्वः स्तनी स कथितः कृच्छ्रं राष्ट्रं विनाशयति ।।
जान्वोः कूर्चाभ्याशे खुराभ्याशे च यस्य पादोऽन्यः ।
सहयः पंचशफः स्यात्तस्य फलं शृंगिवद्ज्ञेयम् ।।
अजिनी मृगाजिनाभः पृष्ठस्कन्धांसजघनदेशेषु ।
यस्य तु तुरगस्य भवेदजिनी स तु निन्दितः प्राज्ञैः ।।

पृष्ठे भर्तृविनाशो भ्रातृवधः स्कन्धदेशे तु ।
अंसे पुत्रविनाशो जघने तु दारनाशनः कथितः ।।
एते महादोषतमाः सुरौद्रा शृंगादयः षट्कथिता मुनीन्द्रैः ।
ते वर्जनीया अशुभाः सदैव नृपं च राष्ट्रं च विनाशयन्ति ।।[1]

एते महादोषाः यद्यश्वशरीरे भवन्ति तदा न वाहकस्य क्षेममापादयन्ति ।

**कुलशीलसमन्वितान्—**

कुलशीलादि विवेचनं महर्षिभिः प्रत्येकेषां जीवानां मानवानां, नगानां, हयानां च कृतम् हयानामपि नानाविधानि कुलानि भवन्ति । यदुत्तममध्यमाधमेभ्यो विभजन्ते । हयानां चतुः पंचाशता कुलोपकुलानि वाजिशास्त्रज्ञैः निरूपितानि—

'.........................कुलानां लक्षणं शृणु ।
हयाः काम्बौज बाह्लीकाः वनायुज कुलोद्भवाः ।।
गान्धार कुलसम्भूतास्तथारट्ट कुलोद्भवाः ।
वाहेयाः सैन्धवाश्चैव तैत्तिकाश्चैव वाजिनः ।।
कुलजाश्चोपकुलजा मेचका ह्युपमेचकाः ।
कैवर्त्ताश्चार्जुनीयाश्च पार्वतीयास्तथैव च ।।
यौधेया यावनाश्चैव ये चान्ये ह्रास्वयावनाः ।
तुषाराः कादरेयाश्च पार्वतीयास्तथैव च ।।
आवन्त्याश्चापि काश्मीरा हया ये च सकाननाः ।
पार्वत्योत्तरमाद्रेयाः दाक्षिणेयाः प्रकीर्तिताः ।।
अन्तर्द्वीपोद्भवा वाह्रा कैकेयाम्बष्ठसंज्ञकाः ।
वासन्तिकाश्च सौवीरा दारदा सैरिकास्तथा ।
कैराता क्षुद्र कैराता मालवा विन्ध्यकास्तथा ।
कालिंगा मधुराश्चैव मानवाश्वास्तथैव च ।।
कौशल्याश्चार्जुनेयाश्च तथोपावृत्तिका हयाः ।
सौराष्ट्रश्चैव सौवीराः कौरवेयास्तथैव च ।।
पांचालाः पौण्ड्रकाश्चैव कुक्कुटा ह्रस्व कुक्कुटाः ।
तथा हैमवता ये च ये चोक्ता मगधोद्भवाः ।।

---

१. अश्वशास्त्र महादोषाध्यांयः श्लोक १-५४

चतुः पंचाशदश्वानां कुलान्येतानि लक्षयेत् ।[1]

**सिन्धुजान्**—

नल चरिते परीक्षणानन्तरं नलः यानश्वान् रथे समयोजयत् ते सिन्धुजा आसन् । हयानां वंश वर्णने सिन्धुजानां सैन्धवानां वा नाम परिगणितम् । सिन्धुजः सैन्धवश्चै तौ पर्यायवाचिनौ स्तः । सैन्धवानां वाजिनां प्रशंसनमन्येष्वपि काव्येषु कविवर्यैः प्रतिपादितम् । अश्वशास्त्रे सिन्धुजानां विषये लिखितं यद् -

**'सैन्धवकुक्षजा बलिनो,**
**गूढ जत्रु महोरसो महाप्रोथाः ।**
**तनुसूक्ष्मत्वग्गोला,**
**विलम्बमुष्काः सुमेढ्राश्च ।।'[2]**

इहापि महाप्रोथ इति शब्दः पठितः । अनेन—

पूर्वं व्यासेनोक्तं-पृथु प्रोथानिति स्पष्टं भवति । नलः सूक्ष्मपरीक्षणपूर्वकमेवाश्वान् पर्यचिनोत् ।

सिन्धुजानां सैन्धवानां वोपकुलमेकं तैत्तिजं भवति । निगदितमेव शालिहोत्रेणास्मिन्प्रकरणे --

'तत्र काम्बोजानामुपकुलं वनायुजमारट्टजं बाल्हीकाश्च । वनायुजानामुपकुलं गान्धाराः । आरट्टजानां वाहेयाः । सैन्धवानां तैत्तिजाः ।।'[3]

तैत्तिजानां विषयेऽश्वशास्त्रस्यपि कथनं—

**'दीर्घग्रीवा मुखा, स्युः,**
**स्थूलाक्षास्ते महाकायाः ।**
**तैत्तिज कुलजा जविनः,**
**स्थूल हनुग्रीवमेढ्र मुष्काः ।।'[4]**

तैत्तिजानां कृतेऽत्र स्थूलहनुरिति पदं प्रयुक्तं पदमदः पूर्वोक्तेन महाहनूमिति पदेन सह साधर्म्यभावहति । अतोऽनुमीयते यन्नलेन ये हयाः स्यन्दने तदा योजितास्ते सिन्धुज कुलोद्भवास्तैत्तिजोपकुलोद्भवाश्चासन् यतो हि पृथुप्रोथा-

१. कुललक्षणाध्यायः अश्वशास्त्रम्-श्लोक १-१०
२. वही, अश्वशास्त्रम्-श्लोक ३०
३. वही, अश्वशास्त्र-श्लोक ६४
४. वही, अश्वशास्त्र श्लोक-३१

निति महाहनूनिति पदद्वयेनोपस्थापितान्तः साक्ष्येन तथ्यमिदं समर्थ्यते ।

सिन्धुजान् तैत्तिजांश्च हयान् रथे निवेश्य नलः सहवार्ष्णेयार्तुपर्णाभ्यां कुण्डिनं प्रति जवेनाभिससार । घोटकानां गतिः क्षणानुक्षणोपचीयमाना द्रुततमाऽभूत् । अश्वानां गति लक्षणं निरूपयता परेणाश्वशास्त्रेण भणितम्—

**'शिखि, नकुल, वृषोष्ट्र, व्याघ्र सिंहेभतुल्या,**
**शरभ गति समाना वानराणां च तुल्या ।**
**मृगवरगति तुल्या सद्गतिर्यस्य सोऽश्वो,**
**जयसुखविभावानां वर्द्धनः पार्थिवस्यः ।।'[1]**

कुलशील समन्वितैरश्वैः संचालितं रथं मार्गे रयाद्गन्तुं प्रारेभे । गतित्वरेणाकाश उत्पतदिव अलक्ष्यत् स्यन्दनं तत् । चक्रौ स्तब्धाविव प्रतीयतुः । स्यन्दनगतिस्तु बहूनां कविवराणां वर्ण्यमभूत् । कालिदासेनापि समुद्गीरितं शाकुन्तले—

"निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।"[2]

महाकविः भासोऽपि स्वीये प्रतिमानाटके कौशलदेशं प्रति-प्रतिनिवर्तमानस्य भरतस्य रहंसा प्रधावमानं रथं वर्णितवान् । नलोऽपि सुबहु परीक्षितैरश्वैः नीयमानेन रथेन वार्ष्णेयार्तुपर्णाभ्यां सहायोध्या गतवान् । पथि स्यन्दनसंवाहन कौशलेन ऋतुपर्णवार्ष्णेयौ चकितचकितावभूताम् । वार्ष्णेयश्चिन्तां प्रपेदे कोन्वयं मातलिः शालिहोत्रो नलो वेति—

**'तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।**
**अयोध्याधिपतिर्धीमान् विस्मयं परमं ययौ ।।**
**रथ घोषं तु श्रुत्वा हयसंग्रहणं च तत् ।**
**वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ।।**
**किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।**
**तथा हि लक्षणं वीरे बाहुके दृश्यते महत् ।।**
**शालिहोत्रोऽथ किं नुस्यात्, हयानां कुलतत्वचित् ।**
**मानुषं समनुप्राप्तो वायुः परमशोभनम् ।।**
**उताहो स्विद् भवेद्राजा नलः परपुरंजयः ।**
**सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ।।**

१. गतिललक्षणाध्याय अश्वशास्त्रम् श्लोक-३

२. अभिज्ञान शाकुन्तलम्-कालिदास

अथवा यां नलो वेद विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥
अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च ॥
नायं नलो महावीर्यस्तद् विद्यस्तु भविष्यति ॥
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमान् ।
दैवेन विविधा युक्ताः शास्त्रोक्तैश्च विरूपणैः ॥
भवेतु मतिभेदो मे गात्रवैरूप्यतां प्रति ।
प्रमाणात्परिहीनास्तु भवेदिति हि मे मतिः ॥
ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सह वार्ष्णेय सारथिः ॥'[1]

महतावेगेन धावमानस्य रथस्योपस्थे स्थितस्यर्तुपर्णस्य स्कन्धवर्त्युत्तरीयकमनिलाघातेन पतितम् । ऋतुपर्णस्तु तद्वस्त्रं जिघृक्षुः रथस्थापनार्थं बाहुकमादिदेश परं बाहुकेनोक्तं तत्तु योजनपूर्वमेव पतितं न खलु गृहीतुं शक्यते—

'तथा प्रयाते तुरथे तदा सांगस्वरिर्नृपः ।
उत्तरीयमथापश्यत् भ्रष्टं परपुरंजयः ॥
ततः सत्वरमाणस्तु पटेनिपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥
निगृह्णीष्व महाबुद्धे हयानेतान् महाजवान् ।
वार्ष्णे यो यावदेतं मे पटमानयतामिति ॥
नलस्तं प्रत्युवाचाऽथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो न स शक्यस्त्वया पुनः ॥'[2]

अश्ववाहन कौशलं नलस्य नैजं वैशिष्ट्यमासीत् । महर्षिः व्यासो नलचरिते नायक द्वाराऽश्व परीक्षण प्रसंग व्याजेन वाजिशास्त्रस्य सूक्ष्मं विवेचनं प्रस्तुतवान् । तद्विवेचनं सारगर्भितं शास्त्रानुकूलं समीचीनं चास्ति । प्रत्येकस्मिन्क्षेत्रे व्यासस्यालोचनादृष्टिः सत्यानां प्रामाणिकानां च वर्णनानां प्रस्तुतीकरणोन्मुखासीदिति स्पष्टमेव । महर्षेः व्यासस्य सर्वेषु शास्त्रेष्वविहतगतिरासीद् । सम्पादितपरब्रह्मसाक्षात्काराणां ऋतम्भरा प्रज्ञान्वितानां महर्षीणां कृते निखिले ब्रह्माण्डे न वर्तते किमपि गुह्यमज्ञातं वा वस्तु, यदतीन्द्रियं भवेत् ।

---

१. म०भा० व०प० अ० ६९, श्लोक २२-३० व ३३

२. वही, अ० ७०, श्लोक २-५

अक्षशास्त्रम्

नमा मिमेथ न जिहीड एषा
शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ।[1]

श्रुतेरिगियं द्यूतासक्तस्य पुरुषस्य करुणविलपितं द्यूतस्य भीषणत्वं च सुसम्यक् प्रकाशयति । अक्षक्रीडायारियं प्रवृत्तिरावैदिककालादद्यावधि सामाजिकेषु यथावत् प्रचलिता संदृश्यते । द्यूते समासक्तो मानवः ततो निवर्ततितुं सहसा न शक्नोति तत्रैव पौनः पुन्येन व्यासक्तः सन्नतितरामवसीदति । ऋग्वेदेऽक्षसूक्ते कस्यापि द्यूतसमासक्तस्य कथनं वर्तते यदक्षानां शब्दं श्रुत्वैव मे मनोः नरीनृत्यति—

'प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्य-
मच्छान् ।[2]

परं दुरन्तपर्यवसायिनीमात्मनः स्थितिमवाप्य स रोदिति । अक्षसूक्ते प्रार्थना सम्पादिता यदक्षदोषा अस्मान् न स्पृशेयुरिति—

'यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ।'
अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ।।
मित्रं कृणुध्वं खलु मृडता नो मा नो घोरेण चरताभि
धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ
न्वस्तु ।।''[3]

---

१. ऋग्वेद-अक्ष-सूक्त-मण्डल १० सूक्त ३४

२. वही, सूक्त ३४ अक्षसूक्तम् मंत्र १

३. वही, सूक्त ३४ अक्षसूक्तम् मंत्र ११, १३, १४,

सूक्तेनानेन स्पष्टमेव यद् वैदिककालादेव द्यूतस्य प्रसरः वर्तते । ऋग्वेद इवाथर्ववेदेऽपि द्यूत सम्बद्धानि स्थलानि प्राप्यन्ते यथा—

'इदं तदध्ने अनृणो भवामित्वं पाशान्विचृतं वेत्थ सर्वानित्यादि० यद्धस्ताभ्यांच कृम किल्विषाण्यक्षाणांगणमुपलिप्समानाः ।। उग्रंपश्ये उग्रजिगोतदद्याप्सरसावनुदत्ता भृणं नः ।। ऊग्रं पश्येराष्ट्रभृत्किल्विषाणि यदक्ष वृत्तमनुदत्तं न एतवृणान्नोनणं मेत्संमानोनमस्य लोके अधिरज्जुंरायत् ।। इत्यादियददीव्यन्नृण महं कृष्णोमादस्यन्नुग्रउतसंगृणामि स एतान्पाशान्विचृतं वेदसर्वानिथपक्वेन सह संभवेम ।।''[1] एतेषां मन्त्राणां स्पष्टार्थस्तु भाष्य एव द्रष्टव्यः ।

अक्षास्तु परमात्मनः स्वरूपभूता इति स्वीकृत्यैव तेषां कृते 'शास्त्र' इति पदस्य व्यपदेशो भवति । गीतायां तु कथितमेव तत्र भवता भगवता श्रीकृष्णेन 'द्यूतं छलयतामस्मि'[2] । सत्यपि भगवतो नारायणस्य विभूतिमत्वेऽस्य शास्त्रस्याचार्यत्वेन पिनाकपाणिः भगवान् रुद्र एव स्मर्यते । स्कान्दे पुराणे द्यूतोत्पत्ति प्रसंगे वर्णनमिदमापतति यद् द्यूतविद्यानिर्माणानन्तरं पार्वत्यासह क्रीडाव्यापृतः हरः सर्वं लोकत्रयं ततोऽप्यधिकं नन्दी, भुजंग, गंगादिकान्याभरणान्यपि समुत्सर्जयन पराभूतवान् । अक्षक्रीडा सर्वमैहिकं पदार्थजातं ध्वंसयति । नलचरितं पाण्डव चरितं च द्यूतक्रीडादुष्परिपाकस्यैतिहासिकं पौराणिकं चोदाहरणं प्राप्यत एव—

**'पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।**
**द्यूतेन द्विषताविद्वान् कलत्राण्यपहारितः ।।'**
**नलश्च राजा द्यूतेन हते राज्यमहोदये ।**
**धर्मदारान् वने त्यक्त्वा परकर्माकरोत्प्रभुः ।।'[3]**

अक्षक्रीडायां दोषबहुत्वं वर्तते-यथा—

**'लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।**
**सत्समागविमच्छित्तिरसद्भिः सह वर्तनम् ।।**
**स्वल्पेऽप्यर्थे निराशत्वम् सत्यपि च शासता ।**
**प्रतिक्षणं क्रोधहर्षो विषादश्च प्रतिक्षणम् ।।'**
**प्रतिक्षणं च संश्लेषः साक्षिप्रश्नः प्रतिक्षणम् ।**
**अन्यावाचोंग दौर्बल्यं शास्त्रार्थ प्रत्यवेक्षणम् ।।**

---

१. अथर्व वेद षष्ठ काण्ड द्वादश अनुवाक ।

२. गीता अध्याय १० श्लोक ३६

३. क्रीडाकौशल्यम् श्लोक ११-१२

गूहनं मूत्रशकृतो क्षुत्पिपासोपपीडनम् ।
इत्यादीन्छास्त्रनिपुणा द्यूते दोषान्प्रचक्षते ॥'[1]

**अन्यच्चापि**—

'द्यूतादनर्थं संरंभो द्यूतात्स्नेहक्षयो महान् ।
पक्षाणां संहतानां च द्यूताद् भेदः प्रवर्तते ॥
द्यूतेनक्षीयते लक्ष्मी द्यूताद्धर्मो विनश्यति ।
एवं दोष बहुत्वेऽपि खेलनं परिकीर्तितम् ॥'[2]

सत्यपि दोषबहुत्वे त्रिगुणात्मिकया प्रकृत्या जायमानतया, शास्त्रत्वेन व्यपदिष्टतया चात्र क्रीडायां यत्किंचिद् गुणसम्प्रवाहोऽपि स्यादेवेति नितरां कल्प्यते। शास्त्रस्य प्रकिया तु विधिनिषेधात्मिका भवत्येव। वैदिकवाङ्मये तु द्यूतक्रीडाया परीवादनमेव दृश्यते परं पौराणिके वाङ्मये अक्षक्रीडां शास्त्रतया विविच्य तदनुसार खेलनेन सा क्रीडा क्रीडाकर्तुः कृते लाभप्रदा भवति। तत्र शास्त्रे कस्यांतिथौ, कस्मिन् दिने, कस्मिन् मुहूर्त्ते, कस्यां यौगिन्यां, कस्यां वेलायां, केन सह कुत्र, कथं चाक्षक्रीडा कर्तव्येति सर्वं महता सम्भारेण प्रतिपादितम्। एतेषां विषयाणां परिज्ञानाय समरसार, बृहज्जयोतिषार्णव नामकौ ग्रन्थौ विशेषतौ द्रष्टव्यौ।

नलचरितस्येतिवृत्ते यथा चरित नायकस्य नलस्य द्यूतक्रीडायां प्रवृत्तिः प्रदर्शिता वर्णिता तस्या अध्ययनेन ज्ञायते यन्नलेन कलिप्रभावेण शास्त्रविधिमुज्झित्वाक्षक्रीडा सम्पादिता यस्याः दुष्परिणामस्तस्य जीवने समागच्छत। इह पुनः प्रकरण प्रसंगप्राप्तत्वात् महाभारतीय नलचरितस्याक्षक्रीडापरकानिस्थलानि प्रदर्श्य अक्षशास्त्रोद्दिष्टैः प्रकारैः सह तेषां स्थलानां समीक्षात्मकमध्ययनं विधीयते।

शास्त्रस्य कृतेऽनुबन्ध चतुष्टयो नितरामावश्यकः। अक्षशास्त्रस्यानुबन्ध चतुष्ट्यस्तवधिकारि विषय सम्बन्ध प्रयोजनानीति विषये कथितं वर्तते यच्चतुर्वर्णानामत्राधिकारो, अक्षक्रीडा प्रकार निर्देशनमस्य विषयः, शिव-विष्णु-श्री कृष्णादिभिः सहास्य सम्बन्धो, बुद्धिकौशलवर्द्धनं चास्य प्रयोजनमिति—

'अनुबंधविना ग्रंथो न कैश्चिद् गृह्यते बुधैः ।
तस्मादादौप्रवक्ष्या मि ह्यनुबन्ध चतुष्टयम् ॥

---

१. क्रीडा कौशलयम् श्लोक ७-१०

२. वही, श्लोक १३-१४

**द्यूताद्यनेक क्रीडानां विषयः प्रतिपादनम् ।**
**प्रयोजनं च जगतो बुद्धि कौशल्य वर्द्धनम् ॥**
**संबंधोऽस्य शिवादिभ्यः पुराणाद्यंगमेव च ।**
**विप्रादि सर्व वर्णानामधिकारोऽत्र कीर्तितः ॥'[1]**

खेदविगमार्थं द्यूतेऽभिरुचिः प्रकीर्तिता । सांसारिक व्यापारारोहावरोहव्यग्र-मनस्कस्य जनस्य विश्रमार्थं द्यूतक्रीडा विनिर्मिता परं व्यसनत्वेनोपगृहीतेयं योगं क्षेमं च सर्वं वस्तु नाशयति । सनत्कुमार संहितायां भगवता शंकरेणोक्तम्—

**'कालक्षेपाय केषांचित् केषांचिद्धनवृद्धये ।**
**केषांचिद्धननाशाय पश्य द्यूतं कृतं मया ॥'[2]**

द्यूतोत्पत्तिप्रसंगे यदुपाख्यानं स्कान्दे आपतितं तदनुसारेणैकदा कार्तिक शुक्ल प्रतिपदायां प्रातःकाले कैलासस्थो भगवाञ्छिवः पाशद्वयात्मिकामक्ष क्रीडां जनयामास । परं पार्वत्या सह द्यूते सः सर्वस्वं भूर्भुवादिकं लोकत्रयं, कैलासं, पन्नगभूषणानि, चन्द्रकलां चापि परित्यजन् व्यथितवान् । खिन्नाः सः कैलासाच्चचाल । मार्गेऽवस्थितमन्यमनस्कं स्वपितरं शिवमवलोक्य स्वामिकार्तिकेयः प्रणाम पुरः सरं तद्दुःखकारणम पृच्छत् । शिवेनोक्तं यन्मया द्यूते सर्वस्वंमपहारितमधुना तव मातुराज्ञां मत्वा वने गच्छामि । स्कन्देन गदितं यद् भवान्मां द्यूतं प्रशिक्षयित्वा तत्र प्रेषयतु । शिवस्तथाऽकरोत् । प्राप्याक्ष हृदयं स्कन्दः गृहमागत्य द्यूते मातरं विजित्य सर्वं धनं हराय प्रत्यर्पयत् । परं मातृ भक्तेन गणपतिना पुनः द्यूतमाहूय स्कन्दं च पराजित्य तत्सर्वं वसु मात्रे प्रदत्तः । तदाशिवः हरिद्वार क्षेत्रे समागतवान् । उतस्तु नारदमुखा वृत्तान्तमिदमाकर्ण्य नारायण स्तमागत्य शिवं त्र्यक्षक्रीडानिर्माणार्थमादिदेश । विष्णोः मन्त्रणां निशम्य यदहं मेकाक्षो भविष्यामि तत्रस्थः रावण अवोचत्यत्वमेकाक्षो भविष्यसीति । तस्याप्रियं शिलष्टं च वचः श्रुत्वा हरिः शापमदात् मार्जरमुखोभवेति । तदनन्तर एव गणपतिस्तत्रागत्य पुनः गृहगमनार्थं पितरं प्रार्थयत् । परं तस्य वाहनो मूषकः मार्जारशब्दवत् रावणशब्दं श्रुत्वा पलायितः । पद्भ्यामेव गणेशः स्वपित्रा सह कैलाशमागतवान् । तदा विष्णु-नारद रावण-स्कन्द-गणेशादि समक्षै शिवाशिवयोः क्रीडा प्रारभत् ।

ततोऽक्षत्वेन परिवर्तितेन हरिणा हरये विजयश्री प्रापिता ।

---

१. क्रीडा कौशल्यम् श्लोक ३-५
२. वही, श्लोक १८

**स्कन्दपुराणे द्यूतोत्पत्ति कथा—**

शंकरस्तु तदा द्यूतं ससर्ज सुमनोहरम् ।
कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवत् ॥
प्रत्युवाच वचश्चेदं देवीं प्रति सदाशिवः ।
कालक्षेपाय केषांचित्केषांचिद्धनहेतवे ॥
केषांचिद्धननाशाय पश्य द्यूतं कृतं मया ।
तस्य त्वं कौतुकं पश्य भुवनं लापयाम्यहम् ॥
ऊह्येत्थं क्रीडितं ताभ्यां भवान्या च जितं तदा ।
पुनर्द्वितीयं भुवनं लापितं निर्जितं तया ।
पुनर्वृषं पुनश्चर्म पुनः पन्नगबन्धनम् ॥
शशिलेखां डमरुकं सर्वं तस्याप्यजीजयत् ।
निर्गतस्तु हरो गेहाच्चीरवल्कलधारकः ॥
गंगातीरं समागत्य तस्थौ चिन्तासमन्वितः ।
तस्मिन्क्षणे कार्तिकेयः खेलितुं च गतः क्वचित् ।
गंगातीराद्ययौ गेहमपश्यत्पथि शंकरम् ।
ईषत्क्रुद्धं विरक्तं च ननाम चरणौ पितुः ॥
तेनापि मूर्ध्नि चाघ्रातः पुत्र याहि गृहं सुखम् ।
तव मात्रा जितश्चाहं गच्छामि गहनं वनम् ॥

**स्कन्द उवाच**

कथं मात्रा जितो देवो वनं कस्माच्च गच्छसि ।
अहमप्यागमिष्यामि त्वत्पादौ सेवयाम्यहम् ॥

**शिव उवाच**

विजित्य तव मात्रा तु क्षणं न स्थेयमत्र वै ।
मम लोके तथेत्युक्तः क्वचिद् गच्छाम्यहं ततः ॥

**स्कन्द उवाच**

मा गच्छ त्वं महादेव द्यूतमार्गं प्रदर्शय ।
आनीयते मया जित्वा सर्वं तव धनाधिकम् ॥
शिवेनापि तथेत्युक्त्वा द्यूतमार्गः प्रदर्शितः ।
स्कन्दोऽपि गृहमागत्य पार्वतीं वाक्यमब्रवीत् ॥
देवि देवो गतः क्वासौ वृषभोऽत्रैव संस्थितः ।
शीर्षे च न विधुः कस्मान्मातः सत्यं वदाद्य मे ॥

**देव्युवाच**

स्वयमेव कृतं द्यूतं स्वयमेव पराजितः ।
स्वयमेव गतः क्रोधात्प्रार्थ्यतां स कथं मया ॥

**स्कन्द उवाच**

मया सह क्रीडितव्यं कथं तत्क्रीडनं त्विति ।
देव्यक्रीडत्तेन सार्द्धं ततः स्कन्देन निर्जितम् ॥
मयूरेण वृषस्तस्याः शक्त्या पन्नगबन्धनम् ।
वृषेणेन्दुस्ततोऽर्धांग तत्सर्वं तेन निर्जितम् ॥
कौपीनं निर्जितं चर्म गृहीत्वा तदुपाययौ ।
गंगातीरे यत्र शिवस्तत्रागत्य न्यवेदयत् ॥
ततो देवीसमीपे तु विघ्नराजः समाययौ ।
किमर्थं म्लानवदना देवि कुपितासि तद्वद ॥

**देव्युवाच**

मयाजितो महादेवः स तु गेहाद्विनिर्गतः ।
आयास्यति वृषाद्यर्थमिति संचिन्त्य संस्थितम् ॥
तव भ्रात्रा तु तज्जित्वा सर्वं तस्मै निवेदितम् ।
नायास्यत्यधुना देव इति चिन्तापरास्म्यहम् ॥

**गणेश उवाच**

देवि शिक्षय मां द्यूतं जेष्यामि भ्रातरं हरम् ।
आनयिष्यामि सामग्रीं यद्यहं स्यां सुतस्तव ॥
इति पुत्रवचः श्रुत्वा तस्मै द्यूतमशिक्षयत् ।
स गृहीत्वा पाशयुगं सारिकाः शीघ्रमाययौ ॥
पृष्ट्वा पृष्ट्वा यत्र देवाः स्कन्दो यत्र व्यवस्थितः ।
मयानीताविमौ पाशौ सारिकाः पट एव च ॥
क्रीड त्वं तु मया सार्द्धं देवस्याग्रे ममाग्रज ।
इति भ्रातृवचः श्रुत्वा ह्युमाध्यां क्रीडितं तदा ॥
मूषकेण बलीवर्दे मयूरं चाप्यजीजयत् ।
शिवस्य सर्वं विषयं स्कन्दस्य च तथैव च ॥
गृहीत्वा स तु विघ्नेशस्तत्काले पार्वतीं ययौ ।
पार्वत्यपि च संतुष्टा गणेशं वाक्यमब्रवीत् ॥

सम्यक् कृतं त्वया पुत्र नानीतोऽसौ महेश्वरः ।
सामदानादिकं कृत्वा आनयात्र महेश्वरम् ॥
तथेत्युक्त्वा गणेशोऽसौ समारुह्य च मूषकम् ।
त्वरितं चाययौ तत्र गृहं नेतुं महेश्वरम् ॥
ईश्वरस्तु समुत्थाय हरिद्वारं समागतः ।
नारदेरितवृत्तान्तो विष्णुस्तत्र समागतः ॥
त्र्यक्षां विद्यां कुरु शिव एकाक्षोऽहं भवाम्यहम् ।
रावणेन तथेत्युक्तं काणो भव जनार्दन ॥

**विष्णु रुवाच**

ओतुवत्पश्यसे मां त्वं तस्मादोतुर्भविष्यसि ।

**नारद उवाच**

देव सिद्धं महत्कार्यमायाति स गणेश्वरः ॥
ज्ञातु मत्र भवद्वृत्तं मूषकस्तस्य धर्ष्यताम् ।
इति श्रुत्वा नारदस्य वचनं रावणोग्रतः ॥
कुर्वन्माजार्रवच्छब्दं मूषकोऽसौ पलायितः ।
मूषकं त्यज्य गणपः शनैः शनैरुपाययौ ॥
जातो विष्णुः पाश इति दूरस्तद्विलोकितम् ।
प्रणिपत्य महादेवं विनयानतकन्धरः ॥

**गणेश उवाच**

आगम्यतां देव गेहं देवी मानपुरस्सरम् ।
यदि नायासि गेहं त्वं प्राणांस्त्यक्ष्यति चाम्बिका ॥
त्वय्यागते मया सर्वे कार्यमेतदुपायनम् ।

**महादेव उवाच**

एषा त्र्यक्षा महाविद्याधुना गणप निर्मिता ॥
अनया क्रीडते देवी आगमिष्ये गृहं तदा ।

**गणेश उवाच**

सर्वथैव क्रीडितव्यं देव्या नास्त्यत्र संशयः ।
आगम्यतां गृहं देव भ्रात्रा सह हि मा व्रज ॥
इति तस्य वचः श्रुत्वा ईश्वरः सगणो ययौ ।
नारदोप्याचगतस्तत्र महोतुरपि चागतः ॥
उपविष्टास्तु कैलासे देवास्तत्र समागताः ।
दृष्ट्वा देवीं प्रहस्यादौ महेशो वाक्यमब्रवीत् ॥

त्र्यक्षत्रिद्या महादेवि गंगाद्वारे विनिर्मिता ।
अनया जयसे त्वं चेत्तदा त्वं सत्यभाषिणी ।।

**देव्युवाच**

वृषादि तव सामग्री मयेयं लापिता शिवा ।
त्वया किं लाप्यते ब्रूहि दर्शयस्व सदोगतान् ।।
इतिश्रुत्वा वास्तस्याः प्रेक्षताधोमुखं हरः ।
तस्मिन् क्षणे नारदेन स्वकौपी नं समर्पितम् ।।
वीणादण्डश्चोपवीतमनेन क्रीडतामिति ।
सदाशिवः प्रसन्नोभूत्क्रीडनं संप्रचस्तुः ।।
यद्यद्याचयते रुद्रस्तथा विष्णुः प्रजायते ।
यद्यद्याचयते देवी विपरीतः पतत्यसौ ।।
स्वकीयाभरणाद्यं च महादेवेन निर्जितम् ।
स्कन्दालंकारिकं सर्वं पुनराप्तं हरेण च ।।
ततो गणेशः प्रोवाच वाक्यं सदसि गर्वितः ।
न क्रीडितव्यं हे मातः पाशो लक्ष्मीपतिः स्वयम् ।।
कृतो हरेण सर्वस्वं ते हरिष्यपि मत्पिता ।
इति पुत्रवचः श्रुत्वा पार्वती क्रोधमूर्छिता ।।
तथाविधां तामालोक्य रावणो वाक्यमब्रवीत् ।

**रावण उवाच**

पापिष्ठेनाद्य शप्तोऽस्मि दुर्दुरूढेन विष्णुना ।
अधर्मोऽयं न कर्तव्य इत्युक्तं तु मया यतः ।।

**देव्युवाच**

सर्वान्छिपिष्ये वत्साहं धूर्तानेतान् महाग्लान् ।
सामर्थ्यं पश्य मे पुत्र धर्मत्यागफलं तथा ।।
देव यस्मादबलया कपटं च कृतं त्वया ।
तस्मात्सदास्तु ते मूर्धा गंगाभारप्रपीडितः ।।
इतस्ततः कुचेष्टां त्वं यतः शिक्षयसे मुने ।
सदैव भ्रमणं ते स्यादेकत्र न भवेत्स्थितिः ।।
यतः कृता त्वबलया सह माया त्वया हरे ।
एषः वैरी रावणोयं तव भार्यां नयिष्यति ।।

हित्वा मां मातरं पुत्र बालकत्वं त्वया कृतम् ।
अतस्त्वं न युवा वृद्धो बाल एव भविष्यसि ।।
स्वप्नेपि ते सुखं स्त्रीणां न कदापि भविष्यति ।

**गणेश उवाच**

अनेन चौतुरूपेण मूषकोऽयं पलायितः ।
मध्ये मार्ग कृतं विघ्नं शपैनं राक्षसाधमम् ।।

**देव्युवाच**

यस्माद्विघ्नं त्वया दुष्ट कृतं मद्बालकस्य तु ।
तस्मादयं तव रिपुर्विष्णुस्त्वां यातयिष्यति ।।
इति देव्या वचः श्रुत्वा सर्वे संक्रुद्धमानसाः ।
देवीशापे मनश्चक्रुर्नारदो वाक्यमब्रवीत् ।।

**नारद उवाच**

कोपं कुर्वन्तु मा देवा नेयं शप्या कदाचन ।
सर्वेषामादिमायेयं यथायोग्यफलप्रदा ।।
नायं शाप इयं देवी स्मर्तव्या तु विचक्षणैः ।
गंगा सदा तिष्ठतु रुद्रमस्तके बलाद्रमां वा नयतु क्षपाचरः ।।
जाया हरस्याथ यथोचितामृतिश्चानंगतृष्णारहितः कुमारः ।
अहं भ्रमामि धरणीं न स्थातव्यं तपोधनैः ।।
सम्यग्देवि त्वया प्रोक्तं श्रृणिवदानीं वचो मम ।
सर्वक्रोधापनुत्यर्थं ननर्त मुनिपुंगवः ।।
कक्षानादं चकारोच्चैर्हाहाही हीति चाब्रवीत् ।
तस्य चेष्टां विलोक्याथ सर्वे हर्षमवाप्नुयुः ।।

**देव्युवाच**

भो भो विदूषकश्रेष्ठ कृतकृत्योसि नारद ।
वरं वरय भद्रं ते यद्यन्मनसि रोचते ।।

**नारद उवाच**

याचयन्तु वरं सर्वे को किं याचयिष्यति ।
सर्वे ते याचयिष्यन्ति यथाचेष्टं ब्रुवन्तु तत् ।।

**शिव उवाच**

सर्वं संक्षम्यतां देवि जितं यद्वृषभादिकम् ।
तन्ममास्तु द्यूतशतैर्न ग्राह्यं जगदम्बिके ।।

**देव्युवाच**

मास्तु त्वया समेनाथ स्वप्नेपि मम चान्तरम् ।
एतदेव वरं मन्ये क्रोधो माभून्ममोपरि ।।
कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवत् ।
जयो लब्धो मया त्वत्तः सत्येनैव महेश्वर ।।
तस्माद् द्यूतं प्रकर्तव्यं प्रभाते तच्च मानवैः ।
तस्माद्द्यूतं जयो यस्य तस्य संवत्सरं जयः ।।

**विष्णुरुवाच**

अहं यं यं करिष्यामि श्रेष्ठं वा लघुमेव वा ।
तथा तथा भवतु तद्वरमेनं वदाम्यहम ।।

**स्कन्द उवाच**

सदा मनस्तपस्यायां मम तिष्ठतु देवताः ।
कदापि विषये मास्तु देय एष वरो मम ।।

**गणेश उवाच**

संसारे यानि कार्याणि तदादौ मम पूजनात् ।
यान्तु सिद्धिं मम कृपां विना सिध्यन्तु मा क्वचित् ।।

**रावण उवाच**

वेदव्याख्यानसामर्थ्यं मम शीघ्रं भवत्विति ।
सदाशिवे सदा चास्तु भक्तिर्मेऽव्यभिचारिणी ।।

**नारद उवाच**

क्रुद्धाक्रुद्धाश्च ये केचिन्मूर्खामूर्खाश्च ये जनाः ।
मद्वाक्यं सत्यमित्येव मानयन्तु सहासुराः ।।
इत्युक्त्वान्तर्हिताः सर्वे देवा रुद्रपुरोगमाः ।
तस्मात्प्रतिपदि द्यूतं कुर्यात्सर्वोपि वै जनः ।।
द्यूतं निषिद्धं सर्वत्र हित्वा प्रतिपदं बुधाः ।
स्वस्योद्यमादिज्ञानाय कुर्याद्द्युतमतन्द्रितः ।।
विशेषवच्च भोक्तव्यं सुहृद्भिर्ब्राह्मणैः सह ।
दयिताभिश्च सहितं नेया सा च भवेन्निशा ।।
ततः संपूजयेन्मानैरन्तः पुरसुवासिनीः ।
पदातिजनसंघातान् ग्रैवेयैः कटकैः शुभैः ।।
स्वनामांकैः स्वयं राजा तोषयेत्स्वजनान्पृथक् ।
वृषभान्महिषांश्चैव युद्ध्यमानान् परैः सह ।।

गजानश्वांश्च योधांश्च पदातीन्समलंकृतान् ।
मंचारूढः स्वयं पश्येन्नटनर्तकचारणान् ।।
योधयेन्न त्रासयेच्च गोमहिष्यादिकं तथा ।
ततो पराह्णसमये पूर्वस्यां दिशि भारत ।।
मार्गपालीं प्रबध्नीयात्तुंगस्तंभेऽथ पादपे ।
कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्युताम् ।।
दर्शयित्वा गजानश्वान् सायमस्यास्तले नयेत् ।
कृते होमे द्विजेन्द्रैश्च बध्नीयान्मार्गशालिकाम् ।।
नमस्कारं ततः कुर्यान्मंत्रेणानेन सुव्रत ।
मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे ।।
विधेयैः पुत्रदाराद्यैः पूरयेहां वृतस्य मे ।
नीराजनं च तत्रैव कार्यं राष्ट्रजयप्रदम् ।।
मार्गपालीतलेनाथ यान्ति गावो वृषा गजाः ।
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः ।।
मार्गपालीं समुल्लंघ्य नीरुजास्तु सुखान्विताः ।
तस्मादेतत्प्रकुर्वीत द्यताद्यं विधिपूर्वकम् ।।
इति सनत्कुमारसंहितायां द्यूतविधिः ।।[1]

तस्मादेव दिनादारभ्य द्यूतशास्त्रस्य जीवितमभूत् । पौराणिकमाख्यानमिदं तुमनोरंजनार्थमेव सृष्टमिति प्रतीयते परं अक्षविद्यां शास्त्रत्वेन स्थापयितुं प्रवृत्त-मिदमाख्यानमितिधिया, अक्षशास्त्र सम्बन्धिनां केषांचित् विशिष्ट वचनानां संग्रहेण च प्रसंगोऽयं व्याप्रियते । अक्षशास्त्रपरम्परानुसारेण प्रत्येकस्मिन् सम्बत्सरे कार्तिक शुक्ल प्रतिपदायामेव द्यूत क्रीडायाः विधानं वर्तते । यतोऽहि तद्दिने द्यूतस्य जयपराजयाभ्यामागामिनि वर्षे फलाफलं कल्पितुं पार्यंते—

**कार्तिके शुक्लपक्षे तु प्रथमेऽहनि पार्वति ।**
**तस्मिन्द्यूते जयो यस्य तस्य सांवत्सरं जयः ।।[2]**

तत्र वर्तते ऐतिह्यमपि—

**आश्विने शुक्ल पूर्णायां रात्रौ जागरणे कृते ।**

---

१. सनत्कुमार संहिता स्कन्द पुराण उद्धृत --व्रतराजः पृष्ठ ६८-७३

२. क्रीडा कौशल्यम् श्लोक १९

**नालिकेलोदकं पीत्वा अक्षक्रीडां समारभेत् ।।**

**इषस्य शुक्लपूर्णायां द्यूताल्लक्ष्मीः प्रसीदति ।**[1]

अमावस्यायां रात्रौ नारिकेलीयं जलं निपीय रात्रि जागरणानन्तरमेव अपरेद्युः प्रतिपदायां द्यूतक्रीडायां प्रवृत्तो भवितव्यम् । अत्र जयस्य पराजयस्य च कामनां विहाय केवलं मनोरंजनार्थमेव क्रीडा विधातव्या ।

अस्य शास्त्रविधेः पूर्णोपेक्षा द्यूतव्यसनिनि नले दृश्यते । नलचरितानुसारेण यावदेव पुष्करः द्यूतार्थं नलमावाह्यति तावदेव सद्यो नलः विधिमतिक्रम्य दूत-क्रीडायां संरतो जातः—

**आसाद्य तु नलं वीरं पुष्करः परवीरहा ।**

**दीव्यावेत्यब्रवीद् भ्राता वृषेणेति मुहुर्मुहुः ।।**

**न चक्षमे ततो राजा समाह्वानं महामनाः ।**

**वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत् ।।**[2]

फलतः शास्त्रीय नियमापलापेन नलस्य सर्वस्वमपहृतम्—

सर्वथा सहधर्मचारिण्या पत्न्या सहैव द्यूतक्रीडा सम्पादनीयेति अक्षशास्त्रे विधानम् । श्रीमद्भागवतस्यापि द्वयोः स्थलयोऽरस्य नियमस्य परिपालनं दरी दृश्यते, एकत्र उषोऽनिरुद्धयोः प्रसंगे यथा—

**दीव्यन्तमक्षैः प्रिययाभिनृम्णया,**

**तदंगसंगस्तनकुंकुमस्रजम् ।**

**बाह्वोर्दधानं मधु मल्लिकाश्रितां,**

**तस्याग्र आसीत्तमवेक्ष्य विस्मितः ।**[3]

अपरत्र भगवान् कृष्णः स्वकीय धर्मपत्न्या रुक्मिण्या सह द्यूतपाशं क्रीडति—

**ततोऽन्यदा विशद्गेहं कृष्ण पत्न्याः स नारदः ।**

**योगेश्वरेश्वर स्यांग योगमाया विदिस्सया ।।**

**दीव्यन्त मक्षैस्तत्रापि प्रियया ··· ··· ···।**[4]

पत्न्या सह द्यूते व्याप्रियमाणे सति पुरुषे तदुपजायमानस्य धननाशस्य दुराशंका समाप्यते अतः शास्त्रमेवानुसर्तव्यम् ।

---

१. क्रीडा कौशलाम् श्लोक, २१

२. म० भा० व० प० अ० ५६ श्लोक ७-८

३. भागवत स्कन्ध १० अध्याय ६२, श्लोक ३२

४. वही, ६९, १९-२०

**द्यूते प्रवर्तनात्पूर्वं द्वादशसंख्याकानां बलानां योगो द्रष्टव्यः ।**

द्वादश बलयोग पूर्वकं योहि पुरुषः द्यूते रमते स ध्रुवमेव जयत इति अक्षशास्त्रीयो नियमः —

**स्वरच्छायानिलार्केन्दु योगिनी राहुभूबलैः ।**
**अन्यैश्चद्यूतमाबध्नन् जयत्येव धनं बहु ॥**[1]

द्यूते स्वरबलं, छायाबलं, वायुबलं, सूर्यबलं, चन्द्रबलं, योगिनी बलं, राहु बलं, राहु युक्त योगिनी बलं, भ-बलं, कालार्द्ध प्रहर बलं, कालहोरारहित होराबलं तथा शनिकालबलं द्वादश बलानामेतेषां योगः सर्वथा विमर्शनीयः ।

महाभारतीये नलचरिते द्यूत प्रसंगे पुण्यश्लोकस्य नलस्य पुष्करस्य च द्यूतक्रीडायाः या दृशं वर्णनं महर्षिणा वेदव्यासेनोपनिबद्धं तस्यावलोकनेनेदं परिज्ञायते यदस्यां क्रीडायां द्यूतशास्त्रीयनियमानामुपेक्षा विहिता । नलेन पुष्करस्याह्वानं द्यूतक्रीडार्थं श्रुतं तत उभौ द्यूतक्रीडायां प्रवृत्तौ । सांसारिकानुभवानुसारेणेदं नितान्तं सत्यं यत्प्रत्येकस्मिन् सत्पुरुषे कश्चित् दोषोऽपि सम्भाव्यत अथ च प्रत्येकस्मिन्नसत्पुरुषे कश्चित् गुणोऽपि संभाव्यते । द्यूतस्य प्रत्याकर्षणं नलस्य चरित्रे न्यूनत्वमुत्पादयति यद्यपीदं खलु सत्यं यत्कथा प्रसंगे कलिव्यामोहितो नल अक्षक्रीडा समासक्तोऽभूदथ च स तत्र पराजितः । किन्तु इत्थमपि स्पष्टं प्रतीयते यद्राज्ञः नलस्य द्यूतं प्रत्यनुराग आसीत् । नल चरितारम्भएव "अक्षप्रियः" इति पदेनास्य परिचयः कविनादत्तः—

**ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।**
**अक्षप्रियः सत्यवादी महानक्षौहिणी पतिः ॥**[2]

अक्षप्रिय इत्यस्मात्कारणादेव पुष्करस्याह्वानस्यावहेलनं नाकरोन्नल अथ चाविचार्य्यैव क्रीडां प्रारभत् । शनैः शनैः पणेपु नलेन सर्वं न्यस्तमपहारितं च –

**हिरण्यस्य सुवर्णस्य यान युग्मस्य वाससाम् ।**
**आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ।**
**तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।**
**निवारणे भवच्छक्तो दीव्यमानमचेतसम् ॥**[3]

नलस्य धन-राज्य-बलानि क्रमशः द्यूत क्रीडायामपगतानि । प्रेष्ठया पत्न्या, स्वीयैरमात्यैः प्रजाभिश्च निवारितोऽपि सः द्यूत क्रीडातः नैव निवृत्तः । उन्मत्त

---

१. क्रीडा कौशलयम् ८४

२. म० भा० व० प० अ० ५० श्लोक ३

३. वही: ५६ श्लोक, ९-१०

इव पराजितोऽसौ द्यूते कर्मणि निरतोऽभूत् यतः द्यूतस्य पराजय एव प्रियः। नलस्येयं द्यूतक्रीडा कति मासान् यावत् प्रचचाल—

**तथा तद्भवद्द्यूतं पुष्करस्य नलस्य च।**
**युधिष्ठिर बहून मासान् पुण्यश्लोकस्त्वजीयत् ॥**[1]

उपर्युक्तेन पद्येन स्पष्टं भाति यन्नलेन शास्त्रविधिमुत्सृज्य बहुकालं यावत् द्यूतक्रीडा कृता। अक्षशास्त्रे द्यूतक्रीडा विषय उल्लेखोऽयं दृश्यते यदेकस्मिन्नेव दिने द्यूतक्रीडा करणीया—

**द्यूतं निषिद्धं सर्वत्र हित्वा प्रतिपदं बुधाः ॥**[2]

कार्तिके मासि शुक्ले पक्षे प्रतिपदि तिथौ द्यूतक्रीडा प्रशस्ता। पुराणेषूपर्युक्त तिथेरतिरिक्तमाश्विनमासस्य पूर्णिमायां तिथावपि द्यूतक्रीडायाः विधानं दृश्यते। व्रतानुष्ठानादिनिर्णयार्थं प्रमाण भूते ग्रन्थे धर्म सिन्धौ उल्लेखोऽयमाप्यते यदाश्विन पौर्णमास्यां द्यूतक्रीडा करणीया। अस्यां शरद्पूर्णिमायां कोजागर व्रतमनुष्ठीयते कोजागर व्रतस्य विषये धर्मसिन्धावित्थमुक्तम्—

अथ लक्ष्मीन्द्रयोः पूजनं जागरणमक्षक्रीडा च विहिता। तत्र पद्मासनस्थां लक्ष्मींध्यात्वाऽक्षतपुञ्जे ॐ लक्ष्म्यै नमः इत्यावाहनादिषोडशोपचारैः संपूज्य—

**नमस्ते सर्व देवानां वरदासि हरि प्रिये।**
**या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥**

इति पुष्पांजलिं दत्वा नमेत्—

**चतुर्दन्त समारूढो वज्रपाणिः पुरन्दरः।**
**शचीपतिश्च ध्यातव्यो नानाभरण भूषितः ॥**

इति ध्यात्वाऽक्षत पुंजेआदाविन्द्राय नम इति संपूज्य—

**विचित्रैरावतस्थाय भास्वत्कुलिशपाणये।**
**पौलोम्यालिंगितांगाय सहस्राक्षाय ते नमः ॥**

इति पुष्पांजलिं दत्वा नमेत्—

**नारिकेलोदकं पीत्वा अक्ष क्रीडांसमारभेत्।**
**निशीथे वरदा लक्ष्मीः कोऽजागर्तीति भाषिणी ॥**
**तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः।**[3]

---

१. म. भा. व. प. अ., ५६, श्लोक १८

२. व्रतराज, श्लोक ७७ पृष्ठ ७२

३. धर्म सिन्धु पृष्ठ २०५-२०६

लिंग पुराणेऽपि शरद पूर्णिमायां द्यूत विधानं दृश्यते—

**आश्विने पौर्णमास्यां तु चरेज्जागरणंनिशि ।**
**कौमुदी सा समाख्याता कार्यालोकैर्विभूतये ।।**
**कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।**
**सुगन्धिर्निशि सद्वेष अक्षैर्जागरणं चरेत् ।।**[1]

तिथिद्वयं विहायाक्षक्रीडाया: समाश्रयणं कदापि च करणीयम् । नल-चरितोपवर्णितायामक्षक्रीडायां भगवता व्यासेनास्मिन्विषये न किमप्युट्टंकितं यन्नलेन लक्ष्मीन्द्र विष्णुशिवादीनां पूजनादिकं द्यूत क्रीडात: पूर्वं सम्पादितं न वा । द्यूत क्रीडाया: का तिथिरस्याप्युल्लेखो न विद्यते । महर्षिणा व्यासेन "बहून-मासान्" इतिशब्दस्य व्यवहारं कृत्वा द्यूतक्रीडाया अनियमितताया: संकेतो-विहित: । नल: अश्व विद्यातत्वज्ञ: किन्तु अक्षप्रियत्वात् अक्षविद्यायास्तत्वज्ञो नासीत् । अक्षविद्याया: स ज्ञानं विना नल: सर्वस्वमपहारितवान् । अक्षशास्त्रा-चार्यत्वेनायोध्याधिपते: ऋतुपर्णस्य वर्णनं नलचरिते समायाति । ऋतुपर्ण: "अक्षहृदयज्ञ:" इति विशेषणेनोद्बोधित: । कर्कोटकनागेनापि नलाय ऋतुपर्णस्य पार्श्वे गन्तव्यमिति परामर्शो दत्त:—

**गच्छ राजन्नित: सूतो बाहुकोऽहमिति ब्रुवन् ।**
**समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ।।**[2]

ऋतुवर्ण: अक्षेषु परमनिपुण: । यदा दमयन्त्या: पुन: स्वयंवरस्यवार्तामाकर्ण्य ऋतुपर्ण: नलेन सह विदर्भं ययौ तत्र मार्गे नलस्याश्व संचालनकौशलमवलोक्य ऋतुपर्णेन स्वीयाया अक्षविद्याया: प्रदर्शनमपि कृतं—

**तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।**
**ममापि सूत पश्य त्वं संख्याने परमं बलम् ।।**[3]

अक्षक्रीडा विषयेऽक्षशास्त्रे काल, घट, पल, होरा, द्वादश वलादि विचार: गणितेन सहसम्बद्ध: । गणितस्य श्रेष्ठ: ज्ञाता गणक एव सम्यक्रूपेणाक्षहृदयं वेत्तुं समर्थ: । अक्षक्रीडाया: कुशल: कर्ता कुशल: गणितज्ञ: स्यादयं प्रथम: प्रति-बन्ध: । अथ च विजय प्रदायकानि यंत्र तंत्राणि सम्यक्प्रकारेणावबोधनीयानि । विजयदायको मन्त्रोऽपि वेदनीय: । अक्षक्रीडारम्भात्पूर्वं चन्द्रादि बलं विचार्य एव निश्चयेनास्माकं विजय एतदर्थमौषधीनां बन्धनं मंत्रादि जपश्चकरणीय: ।

---

१. धर्म सिन्धु पृष्ठ २०५

२. म० भा० व० प० अ० ६३, श्लोक १६

३. वही, ७०, ७

अस्मिन्विषये विशेषाणां विधानानामुल्लेख: क्रीडाकौशल्यनामके ग्रन्थे दृश्यते । औषधप्रयोगविषये निम्नांकितानि पद्यानि दृष्टव्यानि—

**कृतांजलिः सप्तभागा वध्या कर्कोटिकात्रिभा ।**
**दशभागारुद्रजटा नवभागा बिभीतका ॥**
**एतैरेकत्रसंपिष्टैस्तेनलिप्तकरो नरः ।**
**द्यूते विजयमाप्नोति परार्थहरणक्षमः ॥**
**मार्गशीर्षस्यपूर्णायां शिखिमूलं समुद्धरेत ।**
**बाहौ शिरसि वा धार्यं क्रीडायां विजयो भवेत ॥**
**गृहीत्वा पुष्य नक्षत्रे श्वेत गुंजा सुमूलकम् ।**
**धारयेद् दक्षिणे हस्ते द्यूतकार्ये जयो भवेत् ॥**
**धत्तूरं करवीरं च अपामार्गस्य मूलकम् ।**
**हरिताल समायुक्तं तिलकं सुदिने कृतम् ॥**
**अजाक्षीरेण संपेष्य रणेराजकुले जयः ।**
**विवादे द्यूतकार्ये च नान्यथा शंकरोदितम् ॥**[1]

मंत्र प्रयोग विषये जयलाभाय —

**ॐ क्लीं ह्रीं रणा हुं फट् स्वाहा**
**अयं क्रीडायां जय प्राप्ति करो मन्त्रः ।।**
**लक्षं पुरश्चरणम् ।**

अथवा

**ॐ नमो विश्वरूपाय अमुकेन विजयं कुरु स्वाहा ।**

अस्य मन्त्रस्य पर्वणि—

**चतुर्दशी अष्टमी चैवअमावास्या चपूर्णिमा ।**
**पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेवच ॥**

दश सहस्र संख्यक जपेन सिद्धिः यन्त्राणां प्रयोगेणापि द्यूते विजयः । अक्ष शास्त्रे एवं विधानां कतिपय यंत्राणामप्युल्लेखो दृश्यते यानि यन्त्राणि विलिख्य क्रीडायां जयलाभोपजायते ।

अक्षविद्यानुसारेण यद्यपीयं द्यूतक्रीडा आर्थिकरूपेण लाभदायिनी भवितुं शक्यते तथापि द्यूतशास्त्रे अस्याः सर्वथानिषेध एव विहितः । मन्वादिस्मृतिष्वपि द्यूतक्रीडाया विषये कथितम्—

---

१. क्रीडा कौशल्यम् श्लोक १३७-१४२

द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ।
राजांतकरणावेतौ द्वौ दोषौ परिकीर्तितौ ॥[1]

द्यूतं समाह्वयं चोभावपि द्यूतक्रीडा प्रकारौ। द्यूतक्रीडायां निष्प्राण पदार्थानां धनादिकानां पणः क्रियते, समाह्वये पुनः सचेतसां पशुपक्षि मानवानां पणः क्रियते । राजा उभयोः प्रकारयोः क्रीडनयो दृढ़तया दमनं कुर्यात्—

प्रकाशमेतत् तास्कर्यं यद्देवन समाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ।
तान्सर्वान्घातयेद्राजा शूद्रांश्चद्विजलिंगिनः ॥
एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्न तस्कराः ।
विकर्म क्रियया नित्यं बाधते भद्रिका प्रजाः ।
द्यूतमेतत्पुराकल्पे वृष्टं वैरकरं महत् ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥[2]

अक्षशास्त्रस्य विवेचनं वेत्तुं वृहज्जयोतिषार्णव, स्कन्द पुराणं, लिंग पुराणं, समरसारः, गणपति, हयग्रीव प्रश्न शकुनावली, मिताक्षरा प्रभृतयः ग्रन्थाः दृष्टव्याः ।

अक्ष क्रीडायाः कोऽपि प्रकारः स्यात् स वारणीय एव । द्यूतस्य विधानं नैव कर्तव्यं यतः श्रुतिप्रमाणं—यत् कितवस्य पत्नी दुर्दशामनुभवति—

स्त्रियं॑ दृष्ट्वाय॑ कित॒वं त॑ताप॒ान्येषां॑
जा॒यां सुकृ॑तं च॒ योनि॑म् ।
पू॒र्वाह्णे अश्वा॑न् युयु॒जे हि ब॒भ्रून्त्सो
अ॒ग्नेरन्ते॑ वृष॒लः प॑पाद ॥[3]

द्यूतासक्तो नलः इदमेव दृश्यं समवलोकयामास सन्तापं च प्राप—

स सन्नाज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥

---

१. मनुस्मृति अध्याय ९ श्लोक २२१
२. क्रीडा कौशल्यम् श्लोक ६७६-६७९
३. ऋग्वेद १०.३४ मंत्र ११

**किनु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।**
**किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥**
**मामियं ह्यनुरक्तेदं दुःखमाप्नोति मत्कृते ।**[1]

अतएव पौनः पुन्येन द्यूतस्य निषेधोविहितः । भगवत्याः श्रुतेरपि निर्देशः—

**"अक्षैर्मादीव्य"** इति ।

## नलचरिते आचार शास्त्रम्

भारतीय संस्कृतौ आचारसंहितानां सूक्ष्मातिसूक्ष्मं विवेचनं सम्भवतः यादृशमवलोक्यते तादृशं विवेचनमन्येषु पुरातन संस्कृति प्रतिपादकेषु ग्रन्थेषु नैवोपलभ्यते । भारतीय संस्कृतिरेवाचारसंस्कृति प्रधाना इति कथने न कापिविप्रतिपत्तिः । आजन्मतः, अपितु जननी जठराशये संस्थितादपि पूर्वं यावज्जीवनं च द्विजातीनां जीवितं संस्काराणामनुष्ठानेनैव पूर्णं जायते । समस्तैः संस्कारैः संस्कृतं जीवनमेव जीवनम् । जीवनस्य प्रत्येकः श्वासोच्छ्वासः आचारशास्त्रीय नियमैराबद्धः । सदाचार एव भारतीय जीवनस्य वास्तविकं स्वरूपम् । आर्य मनीषिणां ध्येयोऽयं यत् पवित्रतायाः रक्षणपूर्वकं जीवनस्योदात्तमूल्यानां रक्षणं शक्यमिति । जीवनेपुरुषार्थ चतुष्टयस्योपलब्धये सदाचार एवाश्रयणीयः । अतएवोक्तमभियुक्तैः—

**शौचे यत्नः सदाकार्यः शौचमूलो द्विजः स्मृतः ।**
**शौचाचारविहीनस्य समस्तं कर्म निष्फलम् ॥**[2]

धर्माचरणस्य प्रथमं सोपानं शौचम् । अत्र सदाचारस्य व्याख्यानं नास्माकं लक्ष्यमपितु इत्थमेव ध्येयमस्ति यन्नलचरिते कतिपयानां स्थलानामवलोकनेनेत्थं प्रतीयते यत् चरितनायकेन राज्ञा नलेन प्रमाद वशात् विवाहोत्तर जीवने कतिपयस्थलेषु आचारशास्त्रस्योल्लघनं विहितम् । फलतः धर्मच्युतिना स जीवने भूतपूर्वं कष्टमवाप्तवान् । नलचरिते वर्णितेषु तत्तत् स्थलेषु आचार शास्त्रीयनियमानां समीक्षात्मकसध्ययनमत्र क्रीयते ।

आचार संहिताया उल्लंघनेन जीवनं कंटकायितं भवत्येवेत्यवश्यंभावि । अतएव कदापि आचारपरित्यागो न कर्तव्यः । महाभारतस्योद्योगपर्वणि एक चत्वारिंशदध्यायादारभ्य षडचत्वारिंशदध्याय पर्यन्तं सनत्सुजात पर्व नामकमेकं प्रकरणमस्ति । यत्र धृतराष्ट्रस्य सनत्सुजातस्य च प्रश्नोत्तराणि संकलितानि । धृतराष्ट्रोऽपृच्छत् कः मृत्युरिति ? सनत्सुजातेनोत्तरितं—

---

१. म० भा० व० प० अ० ५६ श्लोक ६-११

२. बृहन्नारदीय पुराणम् अ० २५ श्लोक ८

उभे सत्ये क्षत्रियाद्यप्रवृत्ते, मोहो मृत्युः सम्मतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि, सदाप्रमादममृतत्वं ब्रवीमि ॥[1]

प्रमाद एव मृत्युः । आचारस्योल्लंघनं दारिद्र्यं प्रयच्छति । असदाचरणेनापवित्रितं जीवनं न वेदा अपि पावयन्ति—

आचारहीनं न पुनन्ति वेदाः,
यदप्यधीताः सहषड्भिरङ्गैः ।
छन्दांस्येनं मृत्यु काले त्यजन्ति,
नीडं शकुन्ता इव जातपक्षाः ॥

पुण्यश्लोकेन नलेनापि स्वकीये जीवने प्रमादं विहितम् । प्रमादस्य दुष्परिणाम एव तेनानुभूतम् । नलचरिते उल्लेखोऽयं महर्षिणा व्यासेन कृतं यद् विवाहकालानन्तरं राजा नलः स्वकीयया धर्मपत्न्या सह द्वादश वर्षाणि यावत् धर्मानुष्ठानं कुर्वत् सानन्दं जीवितं यापयामास । गृहस्थ धर्मस्य फलानुरूपं सुतमिन्द्रसेन नामकं सुतामिन्द्रसेना नाम्नीं चालभत् । इयत्कालपर्यन्तं जीवनचक्रमनवरतरूपेणाचारपूर्वकं व्यतीतम् । द्वादशवर्षानन्तरमेकस्मिन् दिवसे प्रमादवशात स एकां त्रुटिमकरोत् । तस्य शत्रुः कलिः प्रतीक्षमाण एवासीत् । छिद्रान्वेषणं सम्प्राप्य कलिः नलस्य शरीरे स्वीयं प्रभावमदर्शयत् । एकस्मिन् दिवसे सायंकाले नलः लघुशंकां कर्तु ययौ । प्रत्यागत्य पाद प्रक्षालनमकृत्वैव सायंकालिकं सन्ध्यावन्दनार्थमुद्यतोऽभूत । फलतस्तस्य शरीरे कलिः प्राविशत्—

अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥
कृत्वा मूत्रमुपस्पृश्य संध्यामास्ते स्म नैषधः ।
अकृत्वा पादयोः शौचं तत्रैवं कलिराविशत् ॥[2]

शौचाचारस्यात्र स्पष्ट रूपेणोल्लंघनं दरीदृश्यते । शौच प्रकरणे आचारशास्त्रीया व्यवस्था ईदृशी उपलभ्यते—

गृहीत शिश्न उत्थाय शौचार्थं मृत्तिकां गृहेत् ।
गन्धलेपक्षयकरं शौचं कुर्यात्प्रयत्नतः ॥
अनुच्छिष्ट प्रदेशे तु शौचार्थं मृत्तिकां गृहेत् ।
शौचं कुर्यात्प्रयत्नेन नादायान्तर्जले मृतम् ।
लिंगे मृदेका दातव्या तिस्रो बा मेढ्योर्द्वयम् ॥[3]

---

१. म० भा० उद्योग पर्वान्तर्गत सनत्सुजातीय पर्व अ० १ श्लोक ४

२. म० भा० व० प० अ० ५६ श्लोक २-३

३. बृहन्नारदीय पुराण अ० २५ श्लोक १०-११-१२

शौचाचारस्योपर्युक्तं विधानं पुण्यश्लोकेन नलेन नैव परिपालितम् गृहस्थस्य कृते एव शौचस्यापेक्षा नापि तु अन्येषामाश्रमस्थानां कृते—

**एवं शौचं प्रकुर्वीत गन्ध लेपापनुत्तये।**
**एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणाम्॥**[1]

शौचाचारस्यास्मिन्प्रकरणे विभिन्नेषु स्मृतिग्रन्थेष्वनेकानि प्रमाणानि सन्ति। इह निम्नांकिताः सन्दर्भाः दृष्टव्याः—

**पंचापाने मृदश्चैका लिंगेवामद्धरे दश।**
**करयोरुभयोः सप्त गृहीत्वाऽद्भिश्च शोधयेत्॥**
**एका द्वे वाथवा तिस्रो मृदः पादद्वये पृथक्।**
**पावावाजनुतः शोध्यौ करौ त्वामणिबन्धनात्॥**[2]

लघुशंकायाः विषयेऽपीत्थं कथितम्—

**एका लिंगे करे तिस्र उभयोर्मृत्तिका द्वयम्।**
**एकैकया मृदा पादौ प्रज्वाल्य तु शुचिर्भवेत्॥**
**मूत्राशौचं समाख्यातं शुक्रे तद् द्विगुणं भवेत्।**[3]

मूत्रोत्सर्गानन्तरं नलेन शास्त्रीयविधानानुरूपं गण्डूषं नकृतमिति—

**कृत्वा मूत्रमुपस्पृश्य — — — —**[4]

इति श्लोकेन स्पष्टम्। अत्र "उपस्पृश्य" शब्द प्रयोगो दृश्यते। उपस्पृश्य शब्दस्य पर्यायः आचमनं गण्डूषं वा। मूत्रोत्सर्गोपरान्ते आचमन विषय इत्थं प्रतिपादितम्—

**मूत्रोत्सर्गे तु चतुरः पुरीषे त्वष्ट संख्यकान्।**
**कुर्याद् द्वादश गण्डूषान् भोजने दन्त धावने॥**[5]

अनेनेत्थं प्रतीयते यन्नलेन गण्डूषादिकं तु कृतं किन्तु पाद प्रक्षालन नैवकृतमत एव शरीरे कलि प्रभावोऽजायत्।

अन्यस्मिन् स्थले यत्र नलः दमयन्तीं परित्यजति तत्रापि नलः आचारशास्त्रास्योल्लंघनमकरोत्। पुष्करेण निष्कासितो नलः कान्तारे परिभ्रमन्

१. वही, श्लोक १४
२. आ० पं०
३. वशिष्ठ स्मृति
४. म० भा० व० प० अ० अ० ५६ श्लोक ३
५. आ० पं०

एकस्मिन्दिने सायंकाले कस्मिन्नपि जीर्णे सभा मण्डपे दमयन्त्या सह सायंकालिकं कृत्यमसम्पाद्य सुष्वाप—

स वै विवस्त्र मलिनो विकचः पांसु गुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणी तले ॥[1]

नलः पृथिव्यामाशयिष्ट, किन्तु शयनात्पूर्वं यः आचारः करणीयस्तस्य परिपालनं नाकरोत् फलतः रात्रौ तस्य मनसि दमयन्त्याः परित्यागस्य दु.संकल्पः प्रादुभूतः। यदुभयोर्वियोगस्य प्रधानं कारणं जातम्। शयनात्पूर्वं किमनुष्ठेय-मस्मिन् विषये नित्यकर्मपद्धतौ विशेषेण वर्णनं वर्तते। सायंकाले शयनं नैव विधेयम्। शयनात्प्राक् हरिस्मरणं स्वनिरीक्षणं च प्रकर्तव्यम्—

प्रत्यहं प्रत्यवेक्षेत् नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिव ॥[2]

सायंकाले शयनात्प्राक् हस्तौ पादौ च प्रक्षाल्य दीपं प्रज्ज्वाल्य भगवत्स्मरण पूर्वकं पुराणश्रवणादिकं कृत्वा शयनं करणीयम्। अरण्ये वर्तमानेऽपीदं कृत्यं सुकरम् हस्तौ पादौ च प्रक्षाल्य भगवत्स्मरणे न कोऽपि परिश्रमः। शयनविधि-विषय इत्थमुक्तम्—

प्राच्यां दिशि शिरः शस्तं याम्यायामथवानृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ।[3]
शून्यालये श्मसाने च एक वृक्षे चतुष्पथे ।
महादेवगृहे वापि मातृवेश्मनि नस्वपेत् ॥
न यक्ष नागायतने स्कन्दस्यायतने तथा ।
कूलच्छायासु च तथा शर्करालोष्ट पांसुषु ॥
न स्वपेच्च तथा भूमौ विना दीक्षां कदाचन ।
धान्य गोधन विप्राणां गुरुणां च तथोपरि ॥[4]

उपर्युक्तैः श्लोकैः सम्यग्रूपेणावबोधुं शक्यते यत्शून्यागारे रात्रि शयनं निषिद्धम्। रजसि शयनं नैवं विधेयम्। "शर्करालोष्ठ पांसुषु" इति पदेनाय-मेवाशयः व्यक्तो भवति। नलेन शून्यायतने शयनं कृतम्। अथ च "नलचरिते" "पांसुगुण्ठितः" इति पदेन धूलिशयनमपि अभिव्यज्यते।

---

१. म० भा० व० प० अ० ५६ श्लोक ६
२. सुभाषितम्
३. विष्णु पुराण
४. उद्धृत—कर्मठ गुरू पृष्ठ ४३

अनेन स्पष्टं प्रतीयते यन्नलेन प्रमादवशादाचारशास्त्रस्त्रोल्लंघनं विहितं तदेव कालान्तरे तस्मै दुःखप्रदं जातम् । नलचरिते महर्षिणा व्यासेन कथा-वस्तुनि सर्वाणीमानि सूक्ष्मातिसूक्ष्मानि वर्णनानि सन्निविष्टानि । विचारपूर्वक-मनुशीलनेन ज्ञायते यदीमानि वर्णनान्यागामिनि घटनाचक्रे कारणानि जायन्ते । आचार्य शास्त्रस्य विषये तु संस्कृत वाङ्मये नैकेषां ग्रन्थानां विशालं भाण्डारं वर्तते । अत्र नलचरिते कथानके परोक्षरूपेण सम्बद्धानां कतिपयाचारशास्त्रीय-नियमानां समीक्षणमेव सम्पादितम् ।

नलचरिते वर्णितानि स्थलान्यपि तथ्य मिदं स्पष्टतया प्रतिपादयन्ति यदाचारस्य परित्यागो महद्दुःख कारको भवति । वस्तुतः ऋषीणां कथनं समीचीनमेवासीत्—"आचारः प्रथमो धर्मः" इति ।

## नल चरिते शकुनशास्त्रम्

परम तत्व स्वरूपिणः परमात्मनः इच्छामात्रेण समुदभूतायां सृष्टौ समस्ताः स्थावर जंगमाः जीवाः अभिन्नतया अन्योन्याश्रिताः सन्ति । जीवनस्य प्रकृतेश्च मध्ये सम्बन्धं विना जीवनस्य अस्तित्व कल्पना दुष्करा । अस्माकं पूर्वजाः महर्षयः अनुभव पूर्वकं विचार मन्थनं कृत्वा तदनन्तरं समस्तानां मानवाना-मन्योन्याश्रितसम्बद्धपक्षस्य शिवदं सिद्धान्तं स्थापयामासुः । वेदानां षडंगानि गानि सन्ति व्याकरण, शिक्षा, कल्प, निरुक्त, ज्योतिष, छन्दांसि । एषा वेदा-गानां महर्षिभिः विशदं विवेचनं कृतम् ।

यात्रादौ शकुनस्य शुभाशुभ फलं भवत्येव । एतदर्थं ज्यौतिष शास्त्रे शकु-नानां शुभाशुभ विचारोऽपि वर्तते । अप्रत्यक्षाणि सर्वं शास्त्राणि विवादग्रस्तानि केवलम प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्राकौं यत्र साक्षिणौ । वस्तुतः ज्यौतिषं शास्त्रस्य गणित-फलित-संहिता रूप त्रिस्कन्ध ज्यौतिषस्य बृहतरं साहित्यमुप-लभ्यते । अनेके ग्रंथाः सूर्य सिद्धान्त शिरोमणि, सिद्धान्त तत्व विवेक, पंचस्वराः नरपति जयचर्या, शकुनावलि प्रभृतयः शकुनशास्त्रस्य शुभाशुभ फल प्रतिपादकाः ग्रंथाः सन्निहितार सन्ति । प्रस्तुते नल चरिते वर्णितेषु स्थलेषु महर्षिणा वेद व्यासेन कथाप्रसंगस्य गति विधानमग्रेसारयितुं भावि घटना चक्रग्यानुरूपमेव शकुनादि व्याजेन कथावस्तु स्वरूपं सिंगितम् । एषां समीक्षणात्मकमध्ययनं मिहाभीष्टम् । कस्यापि भाविन्याः घटनायाः कृते प्रकृतिरेवं विधानि लक्षणानि प्रकटयति, यानि समवलोक्यानुमीयते यत् आगामिनी घटना शुभशुभावा । अभुवैव फलाफलं शकुनशास्त्रं प्रतिपादयति । भगवता व्यासेन आदि कविना वाल्मीकिना च यानि काव्य तत्वानि स्वकीयासु कृतिषु समादेशितानि, पर-

र्तिनः कवयोऽपि तानि-तानि उपादानानि यथावत् स्वकीयेषु काव्येषु स्वीकृतवन्तः। शकुनशास्त्रस्य इयं प्रासंगिकी चर्चा अस्मिन्नेव क्रमे विधीयते।

कविकुलगुरुः कालिदासः स्वकीये मेघदूत काव्ये यक्षेण प्रियायै सान्त्वनां दातुं स्वकीयः सन्देशः मेघमेव दूतं विधाय अलकापुरी प्रतिगन्तुं शकुनशास्त्रमवलम्ब्य प्रसंगत्वेन निर्देशो विहितवान्—

**'वामश्चायं नदति मधुरो चातकस्ते सगन्धः।'**[1]

नलचरिते एकस्मिन्नेव स्थले शकुनशास्त्रस्य प्रयोगोविहितः यदा राजा नलः ऋतुपर्णस्य भवने छद्मवेषेण बाहुक नाम्ना निवासमकरोत् तदा सुदेव नामकेन ब्राह्मणेन इयं सूचना दत्ता। यद् दमयन्ती पुनः स्वयम्वरं कर्तुमभिलषति। तदा सः मनसि व्याकुलोभूत्। विचारविमर्शानन्तरं सः कुण्डिनपुरं गत्वा अस्य समाचारस्य सत्यतां वेत्तुं निश्चयं कृतवान। अश्व संचालन कौशलेनः सः एकस्मिन्नेव दिने योजनशतमध्वानं समुल्लंघ्य विदर्भान् ययौ, तत्र दमयन्ती तस्य प्रतीक्षायामेव नलस्य स्यन्दननिर्घोषं श्रुत्वा तस्य ध्वनिनानासा निश्चयम करोत् यदयं ध्वनि नलस्य रथ इवास्ति। जलदगर्जनमिव रथस्य निःस्वनं श्रुत्वा मयूराः अनृत्यन्। हस्तिनः गजशालासु आबद्धाऽपि शब्दं चक्रुः—

**'दमयन्ती चशुश्राव रथ घोषं नलस्य तम्।**
**यथा मेघस्य नदतो गम्भीरं जलदागमे॥**
**नलेन संगृहीतेषु पुरेवं नल वाजिषु।**
**सदृशं रथनिर्घोषं मेने भैमी तथा हयाः॥**
**प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः।**
**हयाश्च शुश्रुवस्तत्र रथघोषं महीपतेः॥**
**ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा।**
**प्रणेदुरुन्मुखा राजन् मेघोदयमिवेक्ष्य ह॥'**[2]

नलस्य प्रत्यावर्तने नायकनायिकयोः पुनर्मिलन रूपिणः आगामिनः शुभ सूचक घटनाक्रमस्य विषये अत्र हस्तिनां मयूराणां च निनादः व्यासेन उट्टंकितः। यतः प्रस्थान समये प्रत्यागमन समयेवा मयूराणां हस्तिनां च हर्षोद्बोधकः शब्दः शुभसूचकः—

---

१. मेघदूत पूर्वमेघ कालिदास
२. म० भा० व० प० अ० ७१ श्लोक ४-७

'प्रस्ताने मंगलं वाक्यं गर्जितं मेघ हस्तिनोः ।
प्रदक्षिणं फलेवृक्षे वामस्य च रुतं जितम् ॥
शुभा गीतादिशब्दाः स्युरीदृशं स्याद्धि सिद्धये ।
अनर्थं गोरथाक्रन्दो दक्षिणे विरुतं क्षुतम् ॥
वेश्याक्षुतो नृपाः कन्या गौर्दन्ती मुरध्वजौ ।
क्षीराज्यदधिशंखाम्बुच्छत्रं भेरी फलं सुराः ॥
तण्डुला हेमरूप्यं च सिद्धयेऽभिमुखा अमी ।
सकाष्ठः सानलः कारुर्मलिनाम्बरभारभृत् ॥
गलस्थटंको गोमायुर्गृध्रोलूक कर्पर्दिकाः ।
तैलं कपालकार्पासा निषेधे भस्म नष्टये ॥'[१]

अग्निपुराणस्य अस्मिन् खण्डे इदं स्पष्टं प्रतीयते यद् मयूराणां हस्तिनां च शब्दः मंगल सूचकः । नलचरिते अस्या एव शकुन शास्त्रीय परम्परायाः अनुपालनं विहितं । शकुन शास्त्रस्य गहनो गम्भीरश्च विषयः विस्तारमपेक्षते, यः स्वतंत्रः शोधस्य विषयः । अतएव विस्तरभिया विस्तरेण विवेचनं नैव विहितम् ।

## नलचरिते पाकशास्त्रम्

प्रस्तुते नलचरिते प्रकीर्णतया पाकशास्त्रस्य विषयेऽपि किंचित् संकेतितमस्ति । उत्तर नलचरिते दमयन्त्याः पुनः स्वयंवर व्याजेन विदर्भे समागतं बाहुकामिधं नलं परिज्ञातुं दमयन्ती स्वदूतीं केशिनीं बाहुकस्य परीक्षणार्थं तत्पार्श्वे पौनः पुन्येन प्रेषयत् । नलः पाक कलायामपि विचक्षण आसीत् । विवाह समय एव शुक्रादिभिदेवैः सम्प्राप्तवरलाभो नैषधः सूदकर्मणि वैशिष्ट्यमाप । यदा स ऋतुपर्णस्य पुरतः स्वपरिचयं प्राकाशयत्तदा कथितवान्—

'अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥
अर्थ कृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्न संस्कारमपि च जानाम्यन्यैर्विशेषतः ॥'[२]

अन्य संस्कार कर्मणि वाजिशालाध्यक्षे च नियुक्तो नलः ऋतुपर्णेन । यदा केशिनी दमयन्तीवचनमाकर्ण्य बाहुकस्य परिचय पृष्टवती तदा तेनोत्तरितम्—

---

१. अग्नि पुराण-शकुन विचार-अध्याय २९४ श्लोक ३६-४०

२. म० भा० व० प० अ० ६४ श्लोक २-३

'अहमप्यश्व कुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ।।'[1]

नलस्य पाककलायां प्रसिद्धिरासीत् । रमयन्ती तेनपाचितस्यान्नस्यान्नस्या-स्वादनेनैव तस्याभिज्ञानं कृतवती । दमयन्त्या आज्ञापूर्वकं वाजिशालायामागता केशिनी नलस्य सर्वं भोजन पाचनादिकं कर्म दृष्ट्वा दमयन्त्यै न्यवेदयत्—

'ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितः तत्र राज्ञा तु मांसं बहु च पाशवम् ।।
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
तेतेनावेक्षितः कुम्भाः पूर्णा एवाभवं स्ततः ।।
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय विस्युतं समादधत् ।।
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता ।।'[2]

नलस्य पाककर्मणि देवः प्राप्तवराणां प्रभाव आसीत् । यतोहि तस्य पाक क्रियाया यद्भुत संयोगानामेव बाहुल्यं वरीवर्ति । पाकशास्त्रस्यापि विषये प्राचीनेषु वैदिक ग्रन्थेषु सवनीयपशु साधनविषये उल्लेखाः प्राप्यन्ते । अथर्ववेदे शौनक संहितायां पैप्पलादसंहितायां चास्य विषये समुल्लेखाः प्राप्यन्ते ।

चौखम्बा संस्कृत सीरीज नामकात् मुद्रणालयात् प्रकाशिते एकस्मिन् सूचीपत्रे मया 'नलपाकः' नामकस्य ग्रन्थस्य नाममवाप्तं यस्य विषये तत्रोल्लि-खितमासीत् यदयं ग्रन्थः शीघ्रमेव प्रकाशमेष्यति । नाद्यावधि तस्य प्रकाशनं जातम् । ग्रन्थोऽयं पुण्यश्लोकस्य नलस्य पाक विद्याया सह सम्बद्धो नवेति कथनं साम्प्रतं दुष्करम् । ग्रन्थनाम्ना यद्यपि प्रतिभाति यन्नलपाकक्रियामाधारी कृत्यैव ग्रन्थोऽयं लिखितो भविष्यति परं नेदं निश्चप्रचं वक्तुं शक्यते ।

नलचरिते वर्णितानां व्यावहारिक शास्त्राणां विषये समीक्षणात्मकं यदध्ययनमत्र कृतं तेनानुमीयते—महर्षिः व्यासः स्वप्रातिबलेन वैदिकबीजरूपे-ऽवस्थितं नलचरितमुपबृंहणपूर्वकं यदा महाभारते प्रस्तुतवांस्तदा तेन प्रायशः

---

१. म० भा० व० प० अ० ७२ श्लोक १२
२. म० भा० व० प० अ० ७३ श्लोक १०-११-१२-१३

सर्वेषु नलचरितेन सह सम्बद्धेषु क्षेत्रेष्वपि सुबहु विचारः कृतः। तदनन्तरमेव तेन नलचरिते विभिन्नानां शास्त्राणां प्रासंगिकं वर्णनं समुपन्यस्तमिति इदमपि च नितान्तत्वेन सत्यं यदत्र नलचरिते वर्णितानि यानि शास्त्राणि दृश्यन्ते तानि सर्वाण्येव स्वयं स्वरूपं सूक्ष्मतया प्रसंग वशाद् यद्यपि प्रदर्शयन्ति तथापि तद्वर्णनं ततच्छास्त्राणां प्रामाणिकेन वर्णनेन सह साम्यभावहतीति।

नलर्तुपर्णयोः परस्परमक्षाश्वहृदयविद्ययोरादानप्रदानं तात्कालिके समार्जे विशिष्ट घटना इवाभूत् यतो हि प्रायशः सर्वेषु पुराणेषु प्रक्रृतेसन्दर्भस्य वर्णनं विहितम्। अश्व-शास्त्रस्य च व्यावहारिके जीवने सुबहूपयोगित्वं वर्तते। यद्यपि शकुन शास्त्र पाकशास्त्रयोरपि समुपयोगित्वं प्रभूततरमस्ति तथापि प्रसंगाबशादेव समागतानामेतेषां व्यावहारिकशास्त्राणां वर्णनं विस्तरेण संकोचेन च तत्र तत्र व्यासेनोपन्यस्तं, सर्वं च तद्वर्णनं प्रामाणिकं वर्तत इति।

दशमोऽध्यायः

# नलचरितान्तर्गतानां देशादिस्थलानां भौगोलिकं वर्णनम्

नलचरितस्यैतिहासिकपृष्ठभूमौ कोऽपिविवादो नैवोपस्थापनीयः । वैदिककालादारभ्य वर्तमानं यावत् सहस्रावधिवर्षाणामन्तरालेऽपि नलचरितस्यास्तित्वं काव्यजगतिस्थितम् । तथ्यमिदं प्रकटयति यन्नलचरितस्यैतिहासिकं याथार्थ्यं निःसन्दिग्धम् । ऐतिहासिक रूपेण नलचरिते सिद्धैसतितस्य भौगोलिकस्थलानामस्तित्वविषयेऽपि जिज्ञासा स्वाभाविकी । नलचरितस्य कथावस्तुनः आधारे येषां नदी नगर देशादीनां विशेषरूपेण वर्णनमुपलभ्यते तेषामवलोकनेनेदं निर्विवादतया वक्तुं शक्यते यन्नलचरितसम्बन्धिनां स्थानविशेषाणां भौगोलिकमस्तित्वं निश्चयेन सिद्ध्यति । यथा राम कृष्णयोश्चरितैः सम्बद्धानां स्थलानां भौगोलिकमस्तितत्र सर्वैः स्वीकृतमत एव तानि स्थानानि विशेषतीर्थरूपेण ख्यातानि तथैव पुण्य श्लोकस्य नलस्य लीलास्थलानां निश्चयपूर्वकं परिज्ञानेन तानि स्थलानि समेषामस्माकं श्रद्धास्पदानि भविष्यन्तीति ध्रुवम् । नलचरितस्याकर्षणं पौराणिकैरितिहासज्ञैः कविभिः कथाकारैः नाटककारैश्च संस्कृतेष्वथ च जैनवाङ्मयसूरिभिस्तत्तत्कालविशेष समये स्वकीयासु कृतिसु सुबहुशः समादृतमासीत् । नलचरितेन सम्बद्धानां भौगोलिक स्थलानां समुद्घाटनेन गवेषकाणां कृते महत्वपूर्णा सहायता मिलिष्यतीति । नलचरितोपवर्णित स्थलैः सह सम्बद्धत्वात् बहुभिः कविभिः चरितस्यास्य वर्णनं समुपन्यस्तम् । उदाहरणत्वेन नलचम्पू काव्यस्य निर्मातुः त्रिविक्रम भट्टस्य नाम उपस्थापयितुं शक्यते ।

नलचरितस्य महाभारतीय कथावस्तुन अनुशीलनेन एषां स्थलानां परिज्ञानं प्राप्यते । तेषु निषधदेशस्य, विदर्भदेशस्य, चेदिदेशस्य, दशार्णदेशस्य, निषिधापुर्याः, कुण्डिनपुर्याः, अयोध्यायाः, कोशलदेशस्य, विन्ध्यपर्वतमालायाः, पयोष्णी

प्रभृति नदीनां च विशेषतश्चर्चा वर्तते । एषां स्थानानां नामोल्लेखो महर्षिणा व्यासेन कथावस्तुनः घटनाक्रमस्यानुसारेण येन रूपेण कृतस्तेनेदं सिद्ध्यति यच्चरितलेखको महर्षिः व्यासः भारतस्य भौगोलिक स्थितविषये सम्यकरूपेण परिचित आसीत् । यद्यपि महाभारतीय नलचरितस्य घटना वैदिककालिकी घटना वर्तते तथापि महाभारतकालात् पूर्वोमयं घटना घटितेत्थमपिन्येच्चेत्तर्हि तस्मात्कालादाभ्यभ्याद्यावधि भारतस्य भौगोलिकसीमाविषये बहुशः परिवर्तनं जातम् । प्राकृतिकैः राजनीतिकैश्च कारणैः पृथिव्याः भौगोलिकस्थितौ परिवर्तनं जायत अयं सिद्धान्तः सर्वस्वीकृतः—

पुरायत्र स्रोतः पुलिनमधुना तत्र सरितः,
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं,
निवेशः शैलानां तदिदमति बुद्धि दृढ़यति ॥[1]

भवभूतेरिदं कथनं भौगोलिकं परिवर्तनस्य सिद्धान्तं दृढ़यति । नलचरितेन सम्द्धानां स्थानाविशेषाणांविषये वर्तमान भौगोलिक स्थलानां वर्णनं निश्चयात्मकत्वेन कर्तुं नशक्यते तथापि ग्रन्थस्यन्तिः साक्ष्याधारेण पुरातत्त्वविभागस्यान्वेषण कर्तृभिः प्रतिपादितानां तथ्यानामाधारेण च पौराणिक स्थलानां वर्तमानाकालिकस्थति विषये यथा सम्भवं निश्चयात्मकं ज्ञानं कर्तुं शक्यते । अमुंभावं लक्ष्मीकृत्य नलचरितोपवर्णितानां निषध-विदर्भ-कुण्डिनायोध्यादि स्थलानां-भौगोलिकं वर्णनं क्रमशः क्रियते ।

## निषधः

नलचरितस्य प्रधाननायकस्य नलस्य क्रीडास्थली निषिधापुरी निषधदेशोवा वैदिककालादेव प्रख्याता आसीत् । शतपथब्राह्मणे 'नलो नैषधः' इदं प्रत्युक्तम् ।[2] निषधनाम्ना देशविशेषो निषध पर्वतश्चोभयोरपिस्थानयोर्वर्णनं पुराण साहित्य उपलभ्यते । अयं निषधपर्वतः सुमेरु पर्वतस्य दक्षिण दिग्विभागे हरिवर्ष नाम्नि वर्षेऽवस्थितो वर्तते । जम्बूद्वीपे नववर्षाणि सन्ति येषु क्रमशः भारत-किंपुरुष-हरि-इलावृत-रम्यक--हिरण्यमय-उत्तरकुरु--भद्राश्व--केतुमालसंज्ञकानि-नववर्षाणि

---

१. उत्तर रामचरितम्-भवभूति-अंक १ श्लोक ७२
२. शतपथब्राह्मण—२-४-१-२

पुराणेषूपवर्णितानि । निषध पर्वतस्य स्थिति हरिवर्षेऽस्ति विष्णु पुराणे[1] एवं च भागवतादि पुराणेष्वप्यस्योल्लेखो विहितः—

"एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयो युतो योजनोत्सेवा हरिवर्ष किम्पुरुष भारतानां यथा संख्यम् ।"[2] निषध पर्वतस्य समीपवर्तिनि भू भागे निषधदेशस्यास्तित्वं प्रतीयते । महाभारतीय नलचरितस्य कथायाः समाप्तौ व्यासदेवेनोक्तं यत्पुष्करं पराजित्य नलोजम्बूद्वीपे समस्तेषु नृपेषु प्रसिद्धोऽजायत्—

**तथा प्रकाशतां या तो जम्बूद्वीपेऽथ राजसु ।**[3]

अनेन प्रमाणेन नलो जम्बूद्वीपे प्रसिद्धो बभूव न केवलं भारत एव वर्षे । जम्बू द्वीप शब्दस्य प्रयोगेणेत्थं प्रतीयते यन्नलस्य ख्यातिः समस्ते जम्बू द्वीपे प्रसृता आसीत् न तु केवले भारतवर्षे । महाभारतीय नलचरिते भारतवर्षस्य नामोल्लेखोऽपि नास्ति । पौराणिके काले जम्बूद्वीपस्यान्तर्गतं भारत खण्डं भारतवर्षं वा एकस्य भू-भाग विशेषस्य रूपेण प्रख्यातमासीदिति । निषध पर्वतस्य सम्बन्धेन निषधापुरीं निषधदेशो वा भारतवर्षात् बहिर्मूर्तं इति वा वक्तुं न शक्यम् । नलस्य विषये नैषध शब्दस्य प्रयोगः सुबहुशः विद्यते ।

आधुनिकानामितिहासविदां धारणानुसारेण निषधदेशस्यावस्थितिः आधुनिके मध्यप्रदेशे पूर्वं मध्य भारत नाम्ना प्रसिद्धे स्थले ग्वालियर सम्भागस्य निकटे शिवपुरीति जनपदेऽवस्थितै "नरवर" नामके स्थाने आसीत् । ग्वालियर राज्यस्य दक्षिण दिग्भागे यापर्वत श्रृंखला प्रारब्धा सा शनैः शनैः सान्द्रा सती विन्ध्यपर्वतेन सह मिलति । सम्प्रति वर्तमान "नरवर" नामकं नगरं नलस्य राजधानी "नलपुर" नाम्ना प्रसिद्धा आसीत् । भाषा विज्ञानस्य दृष्टिकोणेन नलपुरस्येति शब्दस्य परिवर्तितं रूपं नरवर इति स्वाभावाविकमेव । नलपुरस्यविषये श्री हर्षेण नैषधीय चरिते उल्लेखोविहितः यस्यानुसारेण इन्द्रो नलाय विवाहसमये वरमदात् यत्तवनाम्ना प्रसिद्धं नलपुरं नाम नगरम् "असी" इति नद्यास्तटे भविता—

---

१. विष्णु पुराण २।२।१२-१३

२. श्रीमद्भागवत स्कन्ध पंचम अध्याय १६ श्लोक ९

३. म० भा० व० प० अध्याय ७८ श्लोक ४

"तवोप वाराणसि नामचिह्नं,
वासाय पारेऽसि पुरं पुरास्ते ।
निर्वातुमिच्छोरपि तन्नभैमी--
सम्भोगसंकोचभियाधिकाशि ॥"[1]

श्लोकेनानेनेत्थं प्रतीयते यन्नलस्य विवाहानन्तरमेवासीनद्यास्तटे नलपुर-नामकं स्थानमभूत् । विवाहात्पूर्वं नलस्य राजधानी निषधापुरी निषधदेशो वा आसीत् । इतिहासकारणां मतमिदमस्ति यत्साम्प्रतिको नरवरएव नलपुरमस्ति यद्यपि सिन्ध नद्यास्तटे वर्तते—

"Indra amog one of his boons granted to Nala, tells him that a city bearing Nalas name will be established near Banaras beyond the river Asī. Narayona names this as Nalapura which is indentified by Sri H. C. Roy with modern Narwar, situated on the bank of river Sindh in the Gwalior Residence. He writes—"The modern Rajputs tribes called Kachawaha claim to be the descendent of Kusha son of Rama. According to bardic tradition after leaving this parental abode they created the famous castle of Rohtas and then a section of tribe in company of Raja Nala migrated westward and founded the kingdom and city of Narwar." Classically styled Naishadha in V. S. 351 (A. D. 295).[2]

प्रख्यात इतिहासकारो नन्दूलाल डे महाशयोऽपि इदमेव तथ्यं स्वीचकार—
"Narwar, the capital of Nala (Tod's Rajasthan vol. 1 p. 140 MBH Vanacha 53). Narwar is the contraction of Nalapura. It was the kingdom of nine Nagas of the Puranas. It is situated on the right bank of the Sindha. Forty miles to the south-west of Gwalior. Lesson places Naishadha the kingdom of Nala

---

१. नैषिधीय चरितम्—श्रीहर्ष-सर्ग १४ श्लोक ७२ ।

2. The Dynestic History of Northern India-vol. I page 833.

along the Satpura hills to the north-west of Berar."[१]

जेम्स बर्गेस महोदयास्यानुसारेण निषधस्यावस्थितिः आधुनिके मालवाप्रान्ते दक्षिणस्यां दिशि विन्ध्यपर्वतमालायाः अधित्यकामस्ति ।

"Naishadha the kingdom of Nala must belong to the south of Malva among the Vindhya hills or perhaps as lesson has placed it along the Satpura hills to the north-west of Berar"[२]

निषधस्य इमे उभेऽपि भौगोलिक स्थिती विचारणीये । डे महोदयेन नलपुर विषये यत्कथितं यत्पुराणेषूपवर्णितानां नवनागवंशीय नृपाणामियं क्रीड़ास्थली अभूदनेनेत्थं प्रतीयते यन्नलस्याप्यावासोऽत्रैवासीत् । नागराजस्य कर्कोटकस्य नलेन सह मैत्री पुराणेषु सुप्रसिद्धैव, अथ च महाभारतीय नलचरितस्य कथा-वस्तुन अन्तः साक्ष्येण एवं विधानि तथ्य पूर्णानि स्रोतांसि विदितानि भवन्ति येः नलपुरमेव नलस्य निवास स्थानं सिद्ध्यति । नलदमयन्त्यो पुष्करेण पराजिते स्वीयाद्देशात् बहिः त्रीणि दिनानि यावदितस्ततः वने परिभ्रमणं चक्रतुः । अतः परं चतुर्थे दिवसे पक्षिणःग्रहीतुकामो नलः यदा स्वकीयमुतरीयं न्यक्षिपत् तदा ते पक्षिणस्तस्य वस्त्रमपि प्रगृह्य आकाशे उद्पतन् । तदा दुःखाभिभूतो नलः स्वीयां पत्नीं दमयन्तीं पौनः पुन्येन तस्याः पितृगृहस्य मार्गमुपदिदेश—

**"एते गच्छति बहवहः पन्थानो दक्षिणापथम् ।**
**अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥**
**एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।**
**आश्रमाश्च महर्षीणांबहुमूलफलान्विताः ॥**
**एष पन्था विदर्भाणामसौ गच्छति कोसलान् ।**
**अतः परं च देशोऽयं दक्षिणे दक्षिणापथः ॥[३]**

---

१. Geographical Dictionary of ancient and mediaval India by Nandoo Lal Day 2nd eddition page 141, London 1927.

२ Antiquities of Kathiavad & Kutchh—by Burgess, page 131 London India Museum 1857.

३. म० भा० व० प० अ० ५८ श्लोक २०, २१, २२ ।

एभिः पद्यैः भौगोलिक स्थितेश्चित्रणं यथाविहितं तथा वर्तमाने काले मध्य प्रदेशस्य गुना जनपदस्य बाह्य भागेन सह साम्यमेति । नरवरतोऽनुमानतः षष्टि क्रोश परिमितं दूरे स्थितिमिदं स्थानम् । अस्मात् स्थानात् विभिन्नेषु त्रिषु स्थानेषु पृथक्-पृथक् पंथानः गच्छन्ति । येषामुपर्युक्तेन वर्णनेन सह साम्यं मिलति । अस्मात्स्थानादेकः ऋजुः पन्था अवन्ती प्रतिगतः, अवन्तिकायाः वर्तमानं नाम उज्जैन इति । द्वितीयो मार्गः गालवपुरीं (ग्वालियर), इष्टिकापुरी (इटावा); प्रयागं वाराणसीं कौशलं च प्रति गच्छति । तृतीयो मार्गः भूपाल नगरमतिक्रम्य इटारसीतः दक्षिण भारतं प्रतियाति । ग्वालियर सम्भागात्प्रारब्धा पर्वतानां श्रृंखला गहनवन प्रान्तेनाच्छादिता वर्तते । उपर्युक्ते स्थलेइयं श्रृंखला विंध्यपर्वतेन सह मिलति । कान्तारे यादृशाणां वृक्षाणां वर्णनं महर्षिणावेद व्यासेनात्र विहितं ते वृक्षाः अस्मिन्भूभागे बाहुल्येनोपलभ्यन्ते—

**"वनं प्रति भयं शून्यं झिल्लिकागण नादितम् ।**
**सिंहद्वीपिरुरुव्याघ्रमहिषर्क्षगणैर्युतम् ॥**
**नानापक्षिगणा कीर्णं म्लेक्ष तस्कर सेवितम् ।**
**शालवेणुधवाश्वत्थतिन्दुकेंगुर्दकिंशुकैः ॥**
**अर्जुनारिष्ट संछन्नं स्यंदनैश्च सशाल्मलैः ।"[1]**

अत्र शाल घव अश्वत्थ तिन्दुकादि महीरूहाणामुल्लेखो वर्तते, इमे वृक्षाः अत्र बाहुल्येन लभ्यन्ते । तिन्दुकवृक्षः लोकभाषाया "तेन्दू" नाम्ना प्रसिद्धः, अस्य पत्राणि धूम्रपानार्थे वर्तिकायां (बीड़ी) प्रयुक्तानि भवन्ति । एभिः साक्ष्यैरपि नरवरमेव नलपुरं निषधदेशस्य राजधानी रूपेण स्वीकर्तु शक्यते ।

अस्य विपरीतं बर्गेज महोदयस्य मतमपि विचारणीयम् । तस्यमतेनामुं प्रदेशं मालवा प्रदेशस्य दक्षिण दिग्विभागे स्वीक्रियेत्चेत्तर्हि महाभारतस्योपर्युक्तेन साक्ष्येण साम्यं घटते । यतः विन्ध्य पर्वतस्य विशाले क्षेत्रे एषां वृक्षाणां बाहुल्यमथ च व्याघ्रादीनां पशूनां निवासः प्रायशः सर्वत्र एव, तस्मिन् सम्भागे एतेषां वृक्षाणां बाहुल्यं साम्प्रतमपि दरीदृश्यते । मालवायाः दक्षिणवर्तिनः प्रान्त भागाद् दक्षिण दिशंयावत् अथ च जबलपुर-कूटनीतः प्रयागराजं कोशलदेशं च यावन्मार्गः उपलभ्यते । अथ च महाभारतस्योद्धरणे पयोष्णीति नद्याः उल्लेख वर्तते सा नदी पूर्णेति नाम्नाऽद्यापि तत्र प्रवहति । एकमन्यदपि तथ्य मिदं यत्प्राचीनकाले-

---

१. म० भा० व० प० अ० ६१ श्लोक १, २, ३ ।

ऽधिकांशतः विवाहसम्बन्धाः समीपस्थ प्रदेशेष्वेव क्रियन्ते । नलचरितेन सह सम्बद्धानां स्थानानां स्थितिः मालवायाः सन्निकटे अस्ति । दशार्ण देशे दमयन्त्याः मातुलगृहमासीत् । चेदिदेशेः सम्प्रति कलिंग नाम्ना उड़ीसा प्रान्ते वर्तते, दमयन्त्याः मातृष्वसा चेदिराजस्य सुबाहोः माता अवसत् । नलेनवियुक्ता दमयन्ती बहुकालं यावत् वने बभ्राम । कठिन परिस्थितावपि सुरक्षिता सा दिनत्रयं यावत् गहने वने भ्रमन्ती उत्तरस्यां दिशि एकमाश्रमं समासादितवती । तत्रस्थेतपस्विभिः धृतधैर्या सा अग्रे उत्तर दिशि चचाल । कामपि नदीमुतरन्तं सार्थवाहम् अपश्यत् । सा नदी वेतसवृक्ष समाकुला—

**"ददर्शाथ महासार्थे हस्त्यश्वरथ संकुलम् ।**
**उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।।**
**सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ।**
**प्रोद्घुष्टां क्रौंचकुररैश्चक्रवाकोपकूजिताम् ।।"[1]**
**कूर्म ग्राह झषाकीर्णां पुलिनद्वीपि शोभिताम् ।**

कालिदासः स्वकीये मेघदूते यक्षेण प्रेषितं मेघं रामगिरिपर्वतस्याधः प्रवहमानां वैतसैर्वृतामेवं विधामेव नदीमवर्णयत्—

**"स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं ।**
**दिङ्नागानां पथिपरिहरन् स्थूल हस्तावलेपान् ।।"[2]**

अनेन वर्णनेनापि सिद्ध्यति यन्नलस्य राजधानी निषिधा मालवाप्रान्त स्वासीत् । तथापि उपर्युक्तं समस्तमन्तः साक्ष्यं वर्तमानस्य नरवरस्य पक्षेपि घटते ।

## विदर्भदेश

विदर्भदेशस्य चर्चा पुराणेषु बहुशः जाता । विदर्भदेशस्य नामौच्चारणेनैव दमयन्त्याः रुक्मिण्याश्च स्मृतिरनायासेनैव स्मृति पटले समुदेति । अनयोनायिकयोः भारतीय साहित्ये विशेषरूपेण सम्मानं जातम् । त्रिविक्रमभट्टेन विदर्भ देशो दक्षिणस्थो देश इति स्वीकृत्य वर्णनं व्यधायि । विदर्भदेशस्य राजधानी कुण्डिनपुरमासीत् । विदर्भस्योतरे तटे नर्मदानदी प्रवहति ।

---

१. म० भा० व० प० अ० ६१ श्लोक १०६-१०८ ।

२. मेघदूत –कालिदास ।

वर्तमाने काले भूगोलस्यानुसारेण दक्षिणपूर्वमध्य प्रदेशस्य भागः आन्ध्र-प्रदेशस्य निजामराज्यस्य भू-भागः अथ च बरार प्रान्तस्य भू-भागः इत्थं समस्तो भू भागः विदर्भ देशस्य सीमानं दृढ़यति । निषधदेशात् विदर्भराज्यं विस्तृत-यासीत् ।[1]

## कुण्डिनपुरम्

नलचरितस्य नायिकायाः दमयन्त्याः जन्मभूः कुण्डिनपुरी आसीत् । अत एवेयंपुरी प्रसिद्धा जाता । विदर्भदेशस्येयं राजधानी । डौसन नामकानां पाश्चात्य विदुषां मतानुसारेण इयं बरार प्रान्ते स्थिता या अमरावती नगरं वर्तते ततो विंशति कोश पूर्वे आसीत् ।[2] नागपुरे वर्धायां अमरावत्यां च इत्थं प्रसिद्धिरस्ति यत्सुरवती नाम्नि जनपदे यत्कौण्डिन्पुरं नामकं स्थानमद्यत्वे वर्तते । तदैव कुण्डिनपुरमासीत् । अस्मिन् विषये विदुषा नैकमत्यम् । कुण्डिनपुर्याः स्थाननिर्देश विषये नागपुर निवासी पं० राजेश्वर मनोहर काटे महोदयः अनेकानिपत्राणि प्राकाशयत् येषु तस्येदं मतम् यत् वर्तमानो बुल्ढाना जनपदस्य लोणार नामकः प्राचीनो ग्रामः योऽद्यापि विद्यते स एव कुण्डिनपुरम् । नलचम्पूमाधारीकृत्य काटे महोदयः लोणारमेव कुण्डिनपुरं कथयति । लोणरग्रामे वरदेतिनामकं स्रोतः वर्तते, लोणारस्यायं कुण्डः गंगाभोगवतीति नाम्ना ख्यातः यश्चात्यन्त प्राचीनः । कुण्डिन शब्दोऽपि कुण्डेनसहसम्बद्धः । अतएव लोणरमेव कुण्डिनपुरमिति सिद्ध-यति । कुण्डिनपुरी रुक्मिण्याः कारणेत्वनापि प्रसिद्धा । लोणारस्य समीपे भग्ना-वशिष्ट एकस्मिन्नाश्रमे, यः आश्रमः भागर्वमुनेराश्रमः इति कथ्यतेः तत्रभित्तौ बलभद्रस्य रुक्मिणा सह युद्धस्य चित्रमुत्कीर्णं दृश्यते । अनेनापि साक्ष्येण लोणारमेव कुण्डिनपुरमिति स्वीकर्तुं शक्यते ।

उत्तर प्रदेशे इटावा जनपदे पुराणकाले इष्टिकापुरीति प्रसिद्धे स्थले एकः कुदरकोटि नामकः प्राचीनो ग्रामोऽद्यापि समवस्थितोऽस्ति । अत्रत्याः जन-सामान्याः परम्परानुसारेणामुमेव ग्रामं कुण्डिनपुर नाम्ना व्यपदिशन्ति । यद्यपि अस्याः कुण्डिनपुर्याः सम्बन्धा रुक्मिण्यां सह यत् किंचित् युज्यते न तु दमयन्त्या

---

१. कालिदास का भारत—भाग-१ पृ०-१६ डा० भगवतशरण उपाध्याय ।
२. डौसन क्लासीकल डिक्शनरी, चतुर्थ संस्करण, पेज १७१ ।

सह[1] तथापि मतमिदं औचित्याभावात् दमयन्ती पक्षे नितान्तत्वेन त्याज्यं। वस्तुतः वर्तमाने कोण्डिन्यपुरे लोणारेवा कुण्डिनपुरी आसीदिति मान्यतोचिता।

## अयोध्या

सरयूनद्याः दक्षिणे तटेऽवस्थिता इयं नगरी मोक्षदायिकासु सप्तासु पुरीष्वन्यतमा—

**अयोध्या मथुरा माया काशी कांची अवंतिका।**
**पुरी द्वारावती ज्ञेया सप्तैताः मोक्षदायिकाः॥**

महाभारतीय नलचरितस्य कथावस्तुनि अयोध्यायाः वर्णनं राज्ञः ऋतुपर्णस्य राजधानीति रूपे कृतम्। नलचरिते प्रथमं अस्याः नगर्याः उल्लेखो तत्र मिलति यत्र दमयन्ती सारथिना वार्ष्णेयेन सह स्व पुत्री पुत्रं च कुण्डिनपुरीं प्रेषयति-
"अटमानस्ततोऽयोध्यां जगाम नगरीं तदा।
**ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः॥**[2]

तत्पुनः सारिथीः अयोध्यां निवर्तते। पुनः कर्कोटकेन निर्दिष्टो नलोऽयोध्यामुपगम्य तत्र न्यवसत्—

**एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः।**
**ऋतुपर्णस्य नगरे सहवार्ष्णेय जीवलः॥**[3]

अयोध्या भारतवर्षस्य प्राचीनतमा नगरी। मर्यादापुरुषोत्तमस्य भगवतः रामचन्द्रस्य जन्म स्थली क्रीड़ास्थली च। वाल्मीकि रामायणे अयोध्यायाः वर्णनमत्यन्त विशदरूपेणविहितं येन अस्याः नगर्याः वैभवस्य, कलायाः, सभ्यताः, नागरजीवनस्य, संस्कृतेश्च परिचयः प्रचुरतया संजायते। पौराणिक राजर्षि वंशावल्यानुसारेण ऋतुपर्णः रामात् त्रयोदश पितृपुरुषपूर्वीभिक्ष्वाकुवंशेऽभूत्। ऋतुपर्णस्य नलस्य च मैत्री पुराणेषु सर्वत्र उल्लिखिता। अयोध्यायाः विषये प्राचीनाभिलेखानुसारेणेत्थं कथ्यते यत्तस्मिन् समये अस्याः नगर्याः विस्तारः षण्णवति वर्गमीले द्वादशयोजन पर्यन्त आसीत्। अयोध्या कौशल जनपदस्य राजधानी आसीत्। अस्या नगर्यारुत्तरोत्तरं विकासः सप्तम शताब्दीं यावत् यथावदासीत्। यतोहि सप्तमशताब्द्यां चीनदेशीयः यायावरः ह्वेनसांगोऽत्रागतः

---

१. इटावा जनपद के हजार साल, इटावा (उ० प्र०)।
२. म० भा० व० प० अ० ५७ श्लोक २२-२३
३. वही, अ० ६४ श्लोक ८

तेन स्वीये यात्रावृत्ते इत्थमुल्लिखितं यदयोध्यायां विंशति बौद्धमन्दिराणि सहस्र त्रय संख्याकाः भिक्षुकाश्चासन् । वर्तमानेकाले अयोध्या उत्तर प्रदेशस्य फैजाबाद नाम्नि जनपदे सरयू नद्यास्तटेऽवस्थितास्ति । भौगोलिक परिमाणानुसारेण अयोध्या ८२° ४८ उत्तर अक्षांशे एवं च ८२° १२ पूर्व देशान्तरे रेखायां स्थितास्ति । सम्प्रति इदं स्थलं ध्वंसावशिष्टं जातं यत्रतत्र जीर्णानिशीर्णानि मन्दिराणि समवलोक्यन्ते । साम्प्रतं प्राप्तेषु मन्दिरेषु सीता रसोई, हनूमान-गढ़ीति द्वे मन्दिरे प्राचीने स्तः । अष्टादश शताब्द्यां निर्मितानि कनकभवन नागेश्वरनाथ दर्शन सिंह मन्दिराणि दर्शनीयानि सन्ति ।

## कौसलदेशम्

कौसलदेशः उत्तर भारतवर्षीय राज्येष्वेकं सुदृढ़ं राज्यमासीत् । पौराणिक काले तदुपरान्ते च काले कोसलदेशस्य प्रतिष्ठा पूर्ववत् सुस्थिरा प्राप्यते, अस्य-देशस्य राजधानी अयोध्या आसीत् । कोसलदेशस्य द्वौ भागौ स्तः कौसलोत्तर-कौसलौ । कौसल प्रदेशस्यान्तरे अवध प्रान्तं, प्रयागः, पूर्वे गोरक्षपुरं बिहार प्रान्तस्य कानिचित्स्थलानि आसन् । कोसलदेशः तात्कालिक भारतस्यैकं सुसमृद्धं जनपदमासीत् ।

## चेदिदेश

नलचरितस्य वर्णनानुसारेण दमयन्ती नलेन परित्यक्ता सती वनोद्भवान् कष्टानुभूय येनकेनापि प्रकारेण प्राणान् संरक्ष्य चेदिदेशं गत्वा शरणमग्रहीत् । तस्मिन् समये तत्र राज्ञः सुबाहोः शासनमासीत् । सुबाहोः माता दमयन्त्याः मातृष्वसा आसीत् । दक्षिणपूर्वे भारते तात्कालिकेषु राज्येषु चेदिराज्यस्यापि सत्ता शक्तिशालिनी सुसमृद्धा चासीत् । नलचरितस्य साक्ष्यानुसारेणास्मिन्नेव चेदिदेशे सार्थवाह समूहः व्यापारं कर्तुमगमत्—

**सार्थोयं चेदि राजस्य सुबहो सत्यवादिनः ।**
**क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मने ।।**[1]

अनेनेत्थं स्पष्टं प्रतीयते यत्तस्मिन् समये चेदिदेशे उन्नत सभ्यतायाः विकासोऽभूत । अस्य देशस्य राजवंशानां विषये पौराणिकः उल्लेखोनाप्यते ।

वर्तमाने काले चेदिदेशस्य स्थानं भारतवर्षस्य दक्षिण पूर्वे तटे उड़ीसा प्रान्ते कटकस्य पुर्याश्च समीप वर्तिनि गंजम जनपदे स्वीक्रियते । अस्यैव देशस्य

---

१. म० भा० व० प० अ० ६१ श्लोक १२५

